यदाश्रौषं द्वारकायां सुभद्रां
प्रसह्योढां माधवीमर्जुनेन ।
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ
तदा नाशंसे विजयाय संजय ॥ १४३

यदाश्रौषं देवराजप्रवृष्टं
शरैर्दिव्यैर्वारितमर्जुनेन ।
अग्निं तदा तर्पितं खाण्डवे तु
तदा नाशंसे विजयाय संजय ॥ १४४

यदाश्रौषं पुनरामन्त्र्य द्यूते
महात्मनां प्रस्थितानां वनाय ।
ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १४५

यदाश्रौषं हृतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् ।
अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय संजय ॥ १४६

यदाश्रौषं द्रौपदीमश्रुकण्ठीं
सभां नीतां दुःखिता मेकवस्त्राम् ।
रजस्वलां नाथवतीमनाथवत्
तदा नाशंसे विजयाय संजय ॥ १४७

यदाश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय संजय ॥ १४८

यदाश्रौषं चार्जुनो देवदेवं
किरातवेषं त्र्यम्बकं तोष्य युद्धे ।
अवाप तत्पाशुपतं महास्त्रं
तदा नाशंसे विजयाय संजय ॥ १४९

यदाश्रौषं वनवासे तु [3]पार्थान्
समागतान्महर्षिभिः पुराणैः ।
उपास्यमानान् सगणैर्जातसख्यान्
तदा नाशंसे विजयाय संजय ॥ १५०

यदाश्रौषं त्रिदिवस्थं धनञ्जयं
शक्रात्साक्षात् [1]दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं
तदा नाशंसे विजयाय संजय ॥ १५१

यदाश्रौषं तीर्थयात्रा[2]निवृत्तं
पाण्डोस्सुतं सहितं रोमशेन ।

---

1. अ-ख-ग—त्रिदिवास्त्रं　　2. क—प्रवृत्तं

[1]तस्मादश्रौषीदर्जुनस्यार्थलाभं
तदा नाशंसे विजयाय संजय ॥ १५२
यदाश्रौषं वैश्रवणेन सार्धं
समागतं भीममन्यांश्च पार्थान् ।
तस्मिन्देशे मानुषाणामगम्ये
तदा नाशंसे विजयाय संजय ॥ १५३
यदाश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय संजय ॥ १५४
यदाश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत ।
प्रश्नानुक्तान् [2]विब्रुवन्तं च सम्यक्
तदा नाशंसे विजयाय संजय ॥ १५५
यदाश्रौषं तान्यथाज्ञातवासे-
ऽज्ञायमानान्मामकानां सकाशे ।
दक्षान्पार्थान् [3]चरतश्चाग्निकल्पां-
स्तदा नाशंसे विजयाय संजय ॥ १५६

1. क—बृहदश्वा दक्षहृदयं च प्राप्तं
2. अ-ख-ग—विद्रवता; क—विब्रुवता
3. अ-ख—यास्यत:; क—आगत:; ग—आगतान्

यदाश्रौषं कीचकानां वरिष्ठं
निषूदितं भ्रातृशतेन सार्धम् ।
द्रौपद्यर्थं भीमसेनेन [1]सङ्ख्ये
तदा नाशंसे विजयाय संजय ॥ १५७

यदाश्रौषं मामकानां वरिष्ठान्
धनंजयेनैकरथेन भग्नान् ।
विराटराष्ट्रे वसता महात्मना
तदा नाशंसे विजयाय संजय ॥ १५८

यदाश्रौषं सत्कृतां मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय ।
तां त्वर्जुनः प्रत्यगृह्णात्सुतार्थे
तदा नाशंसे विजयाय संजय ॥ १५९

यदाश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य स्वजनात्प्रच्युतस्य ।
अक्षौहिणीस्सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय संजय ॥ १६०

यदाश्रौषं नरनारायणौ तौ
कृष्णार्जुनौ वदतो नारदस्य ।

---

1. ख—सङ्घे

अहं द्रष्टा ब्रह्मलोके सदेति
तदा नाशंसे विजयाय संजय ॥ १६१

यदाश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम् ।
यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय संजय ॥ १६२

यदाश्रौषं कर्णदुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय संजय ॥ १६३

यदाश्रौषं वासुदेवे प्रयाते
रथस्यैकामग्रतस्तिष्ठमानाम् ।
आर्तां पृथां सान्त्वितां केशवेन
तदा नाशंसे विजयाय संजय ॥ १६४

यदाश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शान्तनवं च तेषाम् ।
भारद्वाजं चाशिषोऽनुब्रुवाणं
तदा नाशंसे विजयाय संजय ॥ १६५

यदाश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् ।

त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय संजय ॥ १६६

यदाश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान्दर्शयानं शरीरे
तदा नाशंसे विजयाय संजय ॥ १६७

यदाश्रौषं भीष्ममभित्रकर्शनं
निघ्नन्तमाजावयुतं रथानाम् ।
न चैषां कश्चिद्दृश्यते वध्यरूप-
स्तदा नाशंसे विजयाय संजय ॥ १६८

यदाश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतस्थापयित्वा
तदा नाशंसे विजयाय संजय ॥ १६९

यदाश्रौषं शरतल्पे शयानं
वृद्धं शूरं सूदितं चित्रपुङ्खैः ।
भीष्मं कृत्वा सोमकानल्पशेषां-
स्तदा नाशंसे विजयाय संजय ॥ १७०

यदाश्रौषं शान्तनवे शयाने
पानीयार्थे चोदिते शक्रसूनौ ।

गां भित्त्वाम्भो वारुणेनाददाने
तदा नाशंसे विजयाय संजय ॥ १७१

यदाश्रौषं शुक्रसूर्यौ च युक्तौ
कौन्तेयानामनुलोमौ जयाय ।
नित्यं चास्मांस्त्वापदमावहन्तौ
तदा नाशंसे विजयाय संजय ॥ १७२

यदा द्रोणो विविधानस्त्रमार्गा-
न्निदर्शयन्समरे चित्रयोधी ।
तान्पाण्डवान् श्रेष्ठतमान्नहन्ति
तदा नाशंसे विजयाय संजय ॥ १७३

यदाश्रौषं [1]त्रैगर्तान्महारथान्
व्यवस्थितानर्जुनस्या[2]न्तकाय ।
संशप्तकान्निहतानर्जुनेन
तदा नाशंसे विजयाय संजय ॥ १७४

यदाश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजे [3]नात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय संजय ॥ १७५

1. क—चास्मदीयान् 2. क—अन्तरायम् 3. अ-क-ख—नोक्त

[1]यदाभिमन्युं परिवार्य बालं
सर्वे हत्वा हृष्टरूपा बभूवुः ।
महारथाः [2]पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय संजय ॥ १७६

यदाश्रौषं चाभिमन्युं निहत्य
हर्षान्मोहात्क्रोशतो धार्तराष्ट्रान् ।
क्रोधं मुक्तं सैन्धवे चार्जुनेन
तदा नाशंसे विजयाय संजय ॥ १७७

यदाश्रौषं सैन्धवार्थे प्रतिज्ञां
कृतां तदा मन्युना चार्जुनेन ।
सत्यान्निस्तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय संजय ॥ १७८

यदाश्रौषं श्रान्तहये धनञ्जये
मुक्त्वा हयान्पाययित्वोपवृत्तान् ।
पुनर्युक्त्वा वासुदेवं प्रयान्तं
तदा नाशंसे विजयाय संजय ॥ १७९

यदाश्रौषं वाहनेष्वाश्वसत्सु
रथोपस्थे तिष्ठता चार्जुनेन ।

---

1. ख—अयं श्लोकः ख पुस्तके नास्ति
2. अ-क-ग—मन्यु

सर्वान्योधान्वारितान्पाण्डवेन
तदा नाशंसे विजयाय संजय ॥ १८०

यदाश्रौषं नागबलं दुरुत्सहं
द्रोणानीकं युयुधानं प्रमथ्य ।
यान्तं वार्ष्णेयं यत्र तौ कृष्णपार्थौ
तदा नाशंसे विजयाय संजय ॥ १८१

यदाश्रौषं कर्णमासाद्य मुक्तं
वधाद्भीमं कुत्सयित्वा वचोभिः ।
धनुष्कोट्या तुद्य कर्णेन वीरं
तदा नाशंसे विजयाय संजय ॥ १८२

यदाश्रौषं कृतवर्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च [1]सङ्ख्ये ।
[2]नारक्षन्यत्सैन्धवं वध्यमानं
तदा नाशंसे विजयाय संजय ॥ १८३

यदाश्रौषं देवराजेन दत्तां
शक्तिं मुक्तां शाङ्कितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय संजय ॥ १८४

1. अ-ख-ग—सङ्के 2. अ-ख-ग—यदा रक्षन्सैन्धवं

यदाश्रौषं कर्णघटोत्कचाभ्यां
युद्धे मुक्तां सूतपुत्रेण शक्तिम् ।
यया वध्यः समरे सव्यसाची
तदा नाशंसे विजयाय संजय ॥ १८५

यदाश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेन ह्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय संजय ॥ १८६

यदाश्रौषं द्रौणिना द्वैरथस्थं
माद्रीपुत्रं नकुलं योधमध्ये ।
सम्यग्युद्धे पाण्डवं युध्यमानं
तदा नाशंसे विजयाय संजय ॥ १८७

यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान्पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १८८

यदाश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।

तस्मिन् भ्रातॄणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय संजय ॥ १८९

यदाश्रौषं द्रोणपुत्रं कृपं च
दुःशासनं कृतवर्माणमुग्रम् ।
युधिष्ठिरं शूरममर्षयन्तं
तदा नाशंसे विजयाय संजय ॥ १९०

यदाश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत ।
सदा सङ्ग्रामे स्पर्धते यस्तु कृष्णं
तदा नाशंसे विजयाय संजय ॥ १९१

यदाश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं सङ्ग्रामे सहदेवेन [1]पापं
तदा नाशंसे विजयाय संजय ॥ १९२

यदाश्रौषं श्रा[2]न्तमेकं शयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नदर्पं
तदा नाशंसे विजयाय संजय ॥ १९३

---

1. अ-ख-ग—सार्धं    2. अ-ख-ग—शान्त

यदाश्रौषं पाण्डवांस्तिष्ठमानान्
गङ्गाह्रदे वासुदेवेन सार्धम् ।
[1]अमर्षणं धर्षयतस्सुतं मे
तदा नाशंसे विजयाय संजय ॥ १९४

यदाश्रौषं विविधांस्तात मार्गान्
गदायुद्धे मण्डलं संचरन्तम् ।
मिथ्याहतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय संजय ॥ १९५

यदाश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान्पाञ्चालान्द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय संजय ॥ १९६

यदाश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषी[2]कमवधीद्येन गर्भे
तदा नाशंसे विजयाय संजय ॥ १९७

यदाश्रौषं ब्रह्मशिरोऽर्जुनेन
मुक्तं स्वस्ती[3]त्यस्त्रमस्त्रेण शान्तम् ।

---

1. अ—अमर्षणान्मर्षयतस्सुतान्मे ।
2. क—कं नावधीत्
3. अ-ख-ग—उग्रं

अश्वत्थाम्ना मणिरत्नं च मुक्तं
तदा नाशंसे विजयाय संजय ॥ १९८

यदाश्रौषं द्रोणपुत्रेण गर्भे
वैराट्या वै पात्यमाने महास्त्रे ।
[1]संजीवयामीति हरेः प्रतिज्ञां
तदा नाशंसे विजयाय संजय ॥ १९९

[2]शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा वध्वः पतिभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यं निस्सपत्नं पुनस्तैः ॥ २००

कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं पाण्डवानां च सप्त ।
द्व्यूना विंशत्सूदिताक्षौहिणीनां
तस्मिन्सङ्ग्रामे [3]निघ्नतां क्षत्रियाणाम् ॥ २०१

---

1. अ—कोशे-इदमर्धं नास्ति-परं तु अत्र इदमुपलभ्यते
"द्वैपायनः केशवो द्रोणपुत्रं
परस्परेणाभिशापैश्शपेताम्"
2. क—बुध्वा चाहं बुद्धिहीनोऽद्य सूत सन्तप्येऽहं पुत्रपौत्रैश्च हीनः।
संचिन्तयन्नद्य विहीनबुद्धिः कर्तव्यतां नाभिजानामि सूत ॥
अधिकः पाठः ।
3. अ-ख-ग—विग्रहे

[1]तमसा संभृतं तूर्णं मोह आविशतीव माम् ।
संज्ञां नैव लभे सूत मनो विह्वलतीव मे ॥ २०२

इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य च सुदुःखितः ।
मूर्च्छितः पुनराश्वस्तस् संजयं वाक्यमब्रवीत् ॥ २०३

संजयैवं गते प्राणान् त्यक्तुमिच्छामि मा चिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥ २०४

सूतः—

तमेवंवादिनं दीनं विलपन्तं महीपतिम् ।
गावल्गणिरयं धीमान् महार्थं वाक्यमब्रवित् ॥ २०५

संजयः—

श्रुतवानसि वै राजन् महोत्साहान्महाबलान् ।
द्वैपायनस्य वचनान्नारदस्य च धीमतः ॥ २०६

महत्सु राजवंशेषु गुणैस्समुदितेषु च ।
जातान् दिव्यास्त्रविदुषश् शक्रप्रतिमतेजसः ॥ २०७

धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाप्तदक्षिणैः ।
अस्मिंल्लोके यशः प्राप्य ततः कालवशं गतान् ॥ २०८

वैन्यं महारथं वीरं सृञ्जयं जयतां वरम् ।
सुहोत्रं रन्तिदेवं च कक्षीवन्तमथौशिजम् ॥ २०९

1. क-ग—कालाभिपन्ना समितिर्महात्मनां
निषूदिता हेतुरासीत्सुतो मे ॥ इदमर्धमधिकम् ।

बाह्लीकं दमनं चैद्यं शर्यातिं च शिबिं नलम् ।
विश्वामित्रममित्रघ्नं अम्बरीषं महाबलम् ॥ २१०

मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ।
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् ॥ २११

ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ।
चित्ययूपाङ्किता भूमिर् यस्येयं सवनाकरा ॥ २१२

इति राज्ञां चतुर्विंशन् नारदेन महात्मना ।
पुत्रशोकाभितप्ताय पुरा चैत्याय कीर्तिताः ॥ २१३

तेभ्यश्चान्ये गताः पूर्वे राजानो बलवत्तराः ।
महारथा महात्मानस् सर्वैस्समुदिता गुणैः ॥ २१४

पूरुः कुरुर्यदुश्शूरो विष्वगश्वो महाधृतिः ।
अणुहो युवनाश्वश्च काकुत्स्थो विक्रमो रघुः ॥ २१५

विजितिर्वीतिहोत्रोऽङ्गो हयश्वेतो बृहद्गुरुः ।
उशीनरः शतरथः कहोलो दुहुलो ध्रुवः । २१६

सहोद्भवः पुरो वेनः सगरस्सांकृतिर्निमिः ।
अजेयः परशुः पुण्ड्रः शंभुर्देवव्रतोऽनघः ॥ २१७

देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः ॥ २१८

सत्यव्रतः शान्तभवः सुमित्रः सुबलः प्रभुः ।

जानुजङ्घोऽनरण्यश्च प्रियभृत्यश्शुचिव्रतः ॥ २१९

बलबन्धुर्निरामर्दः केतुशृङ्गो बृहद्बलः ।
धृष्टकेतुर्बृहत्केतुर् दीप्तकेतुर्निरामयः ॥ २२०

अधिक्षुर्वलले धूर्तो दृढबन्धुर्दृढायुधः ।
महापुराणसंभाव्यः प्रत्यङ्गः पुरहा श्रुतिः ॥ २२१

एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
श्रूयन्ते शतशश्चान्ये सङ्ख्याताश्चापि सर्वशः ॥ २२२

हित्वा तु विपुलान्भोगान् ऋद्धिमन्तो महाबलाः ।
राजानो निधनं प्राप्तास् तव पुत्रैर्महत्तमाः ॥ २२३

येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च ।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दमार्जवम् ॥ २२४

विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः ।
सुबुद्धिगुणसंपन्नास् ते चापि निधनं गताः ॥ २२५

तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ।
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि ॥ २२६

श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसत्तमः ।
येषां शास्त्रगता बुद्धिर् न ते मुह्यन्ति भारत ॥ २२७

निग्रहानुग्रहौ चापि विदितौ ते नराधिप ।
नात्यन्तमेवानुवृत्तिः श्रूयते पुत्ररक्षणे ॥ २२८

भवितव्यं तथा तच्च नातश्शोचितुमर्हसि ।
दैवं [1]पुरुषकारेण को निवर्तितुमर्हति ॥ २२९

विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखावहौ ॥ २३०

कालः पचति भूतानि कालः संहरति प्रजाः ।
निर्दहन्तं प्रजाः कालं कालः शमयते पुनः ॥ २३१

कालोऽपि कुरुते भावान् सर्वलोकशुभाशुभान् ।
कालः संक्षिप्य सर्वास्तु प्रजा विसृजते पुनः ॥ २३२

कालः सर्वेषु भूतेषु चरत्यविरतः समः ।
अतीतानागता भावा ये वर्तन्ते च सांप्रतम् ॥ २३३

तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि ॥ २३३॥

सूतः—
[2]इत्येवं पुत्रशोकार्तं धृतराष्ट्रं जनेश्वरम् ॥ २३४

आश्वास्य स्वस्थमकरोत् सूतो गावल्गणिस्तदा ।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ॥ २३५

---

1. अ-ख-ग—पूजाविशेषेण
2. क—एवमुक्त्वा तु राजानं संजयो विरराम च ।
धृतराष्ट्रोऽथ राजा च धृतिमेव समाश्रयत् ॥
विष्टयेदमागतमिति मत्वा स प्राज्ञसत्तमः ।
लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ॥ } अधिकः पाठ ।

भारताध्ययनात्पुण्याद् अपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ २३६

देवर्षयो ह्यत्र पुण्या ब्रह्मराजर्षयस्तदा ।
कीर्त्यन्ते शुभकर्माणस् तदा यक्षमहोरगाः ॥ २३७

भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
सहि सत्यमृतंचैव पवित्रं पुण्यमेवच ॥ २३८

शाश्वतं परमं ब्रह्म परं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥ २३९

असत्सत्सदसच्चैव यस्मादेव प्रवर्तते ।
सन्ततिश्च प्रवृत्तिश्च जन्म मृत्युः पुनर्भवः ॥ २४०

अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं तच्च स एव परिगीयते ॥ २४१

यं तं यतिवरा मुक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥ २४२

श्रद्दधानस्सदोद्युक्तः सत्यधर्मपरायणः ।
कथयन्निममध्यायं नरः पापात्प्रमुच्यते ॥ २४३

अनुक्रामिणमध्यायं भारतस्यैवमादितः ।
आस्तिकः सततं शृण्वन् न कृच्छ्रेष्ववसीदति ॥ २४४

सभामध्ये जपन्कश्चित् सद्यो मुच्येत किल्बिषात् ।

अनुक्रमिण्यां तत्र स्याद् दिवा रात्र्यां च संचितम् ॥ २४५

भारतस्य वपुर्ह्येतत् सत्यं चानृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥ २४६

[1]आरण्यकं च वेदेभ्य ओषधिभ्यो यथामृतम् ।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ २४७

यथैतानि विशिष्टानि तथा भारतमुच्यते ॥ २४७॥

यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नदानं तत् पितॄंस्तस्योपतिष्ठति ॥ २४८॥

इतिहासपुराणाभ्यां [2]वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ २४९॥

[3]कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ।
भ्रूणहत्याकृतं चापि पापं दह्यान्न संशयः ॥ २५०॥

य इमं शुचिरध्यायं पठन्पर्वाणि पर्वणि ।
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ॥ २५१॥

यश्चेदं शृणुयान्नित्यं आर्षं श्रद्धासमन्वितः ।
स दीर्घमायुर्दीर्घां च स्वर्गतिं चाप्नुयान्नरः ॥ २५२॥

चत्वार एकतो वेदा भारतं चैकमेकतः ।

---

1. अ-ख-ग—आरणं चापि 2. अ-ख-ग—वेदार्थमुपबृंहयेत्
3. अ-ख-कृत्स्नं

समागतैः सुरर्षिभिस्तुलामारोपितं पुरा ॥ २५३॥
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् ।
महत्त्वा[1]द्भारवत्वाच्च महाभारतमुच्यते ॥ २५४॥
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ २५५

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कस्
तान्येव भावोपनतानि कल्कः ॥ २५६

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायामादिपर्वणि
पदार्थानुक्रमो नाम-प्रथमोऽध्यायः ॥
[अस्मिन्नध्याये एकं वाक्यं २५५ श्लोकाः ।]

---

## ॥ द्वितीयोऽध्यायः ॥

---

(पर्वसङ्ग्रहपर्व)

ऋषय ऊचुः—

समन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत्सर्वं यथान्यायं श्रोतुमिच्छामहे वयम् ॥ १

सूतः—

शुश्रूषा यदि वो विप्रा ब्रुवतश्च शुभाः कथाः ।
समन्तपञ्चकाख्यानं श्रोतुमर्हथ सत्तमाः ॥ २

---

1. अ-ख-ग—भारतत्वाच्च

त्रेताद्वापरयोस्सन्धौ रामः प्रहरतां वरः ।
असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ ३

स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ४

स तेषु रुधिराम्भस्सु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन् संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५

अथर्चीकादयोऽभ्येत्य पितरो ब्राह्मणर्षभम् ।
तं क्षमस्वेति जगदुस् ततः स विरराम ह ॥ ६

तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति तत्पुण्यं परिकीर्त्यते ॥ ७

येन लिङ्गेन यो देशो युक्तस्समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ ८

अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसैन्ययोः ॥ ९

तस्मिन्परमधर्मिष्ठे देशे भूदोषवर्जिते ।
अष्टादश समाजग्मुर् अक्षौहिण्यो युयुत्सया ॥ १०

एवं नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ।
पुण्यश्च रमणीयश्च स देशः संप्रकीर्तितः ॥ ११

तदेतत्कथितं सर्वं मया वो मुनि[1]सत्तमाः ।
यथा देशः सविख्यातस् त्रिषु लोकेषु विश्रुतः ॥ १२

ऋषय:—

अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन ।
एतदिच्छामहे श्रोतुं सर्वं एव यथातथम् ॥ १३

अक्षौहिण्याः परीमाणं रथाश्वनरहस्तिनाम् ।
यथावच्चैव नो ब्रूहि तत्सर्वं विदितं त्वया ॥ १४

सूतः—

एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १५

पत्तिं त्रिगुणितामेनां विदुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ १६

त्रयो गुल्मा गणो नाम वाहिनी तु गणत्रयम् ।
स्मृतास्तिस्रोऽथ वाहिन्यः पृतनेति विचक्षणैः ॥ १७

चमूस्तु पृतनास्तिस्रस् ताश्च तिस्रस्त्वनीकिनी ।
अनीकिनीं दशगुणां आहुरक्षौहिणीं बुधाः ॥ १८

अक्षौहिण्यां प्रसंख्याता रथानां द्विजसत्तमाः ।
संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ १९

1. अ—द्विज

शतान्युपरि चाप्यष्टौ भूयश्च सह सप्ततिः ।
गजानां तु परिमाणं तावदेवात्र निर्दिशेत् ॥ २०
ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव ।
नराणामपि पञ्चाशच् छतानि त्रीणि चानघाः ॥ २१
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुर् यथावदभिसंख्यया ॥ २२
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ।
यां वः कथितवानस्मि विस्तरेण द्विजोत्तमाः ॥ २३
एतया संख्यया ह्यासन् कुरुपाण्डवसैन्ययोः ।
अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डेनाष्टादशैव ताः ॥ २४
समेता [1]यत्र वै देशे तत्रैव निधनं गताः ।
कौरवान्कारणं कृत्वा कालेनाद्भुतकर्मणा ॥ २५
अहानि युयुधे भीष्मो दशैव परमास्त्रवित् ।
अहानि पञ्च द्रोणश्च ररक्ष कुरुवाहिनीम् ॥ २६
अहनी युयुधे द्वे तु कर्णः परबलार्दनः ।
शल्योऽर्धदिवसं चासीद् गदायुद्धं ततः परम् ॥ २७
तस्यैव तु दिनस्यान्ते हार्दिक्यद्रौणिगौतमाः ।
प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् ॥ २८

1. अ—तत्र

तत्तु शौनक सत्रे ते भारताख्यानविस्तरम् ।
आख्यास्ये पौष्य पौलोमं आस्तीकं च ततः परम् ॥ २९

*चित्रार्थपदमाख्यानं अनेकसमयान्वितम् ।
प्रतिपन्नं नरैः प्राज्ञैर् वैराग्यमिव मोक्षिभिः ॥ ३०

आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् ।
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ॥ ३१

इतिहासोत्तमे ह्यस्मिन् अर्पिता बुद्धिरुत्तमा ।
स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक् ॥ ३२

अस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः ।
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ॥ ३३

†[1]सर्वानुक्रमणं पूर्वं द्वितीयं [2]पर्वसंग्रहः ।
[3]पौष्यं [4]पौलोम[5]मास्तीकं [6]आदिवंशावतारणम् ॥ ३४

ततः [7]संभवपर्वोक्तं अद्भुतं देवनिर्मितम् ।
[8]दाहो जतुगृहस्यात्र [9]हैडिम्बं पर्व चोच्यते ॥ ३५

ततो [10]बकवधः पर्व पर्व [11]चैत्ररथं तथा ।
ततः [12]स्वयंवरो देव्याः पाञ्चाल्याः पर्व चोच्यते ॥ ३६

क्षत्रधर्मेण निर्जित्य ततो [13]वैवाहिकं स्मृतम् ।
[14]विदुरागमनं पर्व [15]राज्यलाभस्तथैव च ॥ ३७

---

अ—विचित्राख्यपदाख्यानं | † अ-ख-ग—पर्वानुक्रमणी पर्व

अर्जुनस्य [16]वने वासः [17]सुभद्राहरणं तथा ।
सुभद्राहरणादूर्ध्वं ज्ञेयं [18]हरणहारिकम् ॥ ३८
ततः [19]खाण्डवदाहाख्यं तत्रैव [20]मयदर्शनम् ।
सभापर्व ततः प्रोक्तं [21]मन्त्रपर्व ततः परम् ॥ ३९
[22]जरासन्धवधः पर्व पर्व [23]दिग्विजयस्तथा ।
पर्वदिग्विजयादूर्ध्वं [24]राजसूयकमुच्यते ॥ ४०
[25]ततश्चार्घाभिहरणं [26]शिशुपालवधस्तथा ।
[27]द्यूतपर्व ततः प्रोक्तं [28]अनुद्यूतमतः परम् ॥ ४१
तत [29]आरण्यकं पर्व [30]किर्म्मीरवध एव च ।
ईश्वरार्जुनयोर्युद्धं पर्व [31]कैरातमुच्यते ॥ ४२
[32]इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
[33]तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ॥ ४३
[34]जटासुरवधः पर्व [35]यक्षयुद्धमतः परम् ।
[36]तथैवाजगरं पर्व विज्ञेयं तदनन्तरम् ॥ ४४
[37]मार्कण्डेयसमास्या च पर्वोक्तं तदनन्तरम् ।
[38]संवादश्च ततः पर्व द्रौपदीसत्यभामयोः ॥ ४५
[39]घोषयात्रा ततः पर्व पर्व [40]प्रायोपवेशनम् ।
*मन्त्रस्य निश्चयं कृत्वा कार्यस्यापि विचिन्तनम् ॥ ४६

---

* क-ख-ग—इदमर्धं नास्ति

[41]श्रीहिद्रौणकमाख्यानं ततोऽनन्तरमुच्यते ।
[42]द्रौपदीहरणं पर्व सैन्धवेन वनात्ततः ॥ ४७
*[43]कुण्डलाहरणं पर्व ततः परमिहोच्यते ।
[44]आरणेयं ततः पर्व [45]वैराटं तदनन्तरम् ॥ ४८
[46]कीचकानां वधः पर्व पर्व [47]गोग्रहणं तथा ।
अभिमन्योश्च वैराट्याः पर्व [48]वैवाहिकं स्मृतम् ॥ ४९
[49]उद्योगं पर्व विज्ञेयं अत ऊर्ध्वं महाद्भुतम् ।
ततः [50]संजययानाख्यं तदनन्तरमुच्यते ॥ ५०
[51]प्रजागरं ततः पर्व धृतराष्ट्रस्य चिन्तया ।
पर्व [52]सानत्सुजातं च गुह्यमध्यात्मदर्शनम् ॥ ५१
[53]व्यासाभिगमनं पर्व [54]भगवद्यानमेव च ।
ज्ञेयं [55]विवादपर्वात्र कर्णस्य च महात्मनः ॥ ५२
मन्त्रस्य निश्चयं कृत्वा कार्यं समभिचिन्तयन् ।
कीर्त्यते चाप्युपाख्यानं सैनापत्येऽभिषेचनम् ॥ ५३
श्वेतस्य वासुदेवेन चित्रं बहुकथाश्रयम् ।
[56]भीष्माभिषेचनं पर्व ततश्चाद्भुतमुच्यते ॥ ५४
[57]निर्याणं च ततः पर्व कुरुपाण्डवसेनयोः ।
[58]रथातिरथसंख्या च पर्वोक्तं तदनन्तरम् ॥ ५५

---

*–क–ख–ग—रामायणमुपाख्यानं अत्रैव बहुविस्तरम् । } अधिकः
सावित्र्योद्दालकीयं च वैन्योपाख्यानमेव च ॥ } पाठः ।

[59]उलूकदूतागमनं पर्व रोषविवर्धनम् ।
[60]अम्बोपाख्यानमथ च पर्व ज्ञेयमतः परम् । ५६
[61]जम्बूखण्डविनिर्माणं पर्वोक्तं तदनन्तरम् ।
[62]भूमिपर्व ततो ज्ञेयं द्वीपविस्तारकीर्तनम् ॥ ५७
दिव्यं चक्षुर्ददौ यत्र संजयाय महानृषिः ।
पर्वोक्तं [63]भगवद्गीता पर्व [64]भीष्मवधस्ततः ॥ ५८
[65]द्रोणाभिषेकः पर्वोक्तं [66]संशप्तकवधस्तथा ।
[67]अभिमन्युवधः पर्व [68]प्रतिज्ञापर्व चोच्यते ॥ ५९
[69]जयद्रथवधः पर्व [70]घटोत्कचवधस्ततः ।
ततो [71]द्रोणवधःपर्व विज्ञेयं तदनन्तरम ॥ ६०
[72]मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते ।
[73]कर्णपर्व ततो ज्ञेयं [74]शल्यपर्व ततः परम् ॥ ६१
[75]ह्रदप्रवेशनं पर्व [76]गदायुद्धमतः परम् ।
[77]सारस्वतं ततःपर्व तीर्थवंशगुणान्वितम् ॥ ६२
अत ऊर्ध्वं तु बीभत्सं पर्व [78]सौप्तिकमुच्यते ।
[79]ऐषीकं पर्व निर्दिष्टं अत ऊर्ध्वं सुदारुणम् ॥ ६३
[80]जलप्रदानकं पर्व [81]स्त्रीपर्व च ततः परम् ।
[82]श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्ध्वदैहिकम् ॥ ६४
[83]आभिषेचनिकं पर्व धर्मराजस्य धीमतः ।

[84]चार्वाकनिग्रहःपर्व रक्षसो ब्रह्मरूपिणः ॥ ६५
[85]प्रविभागो ग्रहाणां च पर्वोक्तं तदनन्तरम् ।
शान्तिपर्व ततो यत्र [86]राजधर्मानुकीर्तनम् ॥ ६६
[87]आपद्धर्मश्च पर्वोक्तं [88]मोक्षधर्मस्ततःपरम् ।
ततःपर्व परिज्ञेयं[89]आनुशासनिकं परम् ॥ ६७
[90]स्वर्गारोहणकं पर्व ततो भीष्मस्य धीमतः ।
[91]ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् ॥ ६८
[92]अनुगीतापर्व ततो ज्ञेयमध्यात्मवाचकम् ।
पर्व [93]चाश्रमवासाख्यं [94]पुत्रदर्शनमेव च ॥ ६९
[95]नारदागमनं पर्व ततःपरमिहोच्यते ।
*[96]मौसलं पर्व च ततो घोरं समनुवर्ण्यते ॥ ७०
[97]महाप्रस्थानिकं पर्व [98]स्वर्गारोहणकं ततः ।
[99]हरिवंशस्ततःपर्व पुराणं खिलसंज्ञितम् ॥ ७१
[100]भविष्यत्पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् ।
एतत्पर्वशतं †पुण्यं व्यासेनोक्तं महात्मना ॥ ७२
यथा तु सूतपुत्रेण रोमहर्षणिना पुनः ।
कथितं नैमिशारण्ये पर्वाण्यष्टादशैव तु ॥ ७३

---

* क-ख-ग—वर्णधर्मस्ततोज्ञेय आश्रमाणां च कीर्तनम् ।
मृतानां दर्शनं चैव व्यासेनाद्भुतकर्मणा ॥ } अधिकः पाठः ।
† क-ख-ग—पूर्ण ।

समासो भारतस्यायं तत्रोक्तः पर्वसंग्रहः ।
पौष्ये पर्वणि माहात्म्यं उदङ्कस्योपवर्णितम् ॥ ७४
पौलोमे भृगुवंशस्य विस्तारः परिकीर्तितः ।
श्लोकाग्रं च सहस्रं च पञ्चाशच्छतमेव च ॥ ७५
अध्यायानां तथाष्टौ [1]वा आदितोस्मिन् प्रकीर्तिताः ।
आस्तिके सर्वनागानां गरुडस्य च संभवः ॥ ७६
क्षीरोदमथनं चैव जन्मोच्चैःश्रवसस्तथा ।
यजतस्सर्पसत्रेण राज्ञः पारिक्षितस्य ह ॥ ७७
कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् ।
[2]श्लोकाग्रं च सहस्रं च त्रिशतं चोत्तरं तथा ॥ ७८
श्लोकाश्च चतुराशीतिः पर्वण्यस्मिंस्तथैव च ।
अध्यायानां ततः प्रोक्तं चत्वारिंशन्महर्षिणा ॥ ७९
विविधास्संभवा राज्ञां उक्ताः संभवपर्वणि ।
अन्येषां चैव विप्राणामृषेर्द्वैपायनस्य च ॥ ८०
अंशावतरणं चात्र देवानां परिकीर्तितम् ।
दैत्यानां दानवानां च यक्षाणां च महौजसाम् ॥ ८१
नागानामथ सर्पाणां गन्धर्वाणां पतत्रिणाम् ।
अन्येषां चैव भूतानां विविधानां समुद्भवः ॥ ८२

1. अ-क-ख-ग—च पर्वण्यास्मिन्
2. क-ख-ग--'श्लोकाग्रं च सहस्रं च' इत्यारभ्य सार्धश्लोकः नास्ति ।

वसूनां पुनरुत्पत्तिर् भागीरथ्यां महात्मनाम् ।
शन्तनोर्वेश्मनि पुनस् तेषां चारोहणं दिवि ॥ ८३

तेजोंशानां च संयोगाद् भीष्मस्याप्यत्र संभवः ।
राज्यान्निवर्तनं चैव ब्रह्मचर्यव्रतस्थितिः ॥ ८४

प्रतिज्ञापालनं चैव रक्षा चित्राङ्गदस्य च ।
हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः ॥ ८५

विचित्रवीर्यस्य तथा राज्ये संप्रतिपादनम् ।
धर्मस्य नृषु संभूतिराणिमाण्डव्यशापजा ॥ ८६

कृष्णद्वैपायनाच्चैव प्रसूतिर्विदुरस्य च ।
धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च संभवः ॥ ८७

वारणावतयात्रा च मन्त्रो दुर्योधनस्य च ।
विदुरस्य च वाक्येन सुरङ्गापगमक्रिया ॥ ८८

पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् ।
घटोत्कचस्य चोत्पत्तिर् अत्रैव परिकीर्तिता ॥ ८९

अज्ञातचर्या पार्थानां वासो ब्राह्मणवेश्मनि ।
बकस्य निधनं चैव नागराणां च विस्मयः ॥ ९०

[1]अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा ।
भ्रातृभिः सहितः सर्वैः पाञ्चालानभितो ययौ ॥ ९१

---

1. क-ख-ग—अङ्गारपर्णं ।

तापत्यमथ वासिष्ठं औवोंपाख्यानमेव च ।
पञ्चेन्द्राणामुपाख्यानं अत्रैवाद्भुतमुच्यते ॥ ९२

पञ्चानां चैव पत्नीत्वे विमर्शो द्रुपदस्य च ।
द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः ॥ ९३

विदुरस्य च संप्राप्तिर् दर्शनं केशवस्य च ।
खाण्डवप्रस्थवासश्च ततो राज्यार्धशासनम् ॥ ९४

नारदस्य च वाक्येन द्रौपद्यास्समयक्रिया ।
सुन्दोपसुन्दयोस्तत्र ह्युपाख्यानं प्रकीर्तितम् ॥ ९५

पार्थस्य वनवासश्च उलूप्या सह सङ्गमः ।
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च ॥ ९६

द्वारकायां सुभद्रा च कामयानेन कामिनी ।
वासुदेवस्यानुमते प्राप्तात्रैव किरीटिना ॥ ९७

हरणं गृह्य संप्राप्ते कृष्णे देवकिनन्दने ।
अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः ॥ ९८

संप्राप्तिः शक्रधनुषः खाण्डवस्य च दाहनम् ।
मयस्य मोक्षो ज्वलनाद् भुजङ्गस्य च मोक्षणम् ॥ ९९

महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसंभवः ।
इत्येवमादिपर्वोक्तं प्रथमं भुवि विस्तरम् ॥ १००

अध्यायानां शते द्वे तु संख्याते परमर्षिणा ।
अष्टादशैव चाध्याया व्यासेनोत्तमतेजसा ॥ १०१
[1]नवश्लोकसहस्राणि शतान्यष्टौ तथैव च ।
श्लोकाश्च चतुराशीतिर् दृष्टो ग्रन्थो महात्मना ॥ १०२
द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते ।
सभाक्रिया पाण्डवानां किङ्कराणां च दर्शनम् ॥ १०३
लोकपालसमाख्यानं नारदाद्देवदर्शनात् ।
राजसूयस्य चारम्भो जरासन्धवधस्तथा ॥ १०४
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् ।
राजसूयेऽर्घसंवादे शिशुपालवधस्तथा ॥ १०५
यज्ञे विभूतिं दृष्ट्वा तां दुःखामर्षान्वितस्य च ।
दुर्योधनस्यापहासो भीमेन च सभातले ॥ १०६
यत्रास्य [2]मन्युरभवद् येन द्यूतमकल्पयत् ।
यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् ॥ १०७
यत्र द्यूतार्णवे मग्ना द्रौपदी नौरिवार्णवे ।
गच्छतश्चातिसृष्टांस्तान् ज्ञात्वा दुर्योधनो नृपः ॥ १०८
पुनरेव ततो द्यूते समाह्वयत पाण्डवान् ।
एतत्सर्वं सभापर्व [3]व्याख्यातं परमर्षिणा ॥ १०९

1. क-ख-ग—अष्टौ 2. क-ख-ग—युद्धमभव
3. क-ख-ग—व्याहृतं वो महाद्विजाः

अध्यायाः सप्ततिर्ज्ञेया द्वौ चात्र परिसंख्यया ।
चतुः श्लोकसहस्राणि पञ्च श्लोकशतानि च ॥ ११०
श्लोकाश्चैकादश ज्ञेयाः पर्वण्यस्मिन्प्रकीर्तिताः ।
अतः परं तृतीयं तु ज्ञेयमारण्यकं परम् ॥ १११
वनवासं प्रयातेषु पाण्डवेषु महात्मसु ।
पौरानुकम्पा व्रजतो धर्मराजस्य धर्मतः ॥ ११२
धौम्योपदेशात्तिग्मांशुप्रसादादन्नसंभवः ।
मैत्रेयशापोत्सर्गश्च विदुरस्य प्रवासनम् ॥ ११३
[1]किम्मीरकवधाख्यानं वृष्णीनामागमस्तथा ।
पाण्डवानां च सर्वेषां सहाख्यानं तथैव च ॥ ११४
पाञ्चालागमनं चैव द्रौपद्याश्चाश्रुमोक्षणम् ।
अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः ॥ ११५
महादेवेन युद्धं च किरातवपुषा सह ।
दर्शनं लोकपालानां स्वर्गारोहणमेव च ॥ ११६
दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः ।
युधिष्ठिरस्य चार्तस्य व्यसने परिदेवनम् ॥ ११७
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम् ।

---

1. क-ख-ग—वृष्णीनामागमो यत्र पाञ्चालानां च सर्वशः ।
यत्र सौभस्य चाख्यानं किंमीरवध एव च ॥
(किंमीरेत्यारभ्यार्धत्रयस्य स्थाने अयं श्लोको दृश्यते)

दमयन्त्याः स्थितिर्यत्र नलस्य व्यसनागमे ॥ ११८
वनवासगतानां च पाण्डवानां महात्मनाम् ।
स्वर्गे प्रवृत्तिराख्याता रोमशेनार्जुनस्य च ॥ ११९
तीर्थयात्रा तथैवात्र पाण्डवानां महात्मनाम् ।
आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम् ॥ १२०
लोपामुद्राभिगमनं अपत्यार्थमृषेरपि ।
ततः श्येनकपोतीयं उपाख्यानमनन्तरम् ॥ १२१
इन्द्रोऽग्निर्यत्र धर्मश्च अजिज्ञासञ्छिबिं नृपम् ।
ऋश्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः । १२२
जामदग्न्यस्य रामस्य चरितं भूरितेजसः ।
कार्तवीर्यवधो यत्र हैहयानां च वर्ण्यते ॥ १२३
[1]तीर्थयात्रा तथैवात्र पाण्डवानां महात्मनाम् ।
कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात् ॥ १२४
नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने ।
यत्र मन्दारपुष्पार्थं नलिनीं तामधर्षयत् ॥ १२५
यत्रास्य सुमहद्युद्धं अभवद्राक्षसैः सह ।
यक्षैश्चापि महावीर्यैर् मणिमत्प्रमुखैस्तथा ॥ १२६
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः ।

---

1. क-ख-ग—तीर्थयात्रेति अर्धश्लोकः इह न

शर्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ ॥ १२७

ताभ्यां च यत्र स मुनिर् यौवनं प्रतिपादितः ।
जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः ॥ १२८

पुत्रार्थमजयद्राजा लेभे पुत्रशतं च सः ।
अष्टावक्रीयमत्रैव विवादे यत्र वन्दिनम् ॥ १२९

विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः ।
[1]अजासुरस्य चात्रैव वधः समुपवर्ण्यते ॥ १३०

अवाप्य दिव्यान्यस्त्राणि गुर्वर्थे सव्यसाचिना ।
निवातकवचैर्युद्धं हिरण्यपुरवासिभिः ॥ १३१

समागमश्च पार्थस्य भ्रातृभिर्गन्धमादने ।
घोषयात्रा च गन्धर्वैर् यत्र युद्धं किरीटिनः ॥ १३२

[2]जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात् ।
यत्रैनमन्वगाद्भीमो वातवेगसमो जवे ॥ १३३

मार्कण्डेयसमस्यायां उपाख्यानानि सर्वशः ।
सन्दर्शनं च कृष्णस्य संवादश्चापि सत्यया ॥ १३४

व्रीहिद्रौणकमाख्यानं ऐन्द्रद्युम्नं तथैव च ।
सावित्र्यौद्दालकीये च वैन्योपाख्यानमेव च ॥ १३५

---

1. क-ख-ग—' अजासुरस्य ' इत्यर्धश्लोको न
2. क-ख-ग—पुनरागमनं चैव तेषां द्वैतवनं प्रति। अधिकः पाठ ।

रामायणमुपाख्यानं अत्रैव बहुविस्तरम् ।
पुनरागमनं चैव तेषां द्वैतवने सरः ॥ १३६

आरणेयकमाख्यानं यत्र धर्मोऽवदत्सुतम् ।
जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम् ॥ १३७

एतदारण्यकं पर्व तृतीयं परिकीर्तितम् ।
अत्राध्यायशते द्वे तु संख्याते परमर्षिणा ॥ १३८

एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्तिताः ।
एकादशसहस्राणि श्लोकानां षट्छतानि च ॥ १३९

चतुष्षष्टिस्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्तिताः ।
अतः परं निबोधेदं वैराटं पर्व विस्तरम् ॥ १४०

विराटनगरं गत्वा श्मशाने विपुलां शमीम् ।
दृष्ट्वा संन्यदधुर्यत्र पाण्डवा आयुधान्युत ॥ १४१

यत्र प्रविश्य नगरं छद्मभिर्न्यवसंस्तदा ।
दुरात्मनो वधो यत्र कीचकस्य वृकोदरात् ॥ १४२

गोग्रहे यत्र पार्थेन निर्जिताः कुरवो युधि ।
गोधनं च विराटस्य मोक्षितं यत्र पाण्डवैः ॥ १४३

विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः ।
अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् ॥ १४४

चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम् ।
अत्रचोपरि संख्यानं अध्यायानां महात्मना ॥ १४५

सप्तषष्टिरथो पूर्णा श्लोकाग्रमपि मे शृणु ।
त्रीणि श्लोकसहस्राणि पञ्चश्लोकशतानि च ॥ १४६

पर्वण्यस्मिन् समाख्यातं संख्यया परमर्षिणा ।
उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतःपरम् ॥ १४७

उपप्लाव्ये निविष्टेषु पाण्डवेषु जिगीषया ।
दुर्योधनोऽर्जुनश्चैव वासुदेवमुपस्थितौ ॥ १४८

साहाय्यमस्मिन् समरे भवान्नौ दातुमर्हति ।
इत्युक्ते वचने कृष्णो यत्रोवाच महामनाः ॥ १४९

अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ ।
अक्षौहिणीं च सैन्यस्य कस्य किं वा ददाम्यहम् ॥ १५०

वव्रे दुर्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः ।
अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः ॥ १५१

संजयं प्रेषयामास शमार्थं पाण्डवान् प्रति ।
यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् ॥ १५२

श्रुत्वा च पाण्डवान्यातान् वासुदेवपुरोगमान् ।
प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया ॥ १५३

विदुरो यत्र वाक्यानि चित्राणि विविधानि च ।
श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् ॥ १५४

तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम् ।
मनस्तापान्वितो राजा श्रावितः शोकलालसः ॥ १५५

प्रभाते राजसमितौ संजयो यत्र [1]च प्रभुम् ।
[2]ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च ॥ १५६

यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महायशाः ।
स्वयमागाच्छमं कर्तुं नगरं नागसाह्वयम् ॥ १५७

प्रत्याख्यानं च कृष्णस्य राज्ञा दुर्योधनेन वै ।
शमार्थं याचमानस्य पक्षयोरुभयोर्हितम् ॥ १५८

कर्णदुर्योधनादीनां दुष्टं विज्ञाय मन्त्रितम् ।
योगेश्वरत्वं कृष्णेन यत्र राजसु दर्शितम् ॥ १५९

रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः ।
उपायपूर्वं शौण्डीर्यात् प्रत्याख्यातश्च तेन सः ॥ १६०

श्वेताभिषेकः कृष्णोक्तो विचित्रो बहुविस्तरः ।
ततश्चात्राभिनिर्याणं रथाश्वनरदन्तिनाम् ॥ १६१

नगराद्धास्तिनपुराद् बलसंख्यानमेव च ।
यत्र राज्ञा उलूकस्य प्रेषणं पाण्डवान् प्रति ॥ १६२

1. क-ख-ग—तु प्रभुः 2. क ख-ग—ऐक्यार्थं

क्षोभाविनि महायुद्धे दूतेन क्रूरवादिना ।
रथातिरथसंख्यानं अम्बोपाख्यानमेव च ॥ १६३

एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते ।
उद्योगपर्व निर्दिष्टं सन्धिविग्रहसंज्ञितम् ॥ १६४

अध्यायाः संख्यया तत्र षडशीतिशतं स्मृतम् ।
[1]श्लोकाः [2]सप्तसहस्राणि नवश्लोकशतानि च ॥ १६५

श्लोकाश्च नवतिः प्रोक्तास् तथैवाष्टौ महात्मना ।
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः ॥ १६६

अतऊर्ध्वं विचित्रार्थं भीष्मपर्व प्रचक्षते ।
जम्बूखण्डविनिर्माणं यत्रोक्तं संजयेन ह ॥ १६७

यत्र युद्धमभूद्घोरं दशाहान्यतिदारुणम् ।
यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम् ॥ १६८

कश्मलं यत्र पार्थस्य वासुदेवो महाद्युतिः ।
मोहजं नाशयामास हेतुभिर्मोक्षदर्शनैः ॥ १६९

शिखण्डिनं पुरस्कृत्य यत्र पार्थो महारथः ।
विनिघ्नन्निशितैर्बाणै रथाद्भीष्ममपातयत् ॥ १७०

षष्ठमेतन्महापर्व भारते परिकीर्तितम् ।
अध्यायानां शतं प्रोक्तं अष्टादश तथापरे ॥ १७१

---

1. ग—श्लोकानां षट्सहस्राणि 2. ख—षट्सहस्राणि

पञ्चश्लोकसहस्राणि संख्ययाष्टौ शतानि च ।
श्लोकानां चतुराशीतिर् अस्मिन् पर्वणि कीर्तिता ॥ १७२
व्यासेन वेदविदुषा संख्यया भीष्मपर्वणि ।
द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते ॥ १७३
यत्र संशप्तकाः पार्थं अभिपेतू रणाजिरे ।
भगदत्तो महाराजो यत्र शक्रसमो युधि ॥ १७४
सुप्रतीकेन नागेन सह शस्तः किरीटिना ।
यत्राभिमन्युं बहवो जघ्नुर्लोकमहारथाः ॥ १७५
जयद्रथमुखा बालं शूरमप्राप्तयौवनम् ।
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे ॥ १७६
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ।
संशप्तकावशेषं च कृतं निश्शेषमाहवे ॥ १७७
[1]अलम्बुसः श्रुतायुश्च [2]जलसन्धिश्च वीर्यवान् ।
सौमदत्तिर्विराटश्च द्रुपदश्च महारथः ॥ १७८
घटोत्कचादयश्चान्ये निहता द्रोणपर्वणि ।
अत्र ते पृथिवीपालाः प्रायशो निधनं गताः ॥ १७९
द्रोणपर्वणि ये शूरा निर्दिष्टाः पुरुषर्षभाः ।

---

1. क-ख-ग—संशप्तकानां वीराणां कोटयो नव महारणे । किरीटिनाभिनिष्क्रम्य गमिता यमसादनम्॥ } अधिकः पाठः ।
2. क-ख-ग—जारासन्धिश्च

अश्वत्थामा पितरि वै द्रोणे युधि निपातिते ॥ १८०
अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः ।
[1]सप्तमं भारते पर्व महदेतदुदाहृतम् ॥ १८१
अध्यायानां शतं प्रोक्तमध्यायाः सप्ततिः स्मृताः ।
[2]अष्टौ श्लोकसहस्राणि नव श्लोकशतानि च ॥ १८२
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना ।
पाराशर्येण मुनिना संचिन्त्य द्रोणपर्वणि ॥ १८३
अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम् ।
सारथ्ये विनियोगश्च मद्रराजस्य धीमतः ॥ १८४
आख्यानं यत्र पौराणं त्रिपुरस्य निपातनम् ।
प्रायेण परुषश्चात्र संवादः कर्णशल्ययोः ॥ १८५
हंसकाकीयमाख्यानं अत्रैवाक्षेपसंहितम् ।
अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः ॥ १८६
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः ।
अष्टमं पर्व निर्दिष्टं एतद्भारतचिन्तकैः ॥ १८७
एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि ।
चत्वार्येव सहस्राणि नव श्लोकशतानि च ॥ १८८

---

1. क-ख ग—आग्नेयं कीर्त्यते यत्र गदितं चाथ्यमुत्तरम् । व्यासस्य चागमो नाम यत्र कृष्णस्य पाण्डवैः॥ } अधिकः पाठः ।

2. क-ख ग—दश

अतः परं विचित्रार्थं शल्यपर्व प्रकीर्तितम् ।
हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत् ॥ १८९

वृत्तानि रथयुद्धानि कीर्त्यन्ते यत्र भागशः ।
विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्यते ॥ १९०

शल्यस्य निधनं चात्र धर्मराजान्महारथात् ।
गदायुद्धं च तुमुलं अत्रैव परिकीर्तितम् ॥ १९१

सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्तिता ।
नवमं पर्व निर्दिष्टं एतदद्भुतमर्थवत् ॥ १९२

एकोनषष्टिरध्यायास् तत्र संख्याविशारदैः ।
संख्याता बहुवृत्तान्ताः श्लोकाग्रं चात्र शब्द्यते ॥ १९३

त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा ।
मुनिना संप्रणीतानि कौरवाणां यशोभृताम् ॥ १९४

अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणम् ।
भग्नोरुं यत्र राजानं दुर्योधनममर्षिणम् ॥ १९५

अपयातेषु पार्थेषु त्रयस्तेऽभ्याययूरथाः ।
कृतवर्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षिताः ॥ १९६

प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः ।
अहत्वा सर्वपाञ्चालान् धृष्टद्युम्नपुरोगमान् ॥ १९७

पाण्डवांश्च तथामात्यान् न विमोक्ष्यामि दंसनम् ।
प्रसुप्तान्निशि विश्वस्तान् यत्र ते पुरुषर्षभाः ॥ १९८

पाञ्चालान् सपरीवारान् जघ्नुर्द्रौणिपुरोगमाः ।
यत्रामुच्यन्त पार्थास्ते पञ्च कृष्णबलाश्रयात् ॥ १९९

सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः ।
द्रौपदी पुत्रशोकार्ता पितृभ्रातृवधार्दिता ॥ २००

कृतानशनसंकल्पा यत्र भर्तॄनुपाविशत् ।
द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः ॥ २०१

अन्वधावत संक्रुद्धो भारद्वाजं गुरोः सुतम् ।
भीमसेनभयाद्यत्र दैवेन प्रतिचोदितः ॥ २०२

अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत् ।
मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः ॥ २०३

यत्रास्त्रमस्त्रेण च तच्छमयामास फल्गुनः ।
द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः ॥ २०४

चिताकर्मणि सर्वेषां राज्ञामुदकदानिके ।
गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः ॥ २०५

सुतस्यैतदिह प्रोक्तं दशमं पर्व सौप्तिकम् ।
अष्टादशास्मिन्नध्यायाः पर्वण्युक्ता महात्मना ॥ २०६

श्लोकाग्रमत्र कथितं शतान्यष्टौ तथैव च ।
श्लोकाश्च सप्ततिः प्रोक्ता यथावदभिसंख्यया ॥ २०७

सौप्तिकैषीकसंबन्धे पर्वण्यमितबुद्धिना ।
अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम् ॥ २०८

विलापो वीरपत्नीनां यत्रातिकरुणं स्मृतम् ।
क्रोधवेगः प्रसादश्च गान्धारीधृतराष्ट्रयोः ॥ २०९

यत्र च क्षत्रियान् शूरान् इष्टांस्तानानिवर्तिनः ।
पुत्रान् भ्रातॄन् पितॄंश्चैव निहतान्ददृशू रणे ॥ २१०

यत्र राजा महाप्राज्ञः सर्वधर्मविदां वरः ।
राज्ञां तानि शरीराणि दाहयामास शास्त्रतः ॥ २११

एतदेकादशं प्रोक्तं पर्वातिकरुणं महत् ।
सप्तविंशतिरध्यायाः पर्वण्यस्मिन्नुदाहृताः ॥ २१२

श्लोकाः सप्तशतं चापि पञ्चसप्ततिरुच्यते ।
संख्यया भारताख्यानकर्त्रा ह्यत्र महात्मना ॥ २१३

प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्तनम् ।
अतः परं शान्तिपर्व द्वादशं बुद्धिवर्धनम् ॥ २१४

यत्र निर्वेदमापेदे धर्मराजो युधिष्ठिरः ।
घातयित्वा पितॄन् भ्रातॄन् पुत्रान् संबन्धिबान्धवान् ॥ २१५

शान्तिपर्वणि धर्माश्च व्याहृताः शरतल्पिकाः ।
राजभिर्वेदितव्या ये सम्यगर्थं बुभुत्सुभिः ॥ २१६

आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शकाः ।
यान् बुद्ध्वा पुरुषः सम्यक् सर्वज्ञत्वमवाप्नुयात् ॥ २१७

मोक्षधर्माश्च विविधा विचित्रा बहुविस्तराः ।
द्वादशं पर्व निर्दिष्टं एतत् प्राज्ञजनप्रियम् ॥ २१८

पर्वण्यत्र परिज्ञेयं अध्यायानां शतत्रयम् ।
त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः ॥ २१९

श्लोकानां तु सहस्राणि कीर्तितानि चतुर्दश ।
पञ्च चैव शतान्याहुः पञ्चविंशतिसंख्यया ॥ २२०

अत ऊर्ध्वं तु विज्ञेयं आनुशासनमुत्तमम् ।
यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयान् ॥ २२१

भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः ।
व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थो येन दर्शितः ॥ २२२

विविधानां च दानानां फलयोगाः पृथग्विधाः ।
तथा पात्रविशेषाश्च दानानां च परो विधिः ॥ २२३

आचारविधियोगश्च सत्यस्य च परा गतिः ।
एतत्सुबहुवृत्तान्तं उत्तमं चानुशासनम् ॥ २२४

भीष्मस्यैवात्र संप्राप्तिः स्वर्गस्य परिकीर्तिता ।
एतत्त्रयोदशं पर्व धर्मनिश्चयकारणम् ॥ २२५
अध्यायानां शतं तत्र षट्पञ्चाश[1]च्छतोत्तरम् ।
श्लोकानां च सहस्राणि द्वादशैवेति कीर्त्यते ॥ २२६
अथाश्वमेधिकं नाम पर्व चोक्तं चतुर्दशम् ।
तत्संवर्तमरुत्तीयं अत्राख्यानमनुत्तमम् ॥ २२७
सुवर्णकोशसंप्राप्तिर् जन्म चोक्तं परीक्षितः ।
दग्धस्यास्त्राग्निना पूर्वं कृष्णात्सञ्जीवनं पुनः ॥ २२८
चर्यया हयमुत्सृष्टं पाण्डवस्यानुगच्छतः ।
तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः ॥ २२९
चित्राङ्गदायाः पुत्रेण स्वपुत्रेण किरीटिनः ।
संग्रामे बभ्रुवाहेन संशयश्चात्र दर्शितः ॥ २३०
[2]अश्वमेधे महायज्ञे नकुलाख्यानमेव च ।
इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ॥ २३१
अत्राध्यायशतं त्रिंशत् त्रयोऽध्यायाश्च शब्दिताः ।
चत्वार्येव सहस्राणि तावन्त्येव शतानि च ॥ २३२
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ।
ततश्चाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम् ॥ २३३

---

1. क-ख-ग—त्तथोत्तरम्
2. क-ख-ग—मृगदर्शं तथा चैव वैष्णवं धर्ममेव च । अधिकः पाठः ।

यत्र राज्यं परित्यज्य गान्धारीसहितो नृपः ।
धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह ॥ २३४
यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा ।
पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता ॥ २३५
यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान् ।
लोकान्तरगतान्वीरान् अपश्यत्पुनरागतान् ॥ २३६
[1]ऋषेः प्रसादात्कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम् ।
त्यक्त्वा शोकं सदारश्च सिद्धिं [2]परमिकां गतः ॥ २३७
यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः ।
सञ्जयश्च महामात्रो विद्वान्गावल्गणिर्वशी ॥ २३८
ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः ।
नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् ॥ २३९
एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम् ।
द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया ॥ २४०
सहस्र[3]मेकं श्लोकानां नवश्लोकशतानि च ।
षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ २४१
अतः परं निबोधेदं मौसलं भृशदारुणम् ।

---

1. क—'ऋषेः प्रसादात्' इत्यारभ्य 'यत्र धर्मम्' इति पर्यन्तं सार्ध-श्लोकः न दृश्यते।
2. अ-ख-ग—परमतां
3. क-ख-ग—मेतच्छ्लोकानां

यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि ॥ २४२
[1]ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ।
आपाने पानगलिता दैवेनाभिप्रचोदिताः ॥ २४३
एरकारूपिभिर्वज्रैर् निजघ्नुरितरेतरे ।
यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ ॥ २४४
नातिचक्रामतुः कालं प्राप्तं सर्वहरं परम् ।
यत्रार्जुनो द्वारवतीं एत्य कृष्णाद्विनाकृताम् ॥ २४५
दृष्ट्वा विषादमगमत् परां चार्तिं नरर्षभः ।
सन्त्यज्य च यदुश्रेष्ठं मातुलं शौरिमात्मनः ॥ २४६
ददर्श यदुवीराणां आपाने वैशसं महत् ।
शरीरं वासुदेवस्य रामस्य च महात्मनः ॥ २४७
संस्कारं लम्भयामास वृष्णीनां च प्रधानतः ।
सवृद्धबालमादाय द्वारवत्यास्ततो जनम् ॥ २४८
ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् ।
सर्वेषां चैव दिव्यानां अस्त्राणामप्रसन्नताम् ॥ २४९
नाशं वृष्णिकलत्राणां प्रभावानामनित्यताम् ।
दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः ॥ २५०
धर्मराजं समासाद्य संन्यासं समरोचयत् ।
इतीदं मौसलं पर्व षोडशं परिकीर्तितम् ॥ २५१

1. अ-क-ख-ग—बृहदण्डविनिर्दिष्टाः

अष्टाध्यायाः प्रसंख्याताः श्लोकाग्रं च शततत्रयम् ।
महाप्रस्थानिकं तस्माद् ऊर्ध्वं सप्तदशं स्मृतम् । २५२
यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः ।
द्रौपद्या सहिता देव्या सिद्धिं परमिकां गताः ॥ २५३
अध्यायाश्च त्रयः प्रोक्ताः श्लोकानां च तथा शतम् ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ २५४
स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम् ।
[1]अध्यायाः पञ्च संख्याताः पर्वैतदभिसंख्यया ॥ २५५
श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः ।
अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः ॥ २५६
खिलेषु हरिवंशश्च भविष्यञ्च प्रकीर्तितम् ।
[2]एतत्सखिलमाख्यातं भारतं पर्व संग्रहात् ॥ २५७
अष्टादशसमाजग्मुर् अक्षौहिण्यो युयुत्सया ।

---

1. क-ख-ग—अधिकः पाठः ।
यत्र दुर्योधनादीनां श्रियं दृष्ट्वा युधिष्ठिरः ।
निर्वेदं परमं गत्वा स्वर्गं नाकाङ्क्षदव्ययम् ॥
देवानां वचनाद्यत्र तनुं त्यक्त्वा महारथः ।
स्वर्गं नित्यं महातेजाः स्वस्थानमगमद्धनम् ॥

2. क-ख-ग—अधिकः पाठः ।
खिलेषु हरिवंशस्य व्याख्याताः परमर्षिणा ।
यत्र दिव्याः कथाः पुण्याः कीर्तिताः पापनाशनाः ॥
देवासुरकथाश्चैव विचित्राःसमुदाहृताः ।
भविष्यदपि चाख्यानं विचित्रं पुण्यवर्धनम् ॥
यत्र कृष्णस्य कर्माणि श्रूयन्ते जन्मना सह ।

तन्महद्दारुणं युद्धं अहान्यष्टादशाभवत् ॥ २५८

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः ॥ २५९

श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते ।
पुंस्कोकिलरुतं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव ॥ २६०

इतिहासोत्तमादस्माज् जायन्ते कविबुद्धयः ।
पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः ॥ २६१

अस्याख्यानस्य विषये पुराणं वर्तते द्विजाः ।
अन्तरिक्षस्य विषये प्रजा इव चतुर्विधाः ॥ २६२

क्रियागुणानां सर्वेषां इदमाख्यानमाश्रयः ।
इन्द्रियाणां समस्तानां चित्रा इव मनः क्रियाः ॥ २६३

अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ २६४

इदं सर्वैः कविवरैर् आख्यानमुपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैर् अभिजात इवेश्वरः ॥ २६५

[1]आख्यानं तदिदमनुत्तमं महार्थं
विन्यस्तं महदिह पर्वसंग्रहेण ।

---

1. क-ख-ग—द्वैपायनोष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन ॥ } अधिकः पाठः ।

श्रुत्वादौ [1]महति नृणां सुखावगाह्यो
विस्तीर्णे लवणजले यथा प्लवेन ॥ २६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां आदिपर्वणि पर्वसंग्रहो नाम द्वितीयोऽध्यायः ॥

[अस्मिन्नध्याये २६६ श्लोकाः ।]

---

## ॥ तृतीयोऽध्यायः ॥

(अथ पौष्यपर्व)

जनमेजयं प्रति सरमाख्यदेवशुनीशापः ॥ १ ॥ शापनिवारणार्थमृषेः सोमश्रवसः पौरोहित्येन वरणम् ॥ २ ॥ आरुण्युपमन्युवैदाख्यानां धौम्यशिष्याणामुपाख्यानम् ॥ ३ ॥ वैदशिष्यस्योदङ्कस्योपाख्यानम् ॥ ४ ॥ पौष्यस्य राज्ञ उपाख्यानम् ॥ ५ ॥

---

सूतः—

जनमेजयः पारीक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमास्ते
स्म । तस्य भ्रातरस्त्रयः [2]श्रुतसेन उग्रसेनो भीमसेन इति । तेषु
तत्सत्रमुपासीनेषु तत्र [3]श्वाभ्यागच्छत्सारमेयः ॥ १

स जनमेजयस्य भ्रातृभिर्हतो रोरूयमाणो मातुः समीपमभ्यागच्छत् ॥ २

---

1. क-ख-ग—भवति नृणां सुखं तदानीम्

2. क-ख-ग—शूरसेन

3. ख ग—श्वाभ्यगात्

तं माता रोरूयमाणमुवाच । किं रोदिषि, केनास्यभिहत
इति ॥ ३

स एवमुक्तो मातरं प्रत्युवाच । जनमेजयस्य भ्रातृभिर्हतोऽ-
स्मीति ॥ ४

तं माता प्रत्युवाच । व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत
इति ॥ ५

स तां पुनरुवाच । नापराध्यामि किञ्चित्, नावेक्षे हवींषि,
नावलीढेऽहमिति ॥ ६

तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमगच्छत् । यत्र
जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते स्म ॥ ७

स तया क्रुद्धया तत्रोक्तः, अयं मे पुत्रो न किञ्चिदपराध्यति
किमर्थमभिहत इति ॥ ८

न किञ्चिदुक्तवतस्तानाह सरमा, यस्मादयमभिहतो नापरा-
धी, तस्माद्दृष्टं त्वां भयमागमिष्यतीति ॥ ९

स जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो
विषण्णश्चासीत् ॥ १०

स तस्मिन्सत्रे समाप्ते हस्तिनपुरमभ्येत्य पुरोहितमनुरूप-
मन्विच्छमानः परं यत्नमकरोत्, यो मे पापकृत्यां नाशये-
दिति । ११

स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्च
स्वविषयोद्देशे आश्रममपश्यत् ॥ १२

तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम । तस्याभिमतः पुत्र
आस्ते सोमश्रवा नाम ॥ १३

तपोभिः संभृतं तस्य तं पुत्रमभिगम्य जनमेजयः पारी-
क्षितः पौरोहित्याय वव्रे ॥ १४

स नमस्कृत्य तमृषिमुवाच । भगवन्नयं तव पुत्रो मम पुरो-
हितोऽस्त्विति ॥ १५

स एवमुक्तः प्रत्युवाच-भो जनमेजय! पुत्रो मम सर्प्यां जातो
महातपाः स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो मच्छुक्रं पिब-
न्त्याः सर्प्याः कुक्षौ संवृद्धः; समर्थोऽयं भवतः सर्वाः पापकृत्याः
शमयितुं, अन्तरेण महादेवकृत्याम् । अस्य वै विद्यते त्वेकमुपांशु-
व्रतम् । यद्येनं कश्चित्कश्चिदर्थमभियाचेत्तस्मै तद्दद्यादयम् ।
यद्येतत्सहसि ततो नयस्वैनमिति ॥ १६

तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तथा भविष्य-
तीति ॥ १७

स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच-मयायं वृत
उपाध्यायः, यदयं ब्रूयात्तत्कार्यमविचारयद्भिरिति ॥ १८

तेनैवमुक्ता भ्रातरस्त्रयस्तस्य तथा चक्रुः ॥ १९

स तथा तान्भ्रातॄन्सन्दिश्य तक्षशिलां प्रत्यभितस्थौ। तं च देशं स्वांशे स्थापयामास ॥ २०

एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामा[1]योनिजः। तस्य शिष्यास्त्रयो बभूवुः-उपमन्युरारुणिपाञ्चालो वेद इति ॥ २१

एकं शिष्यमारुणिपाञ्चालं प्रेषयामास। भो! गच्छ, केदारखण्डं बधानेति ॥ २२

स उपाध्यायेन सन्दिष्ट आरुणिपाञ्चालस्तत्र गत्वा केदारखण्डं बद्धुं नाशक्नोत्। स क्लिश्यमानो गतिं नापश्यत् किञ्चित्। भवत्वेवं तावत्करिष्यामीति। स तत्र संविवेश। केदारखण्डे शयाने तस्मिंस्तदुदकं तस्थौ ॥ २३

ततः कदाचिदुपाध्यायस्तस्मिन्ननागते [2]आयोद धौम्यः शिष्यावपृच्छत्। क्वारुणिपाञ्चालो गत इति ॥ २४

तौ प्रत्यूचतुः। भगवतैव प्रेषितः केदारखण्डं बधानेति ॥

एवमुक्तस्तौ शिष्यौ प्रत्युवाच। तस्मात्सर्वे तत्र गच्छामो यत्र स इति ॥ २६

स गत्वा तत्र ह्याह्वानशब्दं चकार। भो आरुणिपाञ्चाल! क्वासि वत्सैहीति ॥ २७

---

1. क-ख—आयोदः } आपोदः (?)
   ग—आयातः }
2. क-ख-ग—आयातो धौम्यः

तच्छ्रुत्वाथारुणिपाञ्चाल्य उपाध्यायवाक्यं तस्मात्केदारखण्डात् सहसोत्थाय तमुपतस्थे। प्रोवाच चैनम्। अहमस्मात्केदारखण्डान्निस्सरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भगवन्तमुपस्थितः। तदभिवादये भगवन्तं, आज्ञापयतु भवान् किंकरवाणीति ॥

तमुपाध्यायोऽब्रवीत्। यस्माद्भवान्केदारखण्डमवदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवत्विति ॥ २९

स उपाध्यायेनानुगृहीतः—यस्मात्त्वया मद्वचोऽनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि, सर्वे ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्मशास्त्राणीति ॥ ३०

स एवमुक्त उपाध्यायेनेष्टान्देशाञ्जगाम ॥ ३१

[1]अथापरस्तस्यायोदधौम्यस्य शिष्य उपमन्युर्नाम। तमुपाध्यायः प्रेषयामास, वत्सोपमन्यो! गा रक्षेति ॥ ३२

स उपाध्यायवचनादरक्षद्गाः। स चाहनि रक्षित्वा दिवसक्षये त्वागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ३३

तमुपाध्यायः पीवानमेव दृष्ट्वोवाच। वत्सोपमन्यो! केन वृत्तिं कल्पयसि दृढमिति ॥ ३४

स उपाध्यायं प्रत्युवाच भैक्षेण वृत्तिं कल्पयामीति ॥ ३५

1. क-ख-ग—आयोदस्य शिष्य उपमन्युर्नाम धौम्यस्य

तमुपाध्यायः प्रत्युवाच। ममानिवेद्य भैक्षं नोपयोक्तव्यमिति स्थूलमिति ॥ ३६

तथेत्युक्त्वा पुनररक्षद्गाः। रक्षित्वा च पुनरागम्य तथैवोपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ३७

तमुपाध्यायस्तथा पीवानमेव दृष्ट्वावोचत् । वत्सोपमन्यो! सर्वमशेषतस्ते भैक्षं गृह्णामि। केनेदानीं वृत्तिं कल्पयसीति ॥ ३८

स एवमुक्त उपाध्यायेन प्रत्युवाच । भैक्षं पूर्वं निवेद्य तुभ्यं अपरं चरामि। तेन वृत्तिं कल्पयामीति ॥ ३९

तमुपाध्यायः प्रत्युवाच। नैषा न्याय्या गुरुवृत्तिः। अन्येषामपि प्रत्युपरोधं करोषि, एवं वर्तमानो लुब्धोऽसीति ॥ ४०

तथेत्युक्त्वाऽन्येद्युरपि गा अरक्षत् । रक्षित्वा पुनरागम्योपाध्यायस्याग्रतस्स्थित्वा नमश्चक्रे ॥ ४१

तमुपाध्यायस्तथा पीवानमेव दृष्ट्वा पुनरुवाच। अहं ते भैक्षं गृह्णामि, न चान्यच्चरासि, [1]पीवासि, केन वृत्तिं कल्पयसीति ॥

स उपाध्यायं प्रत्युवाच। [2]तवासां गवां पयसा वृत्तिं कल्पयामीति ॥ ४३

तमुपाध्यायः प्रत्युवाच-नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति ॥ ४४

---

1. क-ख-ग—पीवानसि　　2. क-ख-ग—तत एतासां

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमासाद्य गुरोरग्रतस्स्थित्वा नमश्चक्रे ॥ ४५

तमुपाध्यायस्तथा पीवानमेव दृष्ट्वोवाच । भैक्ष्यं नाश्नासि, न चान्यच्चरसि, न पयः पिबसि, पीवासि, केन वृत्तिं कल्पयसीति ॥ ४६

स एवमुक्त उपाध्यायं प्रत्युवाच । वत्सानां वदनाच्च्युतं फेनं पिबामीति । यदि मे वत्सा मातृणां स्तनं पिबन्त उद्गिरन्ते॥

तमुपाध्यायः प्रत्युवाच । एते वत्सास्त्वदनुकम्पया गुणवन्तः प्रभूततरं फेनमुद्गिरान्ति । तदेवमपि वत्सानां प्रत्युपरोधं करोषि एवं वर्तमानः फेनं नैवं पातुमर्हसीति ॥ ४८

स तथेति प्रतिज्ञाय निराहारो गा ररक्ष ॥ ४९

तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति । न चान्यच्चरति । नपयः पिबंति । फेनं नोपयुङ्क्ते ॥ ५०

स कदाचिदरण्येषु क्षुधार्तोऽर्कपर्णान्यभक्षयत् ॥ ५१

सतैरर्कपर्णैर्भक्षितैः क्षारकटुतीक्ष्णोष्णविपाकाच्चक्षुष्युपहतेऽन्धोऽभवत् ॥ ५२

सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत् ॥ ५३

अथ तस्मिन्ननागच्छत्युपाध्यायश्शिष्यानवोचत् । मयोपमन्युः सर्वतः प्रतिषिद्धः कुपितो नागच्छति चिरंगतस्त्विति॥५४

स एवमुक्त्वा गत्वारण्यमुपाध्याय आह्वानं चक्रे । भो
उपमन्यो ! क्वासि वत्सैहीति ॥ ५५

स तदाह्वानमुपाध्यायाच्छ्रुत्वा प्रत्युवाचोच्चैः, भो उपाध्याय !
कूपे पतित इति ॥ ५६

स उपाध्यायः प्रत्युवाच । कथमसि कूपे पतित इति ॥५७

स च तं प्रत्युवाच-अर्कपत्राणि भक्षयित्वान्धीभूतोऽस्मि,
अस्मिन्कूपे पतित इति ॥ ५८

तं उपाध्यायः प्रत्युवाच । अश्विनौ स्तुहि, तौ त्वा देवभिषजौ
चक्षुष्मन्तं करिष्यत इति ॥ ५९

स एवं उक्त उपाध्यायवचनेन स्तोतुं उपचक्रमे देवावश्विनौ
वाग्भिर्ऋग्भिः ॥ ६०

ओम्—प्रपूर्वगौ पूर्वजौ चित्रभानू
　　गिरा शंसामि तपनावनन्तौ ।
दिव्यौ सुपर्णावरजौ विमाना-
　　वधिक्षिपन्तौ भुवनानि विश्वा ॥ ६१

हिरण्मयौ शकुनी सांपरायौ
　　नासत्यदस्रौ सुमनसौ वैजयन्तौ ।
शुक्लं वयन्तौ तरसा सुवेमा-
　　वभिव्ययन्तावसितं विवस्वत् ॥ ६२

ग्रस्तां सुपर्णस्य बलेन वर्तिका-
ममुञ्चतावश्विनौ सौभगाय ।
तावत्सुवृत्तावनमत्तमायया
तौ सत्तमौ गा अरुणावुदावहन् ॥ ६३

षष्टिश्च गावस्त्रिशताश्च धेनव
एकं वत्सं [1]सुवहते दुहन्तीः ।
नानागोष्ठा विहिता एकदोहनाः
तावश्विभ्यां दुहते घर्ममुक्थ्यम् ॥ ६४

एकां नाभिं सप्तशता अराः श्रिताः
प्रधिष्वन्या विंशतिरर्पिता अराः ।
सुनेमिचक्रं परिवर्तते [2]जरा
[3]यथाश्विना संसक्त चर्ष[4]णम् ॥ ६५

एकं चक्रं वर्तते द्वादशप्रधिं
षण्णाभिमेकाक्ष[5]मृतस्य धारम् ।
यस्मिन्देवा अधिविश्वे विषक्ता-
स्तदश्विनौ मुञ्चथो मा विषीदथः ॥ ६६

अश्वि[6]नौ धेनुममृतं प्रवृत्तं
भूयस्तिरोधामश्विनौ दासपत्नी ।

क-ख-ग— { 1. सुवते तं दुहन्ति 2. जरं 3. अमाययाश्विना
4. णीम् 5. मम्‌तस्य 6. ना }

भित्वा गिरीनश्विनौ गा[1]स्सदा चर-
[2]न्नरगा अदृष्टं प्रथिता बलस्य ॥ ६७

युवां दिशो जनयथो दशाग्रे
समानमूर्ध्नि रथया वियन्ति ।
तासां यानं चर्षणयोऽनुप्रयान्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥ ६८

युवां पर्णान्विरुधो विश्वरू[3]पां[4]
स्तेऽधिक्षिपन्ति भुवनानि विश्वा ।
ते भानवोऽप्यानुसृताश्चरन्ति
देवामनुष्याः क्षितिमाचरन्ति ६९

सन्तौ नासत्यावश्विना [5]वह्वये वां
स्रजं च यौ बि[6]भ्रतः पुष्करस्य ।
ततो नासत्यावमृतावृतावृथा
वृते [7]देवांस्तत्प्रपदेन सूते ॥ ७०

मुखेन गर्भं लभतां युवानौ
गतासुरित्कं प्रपदेन सूते ।

---

1. क-ख-ग—उदाचर 2. क-ख-ग—न दृष्टमह्ना प्रथिता बलस्य भो
3. ख-ग—पास्ते 4. क—अयं पादःनास्ति 5. क-ग—वा
6. क-ख-ग—भूथः 7. क-ख-ग—देवौ प्रतिपदेन

सद्यो जातो मातरं [1]मुक्तिगर्भे-
[2]स्तवाश्विनौ मुञ्चथो [3]जीवसे गाम् ।। ७१

स्तोतुं न शक्नोमि गुणैर्भवन्तौ
चक्षुर्विहीनः पथि संप्रमूढः ।
दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे
युवां शरण्यौ शरणं प्रपद्ये ।। ७२

[4]सूतः —

एवमृग्भिश्चान्यैरस्तुवत् ।। ७३

एवं तेनाभिष्टुतावश्विनावाजग्मतुः ।। ७४

आहतुश्चैनं, प्रीतौ स्वः, एष तेऽपूपोऽशानैनमिति ।। ७५

स एवमुक्तः प्रत्युवाच । नानृतमूचतुर्भवन्तौ । नत्वहं चैनम-
पूपमुपयोक्तुमुत्सहे अनिवेद्य गुरव इति ।। ७६

ततस्तावश्विनावूचतुः । आवाभ्यां भवत उपाध्यायेनैवम-
भिष्टुताभ्यां प्रीताभ्यामपूपो दत्तः, उपयुक्तश्च तेनानिवेद्य गुरवे ।
अद्य त्वमपि तथैव कुरुष्व, यथा ते कृतमुपाध्यायेनेति ।। ७७

स एवमुक्तः प्रत्युवाच । एतौ प्रत्यनुनये भवन्तावश्विनौ,
नोत्सहेऽहमनिवेद्योपाध्यायायोपयोक्तुमिति ।। ७८

---

1. क-ख-ग—रमत्तिगर्भः 2. क-ख-ग—तावश्विनौ
3. क-ग—विश्वसे 4. क-ख-ग—सूतः इतिपदं नास्ति

तमश्विनावाहतुः। प्रीतौ स्वस्तवानया गुरुवृत्त्याऽपूपं भक्षय। उपाध्यायस्य ते देहः कार्ष्णायसो दत्तः। भवतो हिरण्मयो भविष्यति। एतौ [1]गृहाण, चक्षुष्मांश्च भवसि, श्रेयश्चावाप्स्यसीति॥

एवमुक्तोऽश्विभ्यां [2]तथा भक्षयित्वा लब्धचक्षुरुपाध्याय-सकाशमागम्याभ्यवादयत्, आचचक्षे च॥ ८०

अस्य स दृष्ट्वा प्रीतिमानभूत्। आह चैनं, यथाश्विनावाहतुस्त-था त्वं श्रेयोऽवाप्स्यसीति। सर्वे च वेदाः प्रतिभास्यन्तीति॥८१

एषा तस्यापि परीक्षोपमन्योः॥ ८२

अथापरश्शिष्यस्तस्यैवायोदस्य धौम्यस्य बैदो नाम। तमुपा-ध्यायः सन्दिदेश। वत्स बैद! इहास्यतां, भवता मद्गृहे कंचित्कालं शुश्रूषणपरेण भवितव्यं, श्रेयस्ते भविष्यतीति॥८३

स तथेत्युक्त्वा दीर्घकालं गुरुकुले गुरुशुश्रूषापरोऽभवत्॥

गौरिव नित्यं गुरुषु धूर्षु नियुज्यमानः शीतोष्णक्षुत्तृष्णादुः-खसहः सर्वत्राप्रतिकूलः, तस्य महता कालेन गुरुः परितोषं जगाम॥ ८५

तत्परितोषाच्च श्रेयः सर्वज्ञतां चाप। एषा तस्यापि परीक्षा बैदस्य॥ ८६

1. क-ख-ग--एतौ गृहाणेतिवाक्यं नास्ति
2. क-ख-ग—तथा भक्षयित्वेति पदद्वयं नास्ति

स उपाध्यायेनानुज्ञातस्समावृत्तस्तस्माद्गुरुकुलनिवासाद्गृहा-
श्रमं प्रत्यपद्यत ॥ ८७

तस्यापि गृहे वसतस्त्रयश्शिष्या बभूवुः। स शिष्यान् न
किञ्चिदुवाच। कर्म वा क्रियतां शुश्रूषा वेति। दुःखाभिज्ञो
गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ॥ ८८

अथ कस्यचित्कालस्य वैदं ब्राह्मणं जनमेजयः पौष्यश्च
क्षत्रियावुपेत्योपाध्यायं वरयाञ्चक्रतुः ॥ ८९

स कदाचिद्राजकार्येणाभिप्रस्थितो ह्युदङ्कं नाम शिष्यं योजया-
मास। भो उदङ्क! यत्किञ्चिद्गृहे मां विना परिहीयते. तदिच्छाम्यहं
भवताऽपरिहीयमाणं क्रियमाणमिति ॥ ९०

स एवं प्रतिसमादिश्योदङ्कं वैदः प्रवासं जगाम ॥ ९१
अथोदङ्कश्शुश्रूषुर्गुरुनियोगमनुतिष्ठमानस्तत्र गुरुकुले वसति
स्म ॥ ९२

वसंस्तत्रोपाध्यायस्त्रीभिस्सहिताभिराहूयोक्तः। उपाध्या-
यानी ते ऋतुमती। उपाध्यायश्च प्रोषितः। अस्या यथायमृतुर्व-
न्ध्यो न भवति तथा क्रियतामेतस्यामेतद्धि सीदतीति ॥ ९३

स एवमुक्तस्ताः स्त्रीः प्रत्युवाच। न मया स्त्रीणां वचनादकार्यं
कार्यं। नह्यहमुपाध्यायेन सन्दिष्टोऽकार्यमपि त्वया कार्यमिति ॥

तस्य पुनरुपाध्यायः कालान्तरे गृहानुपाजगाम तस्मात्प्रवासात् ॥ ९५

स तद्वृत्तान्तं तस्याशेषत उपलभ्य प्रीतिमानभूत् ॥ ९६

उवाच चैनं, वत्सोदङ्क! किं ते प्रियं करवाणीति, धर्मतश्शुश्रूषितोऽस्मि भवता। तेन प्रीतिः परस्परेण नौ संवृत्ता। तदनुजाने सर्वामेव सिद्धिं प्राप्स्यासि गम्यतामिति ॥ ९७

स एवमुक्तः प्रत्युवाच। किं ते प्रियं करवाणीति ॥ ९८

एवं ह्याह—

यश्चाधर्मेण विब्रूयाद् यश्चाधर्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ॥ ९९

अहमनुज्ञातो भवता। इच्छामि त इष्टं गुर्वर्थमुपहर्तुमिति ॥

तेनैवमुक्त उपाध्यायः प्रत्युवाच। वत्सोदङ्क! उष्यतां तावदिति ॥ १०१

स कदाचित्तमुपाध्यायमाहोदङ्कः, आज्ञापयतु भवान्, किं ते प्रियमुपहरामि गुर्वर्थमिति ॥ १०२

तमुपाध्यायः प्रत्युवाच। वत्सोदङ्क! बहुशो मां चोदयासि। गुर्वर्थमुपहरेयमिति। तच्चैनामुपाध्यायानीं गच्छ, पृच्छ, किमुपहरामि गुर्वर्थमिति, एषा यद्ब्रवीति, तदुपाहरस्वेति ॥ १०३

एवमुक्त उपाध्यायेनोपाध्यायानिमपृच्छत्। भवति! उपाध्यायेनास्म्यनुज्ञातो गन्तुं। तदिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुं। तदाज्ञापयतु भवती किमुपहरामि गुर्वर्थमिति ॥१०४

सैवमुक्तोपाध्यायान्युदङ्कं प्रत्युवाच । गच्छ, पौष्यं कुण्डले भिक्षस्वेति । क्षत्रियया पिनद्धे ते आनयस्व, इतश्चतुर्थेऽहनि पुण्यकर्म भविता, एताभ्यां कुण्डलाभ्यां शोभमाना ब्राह्मणान् परिवेष्टुमिच्छामि । तथा [1]त्वं संपादयस्व, [2]श्रेयस्ते कुण्डलभिक्षणं कुर्वत इति ॥ १०५

स एवमुक्त उपाध्यायान्या प्रातिष्ठदुदङ्कः ॥ १०६

स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तदधिरूढं च पुरुषमतिप्रमाणमेव ॥ १०७

पुरुष उदङ्कमभ्यभाषत । उदङ्क! [3]एतस्य पुरीषमृषभस्य भक्षयस्वेति ॥ १०८

स एवमुक्तो नैच्छत् ॥ १०९

तमाह पुरुषो भूयः, भक्षयस्वोदङ्क मा विचारयोपाध्यायेनापि ते भक्षितमिति ॥ ११०

स एवमुक्तो बाढमित्युक्त्वा ततस्तस्य वृषभस्य पुरीषं मूत्रं च भक्षयित्वोदङ्कः प्रतस्थे ॥ १११

यत्र स क्षत्रियः पौष्यस्तमुपेत्यापश्यदुदङ्क आसीनं, स तमुपेत्याशीर्भिरभिनन्द्योवाच । अर्थी भवन्तमभिगतोऽस्मीति ॥

---

1. क-ख-ग—ताभ्यां तस्मिन्नहनि
2. क-ख-ग—श्रेयोहि ते स्यात्
3. क-ख-ग—तत्

स तमभिवाद्योवाच । भगवन्पौष्यः खल्वहं किं करवा-
णीति ॥ ११३

तमुवाचोदङ्को गुर्वर्थे कुण्डलाभ्यामभ्यागतोऽस्मीति ।
ये ते क्षत्रियया पिनद्धे ते कुण्डले भवान्दातुमर्हतीति ॥ ११४

तं पौष्यः प्रत्युवाच । प्रविश्यान्तःपुरं क्षत्रिया याच्यता-
मिति ॥ ११५

स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां तां नापश्यत् ॥

स पौष्यं पुनरुवाच । अयुक्तं भवता वयमनृतेनाचरितुम् ।
न हि सा क्षत्रियाऽन्तःपुरे संन्निहिता । नैनां पश्यामीति ॥ ११७

एवमुक्तः पौष्यस्तं प्रत्युवाच । तत्र सन्निहितैव सा, संप्रति
भवानुच्छिष्टः, स्मर तावत्, न सा क्षत्रियोच्छिष्टेनाशुचिना वा
शक्या द्रष्टुं पतिव्रतात्वात्, एषा नाशुचिना त्वया द्रष्टव्या भवि-
ष्यतीति ॥ ११८

[1]अथैवमुक्तस्तत्राहोदङ्कः । अस्ति खलु मया तु भक्षितं,
नोपस्पृष्टमागच्छतेति ॥ ११९

पौष्यः प्रत्युवाच । एवं [2]चेच्छुद्धो भूत्वा गन्तव्यमिति ॥

अथोदङ्कस्तथेत्युक्त्वा प्राङ्मुख उपविश्य प्रक्षालित-
पाणिपादवदनश्शुद्धाभिः हृदयङ्गमाभिरद्भिर्द्भिरुपस्पृश्य द्विः

1. क-ख-ग—तथैवमुक्तवन्तं स्मृत्वाहोदङ्कः
2. एतदेवाहि न हि गच्छतोपस्पृष्टम्

परिमृज्य मुखान्यद्भिरुपस्पृश्यान्तःपुरं प्रविश्य क्षत्रियामप-
श्यत् ॥ १२१

सा च दृष्ट्वैवोदङ्कमभ्युत्थायाभिवाद्योवाच । स्वागतं ते
भगवन्नाज्ञापय । भो ! तेऽहं किं करवाणीति ॥ १२२

स तामुवाच । एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति ॥

सा प्रीता तस्य तेन सद्भावेन पात्रमयं मयाऽनतिक्रमणीयं
चेति मत्वा कुण्डले अवमुच्यास्मै प्रायच्छत् ॥ १२४

आह चैनम् । एते कुण्डले तक्षको नागराजः प्रार्थयति ।
अप्रमत्तो नेतुमर्हसीति ॥ १२५

एवमुक्तस्तां क्षत्रियां प्रत्युवाच । भवती सुनि[1]र्वृता भवतु ।
न मामशक्तस्तक्षको नागराजो धर्षयितुमिति ॥ १२६

स एवमुक्त्वा क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् ॥

स तं दृष्ट्वोवाच । भोः पौष्य ! प्रीतोऽस्मीति ॥ १२८

तं पौष्यः प्रत्युवाच । भगवंश्चिरस्य पात्रमासाद्यते ।
भगवांश्च गुणवानतिथिः, प्रकरिष्येऽहं श्राद्धं, क्षणः क्रियता-
मिति ॥ १२९

तमुदङ्कः प्रत्युवाच । कृतक्षणभावोऽस्मि, [2]शीघ्रमागच्छा-
मीति । यथोपपन्नमन्न[3]मुपाहृतं भवत्विति ॥ १३०

1. अ—निर्वृत्ता 2. ग—शीघ्रंत्वहमिच्छामि
3. क-ख-ग—उपाहृतमिति पदं नास्ति

स तथेत्युक्त्वा यथोपपन्नेनैवान्नेन भोजयामास॥ १३१

अथोदङ्कः शीतमन्नं दृष्ट्वा अशुच्येतदन्नमिति मत्वा पौष्यमुवाच। सकेशमन्नमुपहृतं शीतमन्नमशुचि यस्मान्मे ददासि, तस्मात्त्व-
मन्धो भविष्यसीति ॥ १३२

तं पौष्यः प्रत्युवाच। यस्मात्त्वमदुष्टमन्नं दूषयसि। तस्मा-
दनपत्यो भविष्यसीति ॥ १३३

सोऽथ तस्यान्नस्यापि अशुचिभावं दर्शयामास॥ १३४

अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतं सकेशमालोक्योदङ्कं प्रसादयामास। भगवन्नज्ञानादेतदन्नं सकेशमुपहृतं शीतं च।
एतत्क्षामये भवन्तं न भवेयमन्ध इति ॥ १३५

तमुदङ्कः प्रत्युवाच। न मृषा ब्रवीमि भूत्वा त्वमन्धो न चिरादनन्धो भविष्यसीति। ममापि शापो न भवेद्भवद्दत्त
इति ॥ १३६

तं पौष्यः प्रत्युवाच। नाहं शक्तः शापं प्रत्यादातुं, नहि मे
मन्युरद्याप्युपशमं गच्छतीति ॥ १३७

किमेतद्भवता न ज्ञायते ॥

यथा—नवनीतं हृदयं ब्राह्मणस्य
वाचि क्षुरो निहितस्तीक्ष्णधारः।
विपरीतमेतदुभयं क्षत्रियस्य
वाङ्नवनीतं हृदयं तीक्ष्णधारम् ॥ इति ॥ १३८

तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्तुं गम्यतामिति ॥ १३९

तमुदङ्कः प्रत्युवाच। भवताहमन्नस्याशुचिभावं गमयित्वा प्रत्यनुनीतः। प्राक् त्वेतदभिहितम्। यस्माददुष्टमन्नं दूषयसि, तस्मादनपत्यो भविष्यसीति। दुष्टे चान्ने मम शापो न भविष्यति। साधयामस्तावदित्युक्त्वा प्रातिष्ठदुदङ्कः ते कुण्डले गृहीत्वा ॥

सोऽपश्यत्पथि नग्नं श्रमणमागच्छन्तं मुहुर्मुहुर्दृश्यमानं मुहुर्मुहुरदृश्यमानम् ॥ १४१

अथोदङ्कस्ते कुण्डले भूमौ निक्षिप्योदकार्थं प्रचक्रमे ॥

तस्मिन्नन्तरे श्रमण उपसृत्य कुण्डले गृहीत्वा प्राद्रवत् ॥

[1]तमुदङ्कोऽभिसृत्य जग्राह। स तद्रूपं विहाय तक्षकरूपं गृहीत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश। प्रविश्य नागलोकं स्वभवनमगच्छत् ॥ १४४

[2]तमुदङ्को ज्ञात्वा तेनैव बिलेनान्वाविश्य नागानस्तुवदेभिः श्लोकैः ॥ १४५

---

1. क-ख-ग—तमुदङ्क उपसृत्य
2. क-ख—तद्बिलं दण्डकाष्ठेन च खनितुं नाशकत्। क्लिश्यमानमिन्द्रोऽपश्यत्। वज्रं प्रेषयामास। गत्वास्य ब्राह्मणस्य कार्यं कुरुष्वेति। अथ वज्रो दण्डकाष्ठं प्रविश्य तद्बिलमदारयत्। तमुदङ्कोऽन्वाविवेश। तेनैव बिलेन च प्रविश्य तं नागलोकमपर्यन्तमनेकविधप्रासादवदननिर्यूहशतसङ्कुलमुच्चावचाक्रीडनवासस्थानावकीर्णमपश्यत् ॥

[इत्यधिकः पाठः।]

[1]यावन्तो नागराजानः सर्पास्त्वमितविक्रमाः ।
वर्षन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १४६
[2]सुस्वरूपा विरूपाश्च विविधोपलकुण्डलाः ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १४७
बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे ।
इच्छन्तोऽर्कांशुसेवायै वस्तुमैरावतं विना ॥ १४८
शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः ।
सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो जयेदिति ॥ १४९
ये चैवमुपसृण्वन्ति ये च दूरं परागताः ।
अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ॥ १५०
यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्सदा ।
तं काद्रवेयमस्तौषं कुण्डलार्थाय तक्षकम् ॥ १५१
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ।
कुरुक्षेत्रे निवसतां नदीमिक्षुमतीमनु ॥ १५२
नदीं मन्दाकिनीं रम्यां प्रसन्नसलिलामनु ।
जघन्य[3]कस्तक्षकस्य श्रुतसेन इति श्रुतः ॥ १५३
अवसद्यो महानिम्ने प्रार्थयन्नागमुख्यताम् ।

1. क-ख-ग—यद्येव नागाः सर्पा वा सर्वे संमतविक्रमाः
2. क-ख-ग—सुरूपाश्च विरूपाश्च यथा कल्माषकुण्डलाः
3. क-ख-ग—ज

करवाणि सदा चाहं नमस्तस्मै महात्मने ॥ १५४

एवं स्तुवन्नपि नागान्नालभत्कुण्डले तदा ॥ १५४॥

[1]अथापश्यत्स्त्रियौ तन्त्रे अधिरोप्य पटं वयन्त्यौ ॥ १५५

तस्मिंस्तन्त्रे कृष्णांश्च सितांश्च तन्त्रं चक्रं चापश्यत्। द्वाद-
शारं षड्भिः कुमारैः परिवर्तमानमश्वारूढं पुरुषं चापश्यत्॥

दर्शनीयान्स तान्सर्पांस्तुष्टाव तदेभिर्मन्त्रवादश्लोकैः॥ १५७

त्रीण्यर्पितान्यत्र शतानि मध्ये
षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन्।
चक्रे चतुर्विंशति पर्वयोगे
षड्वै कुमाराः परिवर्तयन्ति ॥ १५८

तन्त्रं चेदं विश्वरूपं [2]युवत्यौ
[3]वयतस्तन्तून्सततं वर्तयन्त्यौ।
कृष्णान्सितांश्चैव निवर्तयन्त्यौ
भूतान्यजस्रं भुवनानि चैव ॥ १५९

वज्रस्य भर्ता भुवनस्य गोप्ता
वृत्रस्य हन्ता नमुचे[4]र्वलस्य

---

1. क-ख-ग—तदा चैव चिन्तयामास उपाध्यायया यदीरितम्।
काले च समतिक्रान्ते शापं दास्यति मन्युना॥
[अधिकः पाठः॥]

2. क-ख-ग—वयन्त्यौ 3. क-ख-ग—यतस्तन्तून्

4. क-ख-ग—र्निहन्ता

कृष्णे वसानो वसने महात्मा
सत्यानृते यो विविनक्ति लोके ॥ १६०

यो [1]वाहनं गर्भमपां पुराणं
वैश्वानरं [2]वानरमप्युपेतः ।
नमः सदास्मै जगदीश्वराय
लोकत्रयेशाय पुरन्दराय ॥ इति ॥ १६१

तत एनं पुरुषः प्राह । प्रीतोऽहमनेन स्तोत्रेण प्रियं ते किं
करवाणीति ॥ १६२

स तमुवाचोदङ्कः । नागा मे वशमेयुरिति ॥ १६३

स एनं पुरुषः प्रोवाच एनमश्वमपाने धमेति ॥ १६४

स तमश्वमपानेऽधमत् । अथ धम्यमानस्य सर्वतः स्रोतो-
भ्यः सधूमार्चिषो निष्पेतुः । याभिर्नागलोक उपधूपितः ॥

अथ संभ्रान्तस्तक्षकोऽग्नितेजोभयविषण्णस्ते कुण्डले गृहीत्वा
सहसा स्वभवनान्निष्क्रम्योदङ्कमुवाच । एते मणिकुण्डले प्रति-
गृह्णातु भवानिति ॥ १६६

[3]स ते प्रतिजग्राहोदङ्कः । कुण्डले प्रतिगृह्याचिन्तयत् । अद्य
तत्पुण्यमहरुपाध्यायान्या दूरं चाहमभ्यागतः । कथं नु खलु-
संभावयेयमिति ॥ १६७

1. क-ख-ग—वाजिनं 2. क-ख-ग—वाहन
3. क-ख-ग—स ते प्रतिगृह्याचिन्तयत्

तत एनं चिन्तयानमेवं पुरुष उवाच । उदङ्कैनमश्वमधिरोह, एष त्वामेतत्क्षणेनोपाध्यायकुलं प्रापयिष्यतीति ॥ १६८

स तथेत्युक्त्वाश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम् ॥

उपाध्यायानी स्नात्वा केशानावपयन्त्युपविष्टा । अद्याप्युदङ्को नागच्छतीति शापायास्य मतिं दध्रे ॥ १७०

अथोदङ्क उपविश्योपाध्यायानीमभ्यवादयत् । तेचास्यै कुण्डले प्रायच्छत् ॥ १७१

सा चैनं प्रत्युवाचोदङ्कम् । वत्सोदङ्क! देशकालेऽभ्यागतः स्वागतं ते वत्स! मुहूर्तं नागच्छसि [1]चेन्मया शप्तः । श्रेयस्ते न भविष्यति । अथोपस्थितां सिद्धिमवाप्स्यसीति ॥ १७२

अथोदङ्क उपाध्यायमभ्यवादयत् तमुपाध्यायः प्रत्युवाच । वत्सोदङ्क! स्वागतं ते किं चिरं कृतमिति ॥ १७३

तमुदङ्क उपाध्यायं प्रत्युवाच । भो तक्षकेण नागराजेन विघ्नः कृतः अस्मिन्कर्मणि, तेनास्मि नागलोकगतस्तत्रैव च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ, तस्मिंश्च तन्त्रे कृष्णास्सिताश्च तन्तवः, किं, तत्र चक्रमपि दृष्टं, द्वादशारं चैनं कुमाराः परिवर्तयन्ति, तदपि किं, पुरुषश्च मया दृष्टः, पुनरश्व-

1. क-ख-ग—चेन्मत्वा शापायोपस्थितः। श्रेयस्तवोपस्थितं सिद्धिमवाप्स्यसीति। } पाठान्तरम्।

श्वातिप्रमाणयुक्तः, स चापि कः, पथि गच्छता मया वृषभो दृष्टः, तं च पुरुषोऽधिरूढः, तेनास्मि सोपचारमुक्तः । अस्य पुरीषमृषभस्य भक्षयेति । उपाध्यायेनापि ते भक्षितमिति । ततस्तस्य वचनान्मयापि तदृषभस्य पुरीषमुपयुक्तम् । तदिच्छामि भवतोपदिष्टं, किं तदिति ॥ १७४

तेनैवमुक्त उपाध्यायः प्रत्युवाच, ये ते स्त्रियौ धाता विधाता च । ये ते कृष्णास्सिताश्च तन्तवः, ते रात्र्यहनी । तदपि चक्रं द्वादशारं षट् कुमाराः परिवर्तयन्ति, ते षड्तवः, द्वादशारं द्वादशमासाः, संवत्सरश्चक्रम् । यः पुरुषस्स पर्जन्यः । योऽश्वस्सोऽग्निः । य ऋषभस्त्वया दृष्टस्स ऐरावतो नाम नागराजः । यश्चैनमधिरूढस्स इन्द्रः । यदपि ते पुरीषं भक्षितं तदमृतम् । तेन खल्वसि न व्यापन्नः । तस्मिन् नागभवने स चापि मम सखेन्द्रः । तदनुग्रहात्कुण्डले गृह्य पुनरभ्यागतोऽसि । तत्सौम्य गम्यताम् । अनुजाने भवन्तं श्रेयोऽवाप्स्यसीति ॥ १७५

स उपाध्यायेनानुज्ञात उदङ्कस्तस्य तक्षकस्य प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे ॥ १७६

स हास्तिनपुरं प्राप्य न चिराद्द्विजसत्तमः ।
समागच्छत राजानं उदङ्को जनमेजयम् ॥ १७७

पुरा तक्षशिलायास्तु निवृत्तमपराजितम् ।
सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥ १७८

तस्मै जयाशिषः पूर्वं यथान्यायं प्र[1]युज्य सः ।
उवाचैनं वचः काले शब्दसम्पन्नया गिरा ॥ १७९

उदङ्कः—
अन्यस्मिन्करणीये त्वं कार्ये पार्थिवसत्तम ।
बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १८०

सूतः—
एवमुक्तस्तु विप्रेण स राजा प्रत्युवाच ह ।
जनमेजयः प्रसन्नात्मा सम्यक्संपूज्य तं मुनिम् ॥ १८१

जनमेजयः—
अहं प्रजानां परिपालनेन
स्वं क्षत्रधर्मं परिपालयामि ।
प्रब्रूहि किं वा क्रियतां द्विजेन्द्र
शुश्रूषुरस्म्यद्य वचस्त्वदीयम् ॥ १८२

सूतः—
स एवमुक्तस्तु नृपोत्तमेन
द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
उवाच राजानमदीनसत्त्वं
स्वमेव कार्यं नृपतेश्च यत्तत् ॥ १८३

---

1. अ—पूज्य

उदङ्कः—

तक्षकेण हि राजेन्द्र येन ते हिंसितः पिता ।
तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने ॥ १८४

कार्यकालं च मन्येऽहं विधिदृष्टस्य कर्मणः ।
तद्गच्छापचितिं राजन् पितुस्तस्य महात्मनः ॥ १८५

तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना ।
पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः ॥ १८६

बलदर्पसमुत्सिक्तस् तक्षकः पन्नगाधमः ।
अकार्यं कृतवान्पापो योऽदशत्पितरं तव ॥ १८७

राजर्षिवंशगोप्तारं अमरप्रतिमं नृपम् ।
जघान काश्यपं चैव न्यवर्तयत पापकृत् ॥ १८८

दग्धुमर्हसि राजंस्त्वं ज्वलिते हव्यवाहने ।
सर्पसत्रे महाराज त्वयि तद्धि विधीयते ॥ १८९

एवं पितुश्चापचितिं [1]गतवांस्त्वं भविष्यसि ।
मम प्रियं च सुमहत् कृतं राजन् भविष्यति ॥ १९०

कर्मणां पृथिवीपाल मम येन दुरात्मना ।
विघ्नः कृतो महाराज गुर्वर्थे चरतोऽनघ ॥ १९१

सूतः—

एतच्छ्रुत्वा तु नृपतिस् तक्षकस्य चुकोप ह ।

---

1. क-ग—कृतवांस्त्वं

उदङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा ॥ १९२
अपृच्छच्च महाराजो मन्त्रिणस्तान्सुदुःखितः ।
उदङ्कस्यैव सान्निध्ये पितुस्स्वर्गगतं प्रति ॥ १९३
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत् ।
[1]यदैवासौ पितुर्वृत्तं उदङ्कादश्रृणोद्द्विजात् ॥ १९४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ३ ॥ पौष्यपर्वणि - प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १४९ वाक्यानि ४५॥ श्लोकाः । ]

## ॥ चतुर्थोऽध्यायः ॥

(पौलोमपर्व)

सूतशौनकसंवादमुखेन कथोपोद्घातः ॥

सूतः—

रोमहर्षणपुत्र उग्रश्रवाः सूतः पौराणिको नैमिशारण्ये
शौनकस्य कुलपतेः सत्रे ऋषीनभ्यागतानुपतस्थे ॥ १
पुराणे कृतश्रमः स तान् कृताञ्जलिरुवाच ॥ २
[2]किं भगवन्तः श्रोतुमिच्छथ, किमहं ब्रवीमीति ॥ ३

1. क-ख-ग—यदैवं पितरं वृत्तं
2. क-ख-ग— अधिकः पाठः । { मयोदङ्कस्य चरितमशेषमुक्तं जनमेजयस्य सर्पसत्रस्य निमित्तान्तरमिदमपि किं भवन्तः श्रोतुमिच्छन्ति ।

तमृषय ऊचुः । रौमहर्षणे प्रवक्ष्यामः, त्वं वक्ष्यसि च शुश्रूषतां कथायोगं । भगवांश्च तावच्छौनकोऽग्निशरण एवास्ते ॥ ४

[1]योऽसौ दिव्याः कथा वेद देवदानवसंकथाः ।
मानुष्यदेवगन्धर्वकथा वेद च सर्वशः ॥ ५

स चाप्यस्मिन्मखे सौते विद्वान्गृहपतिर्द्विजः ।
[2]सर्वेषां चैव नो नाथः स तावत्परिपाल्यताम् ॥ ६

सूत —

एवमस्तु गुरौ तस्मिन् उपविष्टे महात्मनि ।
तेन पृष्टाः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ॥ ७

सोऽथ विप्रर्षभः कृत्वा कार्यं सर्वं यथाक्रमम् ।
देवान्वाग्भिः पितृनद्भिस् तर्पयित्वाऽऽजगाम ह ॥ ८

यत्र ब्रह्मर्षयः सिद्धास् त आसीना यतव्रताः ।
यज्ञायतनमाश्रित्य सूतपुत्रपुरस्सराः ॥ ९

---

1. क-ख-ग—दीर्घसत्रत्वात् सर्वाः कथाः श्रोतुं कालोऽस्ति ।
[अधिकः पाठः ।]

2. क-ख-ग—दक्षो धृतव्रतो धीमान् शास्त्रे चारण्यके गुरुः ॥
सत्यवादी शमपरस्तपस्वी नियतव्रतः ।
सर्वेषामेव नो मान्यः स तावत्प्रतिपाल्यताम् ॥
तस्मिन्नध्यासति गुरावासनं परमार्चितम् ।
ततो वक्ष्यामि यत्त्वां स पृच्छति द्विजसत्तमः ॥
[अधिकः पाठः ]

ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्ततः ।
उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम् ॥ १०

शौनकः—

पुराणमखिलं तात पिता तेऽधीतवान्पुरा ।
कच्चित्त्वमपि तत्सर्वं अधीतो रौमहर्षणे ॥ ११

पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम् ।
कथ्यन्ते ताः पुराऽस्माभिः श्रुताः पूर्वं पितुस्तव ॥ १२

तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम् ।
कथयस्व कथामेतां [1]कल्यस्तच्छ्रवणेन च ॥ १३

सूत —

यदधीतं सदा सम्यग् द्विजश्रेष्ठैर्महात्मभिः ।
वैशंपायनविप्राद्यैस् तैश्चापि कथितं पुरा ॥ १४

यदधीतं च पिता मे सम्यक्चैव ततो मया ।
तं तावच्छृणु यो देवैः सर्वैः साग्निमरुद्गणैः ॥ १५

पूजितः प्रवरो वंशो भार्गवः पृथुनन्दन ।
इमं वंशं महद्दिव्यं भार्गवं ते महामुने ॥ १६

निगदामि कथायुक्तं पुराणाश्रयमद्भुतम् ।
भृगोश्च दयितः पुत्रश् च्यवनो नाम भार्गवः ॥ १७

1. क-ख-ग—कल्याः स्म श्रवणे तव

च्यवनस्यापि दायादः प्रमतिर्नाम धार्मिकः ।
प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत ॥ १८

रुरोरपि सुतो जज्ञे शुनको वेदपारगः ।
प्रमद्वरायां धर्मात्मा तव पूर्वपितामहः ॥ १९

तपस्वी च यशस्वी च श्रुतवान्धर्मवित्तमः ।
धर्मिष्ठः सत्यवादी च नियतो नियतेन्द्रियः ॥ २०

शौनक.—

सूतपुत्र यथा तस्य भार्गवस्य महात्मनः ।
च्यवनत्वं परिख्यातं तन्ममाचक्ष्व सुव्रत ॥ २१

सूतः—

भृगोस्तु दयिता भार्या पुलोमेत्यभिविश्रुता ।
तस्यां गर्भः समभवद् भृगोर्वीर्यसमुद्भवः ॥ २२

तस्मिन्गर्भे समुद्भूते पुलोमायां भृगूद्वह ।
समये समशीलिन्यां धर्मपत्न्यां यशस्विनः ॥ २३

अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे ।
आश्रमं तस्य रक्षोऽथ पुलोमां हि जगाम ह ॥ २४

तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्यामनिन्दिताम् ।
हृच्छयेन समाविष्टो विचेताः समपद्यत ॥ २५

अभ्यागतं तु तद्दृष्ट्वा पुलोमा चारुहासिनी ।

न्यमन्त्रयत पाद्येन फलमूलादिना तदा ॥ २६

तां तु रक्षस्तदा ब्रह्मन् हृच्छयेन निपीडितः ।
दृष्ट्वा हृष्टमना भूत्वा जिहीर्षुस्तामनिन्दिताम् ॥ २७

अथाग्निशरणेऽपश्यज् ज्वलितं जातवेदसम् ।
तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा ॥ २८

शंस मे कस्य भार्येयं अग्ने पृष्टो वदस्व मे ।
सत्यस्त्वमसि सत्यं वै वद पावक [1]पृच्छतः ॥ २९

मया हीयं पूर्ववृता भार्यार्थे वरवर्णिनी ।
पश्चात्त्विमां पिता प्रादाद् भृगवेऽनृतकारिणे ॥ ३०

सेयं यदि वरारोहा भृगोर्भार्या रहोगता ।
तथा सत्यम्ममाख्याहि जिहीर्षाम्याश्रमादिमाम् ॥ ३१

मन्युर्हि हृदयं मेऽद्य निर्दहन्निव तिष्ठति ।
मत्पूर्वभार्यां यदिमां भृगुः प्राप सुमध्यमाम् ॥ ३२

[2]तद्रक्ष एवमामन्त्र्य ज्वलितं जातवेदसम् ।
शङ्कमानो भृगोर्भार्यां पुनः पुनरपृच्छत ॥ ३३

त्वमग्ने सर्वभूतानां अन्तर्वससि नित्यदा ।

1. क-ख-ग—पृच्छते
2. क-ख-ग—असंमतामिदं मेऽद्य हरिष्याम्याश्रमादिमाम् ।
[अधिकः पाठः]

साक्षिवत्पुण्यपापेषु सत्यं ब्रूहि कवे वचः ॥ ३४

मत्पूर्वभार्याऽपहृता भृगुणाऽनृतकारिणा ।
सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि ॥ ३५

श्रुत्वा त्वत्तो भृगोर्भार्यां हरिष्याम्यहमाश्रमात् ।
जातवेदः पश्यतस्ते वद सत्यां गिरं मम ॥ ३६

तस्य तद्वचनं श्रुत्वा सप्तार्चिर्दुःखितो भृशम् ।
[1]भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ४ ॥ पौलोमपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ४ वाक्यानि ३३ श्लोकाः ।]

---

1. क-ख-ग—सत्यं वदामि यदि मे शापः स्याद् ब्रह्मवित्तमात् ॥
असत्यं चेदहं ब्रूवे पतिष्ये नरकान्क्रमात् ।
भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥
त्वया वृतेयं लोकेश पूर्वं दानवनन्दन ।
किं त्विदं विधिना पूर्वं मन्त्रवन्न वृता त्वया ॥
पित्रा तु भृगवे दत्ता पुलोमेयं यशस्विनी ।
न तु तुभ्यं प्रदत्ता वै वरारोहा महायशः ॥
अथैनां वेददृष्टेन कर्मणा विधिपूर्वकम् ।
भार्यामृषि भृगुः प्राप्तस् तं पुरस्कृत्य दानव ॥
सेयमित्यवगच्छामि नानृतं वक्तुमुत्सहे ।
नानृतं हि सदा लोके पूज्यं दानवसत्तम ॥
[अधिकः पाठः]

## ॥ पञ्चमोऽध्यायः ॥

च्यवनस्य जननम् ॥ १ ॥ भृगुणाग्नेः सर्वभक्षत्वशापः ॥ २ ॥

सूतः—

अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् ।
ब्रह्मन्वराहरूपेण मनोमारुतरंहसा ॥ १

ततः स कुक्षौ निवसन् गर्भो भृगुकुलोद्वहः ।
रोषान्मातुश्च्युतः कुक्षेश् च्यवनस्तेन सोऽभवत् ॥ २

तं दृष्ट्वा मातुरुदराच्च् च्युतमादित्यवर्चसम् ।
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ॥ ३

सा तमादाय सुश्रोणी ससार भृगुनन्दनम् ।
च्यवनं भार्गवं ब्रह्मन् पुलोमा दुःखमूर्च्छिता ॥ ४

तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः[1] ।
अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी ॥ ५

अनुवर्त्मे सृता तस्या भृगोः पत्न्या यशस्विनः ।
तस्या मार्गं [2]गतवतीं दृष्ट्वा तु सरितं तदा ॥ ६

---

1. क-ख-ग—रुदन्तीं बाष्पपूर्णाक्षीं भृगोर्भार्यामनिन्दिताम् ।
सान्त्वयामास भगवान् वधूं ब्रह्मा पितामहः ॥
[अधिकः पाठः ।]

2. क-ख-ग—सृ

नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः ।
वधूसरेति भगवान् च्यवनस्याश्रमं प्रति ॥ ७

स एव च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान् ।
तं ददर्श पिता तत्र च्यवनं तां च भामिनीम् ॥ ८
स पुलोमां तदा भार्यां पप्रच्छ कुपितो भृगुः ॥ ८॥

केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षवे ।
न हि त्वां वेद तद्रक्षो मद्भार्यां चारुहासिनीम् ॥ ९॥

तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा ।
बिभेति को न शापान्मे कस्य वायं व्यतिक्रमः ॥ १०॥

पुलोमा—

अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता ।
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥ ११॥

साऽहं तव सुतस्यास्य तेजसा परिमोक्षिता ।
भस्मीभूतं तु तद्रक्षो मामुत्सृज्य पपात वै ॥ १२॥

सूतः—

इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् ।
शशापाग्निमतिक्रुद्धः सर्वभक्षो भवेदिति ॥ १३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ४ ॥ पौलोमपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये १३॥ श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥

क्रोधेनाग्निकृत आत्मोपसंहारः ॥ १ ॥ ब्रह्मस्तुत्या स्वशिखादीपनं च ॥ २ ॥

---

सूतः—

शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत् ।
किमिदं साहसं ब्रह्मन् कृतवानसि सांप्रतम् ॥ १

धर्मे प्रयतमानस्य सत्यं च वदतः समम् ।
पृष्टो यदब्रवं सत्यं व्यभिचारोऽत्र को मम ॥ २

पृष्टो हि साक्षी यः साक्ष्यं [1]जानमानोऽन्यथा वदेत् ।
स पूर्वानात्मनः सप्त कुले हन्यात्तथाऽपरान् ॥ ३

यश्च कार्यार्थतत्त्वज्ञो [2]जानमानो न भाषते ।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥ ४

शक्तोऽहमभिशप्तुं त्वां मान्यास्तु ब्राह्मणा मम ।
जानतोऽपि च ते व्यक्तं कथयिष्ये निबोध तत् ॥ ५

एकोऽहं बहुधाऽऽत्मानं कृत्वा तिष्ठामि मूर्तिषु ।
अग्निहोत्रेषु सत्रेषु क्रियासु च मखेषु च ॥ ६

---

1. क-ख-ग—जानानश्चा  2. क-ख-ग—जानानोऽपि

वेदोक्तेन विधानेन मयि यद्धूयते हविः ।
देवताः पितरश्चैव तृप्तास्तेन भवन्ति वै ॥ ७

आपो देवगणाः सर्वे आपः पितृगणास्तथा ।
दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ॥ ८

देवताः पितृभिस्तस्मात् पितरश्चापि देवताः ।
एकीभूताश्च पूज्यन्ते पृथक्त्वेन च पर्वसु ॥ ९

देवाश्च पितरश्चैव जुह्वते मयि यत्सदा ।
त्रिदशानां पितॄणां च मुखमेवमहं स्मृतम् ॥ १०

अमावास्यां च पितरः पौर्णमास्यां च देवताः ।
मन्मुखेनैव हूयन्ते भुञ्जते यद्धुतं हविः ॥ ११

सर्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम् ।
चिन्तयित्वा ततो वह्निश् चक्रे संहारमात्मनः ॥ १२

द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ।
निरोंकारवषट्काराः स्वधास्वाहाविवर्जिताः ॥ १३

विनाऽग्निना प्रजाः सर्वास् तदा ह्यासन्सुदुःखिताः ।
अथर्षयः समुद्विग्ना देवान् गत्वाऽब्रुवन्वचः ॥ १४

अग्निनाशात्क्रियाभ्रंशाद् भ्रान्ता लोकास्त्रयोऽनघाः ।
विधध्वमत्र यत्कार्यं न स्यात्कालात्ययो महान् ॥ १५

अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य च ।
अग्नेरावेदयञ्शापं क्रियासंहारमेव च ॥ १६

भृगुणा वै महाभाग शप्तोऽग्निः कारणान्तरे ।
कथं देवमुखं भूत्वा यज्ञभागाग्रभुक् तथा ॥ १७

हुतभुक्सर्वलोकेषु सर्वभक्षत्वमेष्यति ।
श्रुत्वा तु तद्वचस्तेषामग्निमाहूय लोककृत् ॥ १८
उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् । १८॥

ब्रह्मा—

लोकानामिह सर्वेषां त्वं कर्ता चान्त एव च ॥ १९

त्वं धारयसि लोकांस्त्रीन् [1]गुणानां च प्रवर्तकः ।
स तथा कुरु देवेश नोच्छिद्येरन् क्रियादयः ॥ २०

कस्मादेवं स मूढस्त्वं ईशस्त्वं हि हुताशन ।
त्वं पवित्रं सदा लोके सर्वभूतगतश्च ह ॥ २१

न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि ।
उपादानेऽर्चिषो यास्ते सर्वं धक्ष्यन्ति ताः शिखाः ॥ २२

यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते ।
तथा त्वदर्चिर्निर्दग्धं सर्वं शुद्धं भविष्यति ॥ २३

---

1. क-ख-ग—क्रियाणां त्वं

तदग्ने त्वं महत्तेजः स्वप्रभावाद्विनिर्गतम् ।
स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो ॥ २४

देवानां चात्मना भागं गृहाण त्वन्मुखे हुतम् ॥ २४॥

सूतः—

एवमस्त्विति तं वह्निः प्रत्युक्त्वाथ पितामहम् ।
जगाम शासनं कर्तुं देवस्य परमेष्ठिनः ॥ २५॥

देवर्षयश्च मुदिताः प्रतिजग्मुर्यथागतम् ।
ऋषयश्च यथापूर्वं क्रियाः सर्वाः प्रचक्रिरे ॥ २६॥

दिवि देवा मुमुदिरे भूतसङ्घाश्च लौकिकाः ।
अग्निश्च परमां प्रीतिं अवाप [1]हुतकल्मषः ॥ २७॥

एवमेष पुरावृत्त इतिहासोऽग्निशापजः ।
पुलो[2]मस्य विनाशश्च च्यवनस्य च संभवः ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ४ ॥ पौलोमपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः ।]

---

1. क-ख-ग—ह 2. क-ग—म्रोऽथ

## ॥ सप्तमोऽध्यायः ॥

रुरुकथा ॥ १ ॥ प्रमद्वरायाः सर्पदंशेन रुरोर्दुःखम् ॥ २ ॥

सूतः—

स चापि च्यवनो ब्रह्मन् भार्गवोऽजनयत्सुतम् ।
सुकन्यायां महाभागं प्रमतिं दीप्ततेजसम् ॥ १

प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत् ।
रुरोः प्रमद्वरायां तु शुनकः समपद्यत ॥ २

शौनकस्त्वं महाभागश् शुनकस्य सुतोऽभवत् ।
शौनकस्त्वं महासत्त्वः सर्वभार्गवनन्दनः ॥ ३
इज्यातपस्वी तीव्रे वै [1]स्थिरः स्थितिवशः श्रुतः ॥ ३॥

तस्य ब्रह्मन्रुरोः सर्वं चरितं भूरितेजसः ।
विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः ॥ ४॥

ऋषिरासीन्महान्पूर्वं तपोविद्याविशारदः ।
स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ॥ ५॥

एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् ।
गन्धर्वराजो विप्रर्षेर् विश्वावसुरिति श्रुतः ॥ ६॥

1. क—स्थितवचः श्रितः, ग—स्थितः स्थिरवचश्श्रितः

अथाप्सरा मेनका सा तं गर्भं भृगुनन्दन ।
उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ॥ ७॥

उत्सृज्य चै[1]व तं गर्भं नद्यास्तीरे जगाम ह ॥ ८

कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया ।
तां ददर्श समुत्सृष्टां नदीतीरे महानृषिः ॥ ९

स्थूलकेशः सुतेजस्वी विजने बन्धुवर्जिताम् ।
स तां दृष्ट्वा तदा कन्यां स्थूलकेशो द्विजोत्तमः ॥ १०

जग्राहाथ मुनिश्रेष्ठः कृपाविष्टः पुपोष च ।
ववृधे सा वरारोहा तस्याश्रमपदे शुभा ॥ ११

प्रमदाभ्यो वरा सा तु सर्वरूपगुणैर्युता ।
ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः ॥ १२

तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम् ।
बभूव किल धर्मात्मा मदनानुगतात्मवान् ॥ १३

पितरं सखिभिः सोऽथ याचयामास भार्गवः ।
प्रमतिश्चाभ्ययाच्छ्रुत्वा स्थूलकेशं यशस्विनम् ॥ १४

ततः प्रादात्तदा कन्यां रुरवे तां प्रमद्वराम् ।
विवाहं [2]कल्पयामास नक्षत्रे भगदैवते ॥ १५

ततः कतिपयाहस्सु विवाहे समुपस्थिते ।

1. अ-तं 2. क-ख-ग—स्थापयित्वाग्रे

सर्वाभिः सखिभिस्त[1]त्र क्रीडन्ती वरवर्णिनी ॥ १६

नापश्यत्तं प्रसुप्तं वै भुजंगं तिर्यगायतम् ।
पदा शीर्षे समाक्रामन् मुमूर्षुः कालचोदिता ॥ १७

स तस्याः संप्रमत्तायाश् चोदितः कालधर्मणा ।
विषोपलिप्तैर्दशनैर् न्यदंशच्च न्यपातयत् ॥ १८

सा दष्टा सहसा भूमौ पपात गतचेतना ।
व्यसुरप्रेक्षणीया च प्रेक्षणीयतमाकृतिः ॥ १९

प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता ।
भूयो मनोहरतरा बभूव तनुमध्यमा ॥ २०

तां ददर्श पिता चैव ते चैवान्ये तपस्विनः ।
विचेष्टमानां पतितां भूतले पद्मवर्चसम् ॥ २१

ततः सर्वे द्विजवराः समाजग्मुः कृपान्विताः ।
स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः ॥ २२

उद्दालकः [2]कठश्चैव श्वेतकेतुस्तथैव च ।
भरद्वाजः कौणकुत्स आर्ष्टिषेणोऽथ गौतमः ॥ २३

प्रमतिः सह पुत्रेण तथान्ये वनवासिनः ।
तां ते कन्यां व्यसुं दृष्ट्वा भुजंगस्य विषार्दिताम् ॥ २४

---

1. अ—स्य  2. क-ख-ग—कमठरः

रुरुदुः कृपयाऽऽविष्टा रुरुस्त्वार्तो बहिर्गतः ।
ते च सर्वे द्विजश्रेष्ठास् तत्रैवोपाविशंस्तदा ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ४ ॥ पौलोमपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

## ॥ अष्टमोऽध्यायः ॥

प्रमद्वराजीवनं, तया सह रुरोर्विवाहः, रुरुडुण्डुभसंवादः ॥ १ ॥ जनमेजयसत्रप्रस्तावश्च ॥ २ ॥

सूतः—

तेषु तत्रोपविष्टेषु ब्राह्मणेषु समन्ततः ।
रुरुः शोकसमापन्नः प्ररुरोद सुदुःखितः ॥ १

शोकेनाभिहतः सोऽथ विलपन्करुणं बहु ।
अब्रवीद्वचनं शोचन् प्रियां चिन्त्य प्रमद्वराम् ॥ २

शेते सा भुवि तन्वङ्गी मम शोकविवर्धिनी ।
[1]बान्धवानां च सर्वेषां किं नु दुःखमतः परम् ॥ ३

1. क-ख-ग—प्राणानपहरन्तीव पूर्णचन्द्रनिभानना ।
यदि पीनायतश्रोणी पद्मपत्रनिभक्षणा ॥
मुमूर्षुरपि मे प्राणान् आदायाशु गमिष्यति ।
पितृमातृसखीनां च लुप्तपिण्डस्य तस्य मे ॥ } अधिकः पाठः ।

यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन सा जीवतु मम प्रिया ॥ ४

तथा च जन्मप्रभृति यतात्माऽहं धृतव्रतः ।
प्रमद्वरा तथाद्यासौ उत्तिष्ठतु मम प्रिया ॥ ५

[1]प्रलपन्तमतीवार्तं रुरुं दीनतरं तदा ।
देवदूतः समागम्य वचनं चेदमब्रवीत् ॥ ६

देवदूतः—

अभिधत्से[2]भवान्वाचा रुरो दुःखेन तन्मृषा ।
न तु मर्त्यस्य धर्मात्मन् आयुर[3]स्तु गतायुषः ॥ ७

गतायुरेषा कृपणा गन्धर्वाप्सरसोः सुता ।
तस्माच्छोके मनस्तात मा कृथास्त्वं कथंचन ॥ ८

उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्तुं त्वं लप्स्यसीमां प्रमद्वराम् ॥ ९

---

1. क-ख-ग—कृष्णे विष्णौ हृषीकेशे लोकेशेऽसुरविद्विषि ।
यदि मे निश्चला भक्ति मंम जीवतु सा प्रिया ॥
विलप्यमाने तु रुरौ सर्वे देवाः कृपान्विताः ।
दूतं प्रस्थापयामासुः सन्दिश्यास्य हितं वचः ॥
स दूतस्त्वरितोऽभ्येत्य देवानां प्रियकृच्छुचिः ।
उवाच देववचनं रुरुमाभाष्य दुःखितम् ॥
देवैस्सर्वैरहं ब्रह्मन् प्रेषितोऽस्मि तवान्तिकम् ।
त्वद्धितं त्वद्धितैरुक्तं श्रृणु वाक्यं द्विजोत्तम ॥
[अधिकः पाठः ।]

2. क-ख-ग—ह यद्वाचा 3. क-ख-ग—स्ति

रुरुः—

क उपायः कृतो देवैर् ब्रूहि तत्त्वेन खेचर ।
करिष्येऽहं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥ १०

देवदूतः—

आयुषोऽर्धं प्रयच्छस्व कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्या प्रमद्वरा ॥ ११

रुरुः—

आयुषोऽर्धं प्रयच्छामि कन्यायै खेचरोत्तम ।
शृङ्गाररूपाभरणा सोत्तिष्ठतु मम प्रिया ॥ १२

सूतः—

ततो गन्धर्वराजश्च देवदूतश्च सत्तम ।
धर्मराजमुपेत्येदं वचनं प्रत्यभाषताम् ॥ १३

देवदूतः—

धर्मराजायुषोऽर्धेन रुरोर्भार्या प्रमद्वरा ।
समुत्तिष्ठतु कल्याणी मृतैव यदि मन्यसे ॥ १४

धर्मराजः—

प्रमद्वरा रुरोर्भार्या देवदूत यदीच्छसि ।
उत्तिष्ठत्वायुषोऽर्धेन रुरोरेव समन्विता ॥ १५

सूतः—

एवमुक्ते ततः कन्या सोदतिष्ठत् प्रमद्वरा ।
रुरोस्तस्यायुषोऽर्धेन सुप्तेव वरवर्णिनी ॥ १६

एतद्दृष्टं [1]महत्कर्म रुरोरुत्तमतेजसः ।
तपसातिप्रवृद्धस्य भार्यार्थेऽर्धं प्रयच्छतः ॥ १७

तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा ।
विवाहं तौ च रे[2]जाते परस्परहितैषिणौ ॥ १८

स लब्ध्वा दुर्लभां भार्यां पद्मकिञ्जल्क[3]सप्रभाम् ।
[4]मतिं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥ १९

स दृष्ट्वा जिह्मगान् सर्वास् तीक्ष्णकोपसमन्वितः ।
अभिहन्ति यदासन्नं गृह्य प्रहरणं तदा ॥ २०

स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् ।
शयानं तत्र चापश्यड् डुण्डुभं वयसान्वितम् ॥ २१

तत उद्यम्य दण्डं स कालदण्डोपमं तदा ।
[5]अहनत् कुपितो विप्रस् तमुवाचाथ डुण्डुभः ॥ २२

नापराध्यामि ते किंचिद् अहमद्य तपोधन ।
संरम्भोऽत्र किमर्थं वै मा मा हिंसी रुषान्वितः ॥ २३

रुरु:—

मम प्राणसमा भार्या दष्टासीद्भुजगेन वै ।

---

क-ख-ग— 1. भविष्यद्धि 2. मा 3. सन्निभाम्
4. व्रतं

5. क-ग— अभ्यघ्नत्
ख— अभ्यघ्नन्

तत्र मे समयो घोर आत्मनोरग वै कृतः ॥ २४

भुजङ्गमान् समाहन्यां यान् यान् पश्येयमित्युत ।
ततोऽहं त्वां जिघांसामि जीवितेन विमोक्ष्यसे ॥ २५

डुण्डुभ—
अन्ये ते भुजगा विप्र ये दशन्तीह मानवान् ।
डुण्डुभानहिशब्देन न त्वं हिंसितुमर्हसि ॥ २६

एकानर्थान्पृथग्धर्मान् [1]एकदुःखान्पृथक्सुखान् ।
डुण्डुभानहिशब्देन न त्वं हिंसितुमर्हसि ॥ २७

सूतः—
इति श्रुत्वा वचस्तस्य भुजगस्य रुरुस्तदा ।
नावधीद्भयसंविग्न ऋषिं मत्वा च डुण्डुभम् ॥ २८

उवाच चैनं भगवान् रुरुस्तं भुजगं तदा ।
केन त्वं भुजग ब्रूहि कोऽसीमां विक्रियां गतः ॥ २९

डुण्डुभः—
अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात् ।
सोऽहं शापेन विप्रस्य भुजगत्वमुपागतः ॥ ३०

रुरुः—
किमर्थं शप्तवान्क्रुद्धो द्विजस्त्वां भुजगोत्तम ।
कियन्तं चैव कालं ते वपुरेतद्भविष्यति ॥ ३१

1. अ—नै

डुन्डुभः—
सखा बभूव मे पूर्वं खगमो नाम वै द्विजः ।
भृशं संशितवाक्तात तपोबलसमन्वितः ॥ ३२
स मया क्रीडता सर्पं कृत्वा तृणमयं तदा ।
अग्निहोत्रे प्रमत्तः सन् भीषितः प्रमुमोह वै ॥ ३३
लब्ध्वा च स पुनः संज्ञां मामुवाच तपोधनः ।
निर्दहन्निव कोपेन सत्यवाक्संशितव्रतः ॥ ३४
यथावीर्यः कृतः सर्पस् त्वयायं मद्विभीषया ।
तथा वीर्यो भुजंगस्त्वं आत्मकोपाद्भविष्यसि ॥ ३५
तस्याहं तपसो वीर्यं जानमानस्तपोधन ।
[1]भृशमुद्विग्नहृदयस् तमवोचं तपोधनम् ॥ ३६
प्रयतः सन् प्रमादाच्च प्राञ्जलिः प्रणतः स्थितः ।
सखेति साहसं तात हास्यार्थं वै कृतं मया ॥ ३७
क्षन्तुमर्हसि मे ब्रह्मन् शापोऽयं विनिवर्त्यताम् ।
स तु मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ॥ ३८
मुहुरुष्णं विनिश्वस्य सुसंभ्रान्तस्तपोधनः ।
नानृतं वै मया प्रोक्तं भवितेदं कथञ्चन ॥ ३९
यत्तु वक्ष्यामि ते सर्वं शृणु तत् संशितव्रत ।

1. क-ख-ग—मुहुरुष्णं विनिश्वस्य सुसंभ्रान्तस्तपोधनः ।
[अधिकः पाठः ।]

श्रुत्वा च हृदि मे वाक्यं इदमस्तु तवानघ ॥ ४०
उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः ।
तं दृष्ट्वा शापमोक्षस्ते भविता न चिरादिव । ४१
स त्वं रुरुरिति ख्यातः प्रमतेरात्मजः शुचिः ।
स्वरूपं प्रतिलभ्याहं अद्य वक्ष्यामि ते हितम् ॥ ४२
अहिंसा परमो धर्मः सर्वप्राणभृतां वर ।
तस्मात्प्राणभृतः सर्वान् न हिं[1]सेद्ब्राह्मणः कचित् ॥ ४३
ब्राह्मणः सौम्यभावेन जायतेति [2]पुरा श्रुतिः ।
वेदवेदाङ्गवित्तात सर्वभूताभय[3]प्रद ॥ ४४
अहिंसा सत्यवचनं क्षमा चेति विनिश्चितम् ।
ब्राह्मणस्य परो धर्मो वेदानां धारणादपि ॥ ४५
क्षत्रियस्य च यो धर्मः स नेहेष्यति वै तव ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ ४६
तदिदं क्षत्रियस्यासीत् कर्मणा शृणु मे रुरो ।
जनमेजयस्य धर्मात्मन् सर्पाणां हिंसने पुरा ॥ ४७
परित्राणं च भीतानां सर्पाणां ब्राह्मणादपि ।
तपोवीर्यबलोपेताद् वेदवेदाङ्गपारगात् ॥ ४८
अस्तीकाद्द्विजमुख्याद्वै सर्पसत्रे द्विजोत्तम ॥ ४८॥

---

1. क-ख-ग—स्यात्   2. क-ख-ग—परा   3. क-ख-ग—प्रदः

रुरुः—

कथं हिंसितवान्सर्पान् क्षत्रियो जनमेजयः ।

सर्पा वा हिंसितास्तेन किमर्थमृषिसत्तम ॥ ४९॥

किमर्थं मोक्षितास्तेन पन्नगाश्चैव शंस मे ।

अस्तिकेन तदाचक्ष्व श्रोतुमिच्छाम्यशेषतः ॥ ५०॥

ऋषिः—

श्रोष्यासि त्वं रुरो वत्स [1]अस्तीकचरितं महत् ।

ब्राह्मणानां कथयतां इत्युक्त्वान्तरधीयत ॥ ५१॥

सूतः—

रुरुस्त्वथ वनं सर्वे पर्यधावत्समन्ततः ।

तमृषिं [2]द्रष्टुमन्विच्छन् संश्रान्तो न्यपतद्भुवि ॥ ५२॥

लब्धसंज्ञो रुरुः सोऽथ तच्चाचख्यौ पितुस्तदा ।

पित्रे तु सर्वमाख्याय डुण्डुभस्य वचोऽर्थवत् ॥ ५३॥

अपृच्छत्पितरं भूयः सोऽस्तिकस्य वचस्तदा ।

[3]आख्यातवांस्तदाऽऽख्यानं डुण्डुभेनाथ कीर्तितम् ॥ ५४॥

तत्कीर्त्यमानं भगवन् श्रोतुमर्हसि तत्त्वतः ।

पिता चास्य तदाख्यानं पृष्टः सर्वं न्यवेदयत् ॥ ५५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ४ ॥ पौलोमपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ५५॥ श्लोकाः]
॥ समाप्तं पौलोमपर्व ॥

---

1. क-ख-ग—आस्तिकं 2. क-ख-ग—नष्ट
3. क-ख-ग—यत्तदाख्यानमखिलं

## ॥ नवमोऽध्यायः ॥

(अथ अस्तीकपर्व ॥ ५ ॥)



अस्तीकस्योपाख्यानम् ॥ १ ॥



शौनकः—

किमर्थं राजशार्दूलः स राजा जनमेजयः ।
सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ॥ १

अस्तीकस्तु द्विजश्रेष्ठः किमर्थं जपतां वरः ।
मोक्षयामास भुजगान् दीप्तात्तस्माद्धुताशनात् ॥ २

कस्य पुत्रः स राजासीत् सर्पसत्रं य आहरत् ।
स च द्विजातिप्रवरः कस्य पुत्रो वदस्व तत् ॥ ३

श्रोतुमिच्छाम्यशेषेण कथामेतां मनो[1]हराम् ।
अस्तीकस्य पुराणस्य ब्राह्मणस्य तपस्विनः ॥ ४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ५ ॥ आस्तीकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४ श्लोकाः]



1. क-ख-ग—रमाम्

## ॥ दशमोऽध्यायः ॥

जरत्कारोरुपाख्यानम् ॥ १ ॥

सूतः—

महदाख्यानमास्तीकं यत्रैतत्प्रोच्यते बुधैः ।
सर्वमेतदशेषेण शृणु मे वदतां वर ॥ १

इतिहासमिमं वृद्धाः पुराणं परिचक्षते ।
कृष्णद्वैपायनप्रोक्तं नैमिशारण्यवासि[1]भिः ॥ २

पूर्वं प्रचोदितः सूतः पिता मे रोमहर्षणः ।
शिष्यो व्यासस्य मेधावी ब्राह्म[2]णैरिदमुक्तवान् ॥ ३

तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथम् ।
इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते ॥ ४

[3]अस्तीकस्य पिता ह्यासीत् पितामहसमो भुवि ।
ब्रह्मचारी यताहारस्तपस्युग्रे रतस्तदा ॥ ५

जरत्कारुरिति ख्यात ऊर्ध्वरेता महानृषिः ।
यायावराणां धर्मज्ञः सततं संशितव्रतः ॥ ६

अटमानः कदाचित्स स्वान् ददर्श पितामहान् ।

---

1. क-ख-ग—न 2. क-ख-ग—णोष्विद
3. क-ख-ग—कथयिष्याम्यशेषेण सर्वपापप्रणाशनम् ।
[अधिकः पाठः ।]

लम्बमानान्महागर्ते पादैरूर्ध्वैरवाङ्मुखान् ॥ ७
तानब्रवीत्स दृष्ट्वैव जरत्कारुः प्रतापवान् ।

जरत्कारु —

के वै भवन्तो लम्बन्ते गर्तेऽस्मिन्वै ह्यधोमुखाः ॥ ८
वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते ।
मूषिकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना ॥ ९

पितरः—

यायावरा नाम वयं ऋषयः संशितव्रताः ।
संतानप्रक्षयाद्ब्रह्मन् अधो गच्छाम मेदिनीम् ॥ १०
अस्माकं संततिस्त्वेको जरत्कारुरिति श्रुतः ।
मन्दभाग्योऽल्पभाग्यानां तप एव समा[1]श्रितः ११
न स पुत्राञ्जनयितुं दारान्मूढश्चिकीर्षति ।
तेन लम्बामहे गर्ते संतानप्रक्षयादिह ॥ १२
अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा ।
कस्त्वं बन्धुरिहा[2]स्माकमनुशोचसि सत्तम ॥ १३
ज्ञातुमिच्छामहे ब्रह्मन् को भवानिह तिष्ठति ।
किमर्थं चैव नः शोच्यान् अनुकम्पितुमिच्छति ॥ १४

जरत्कारु —

मम पूर्वे भवन्तो वै पितरः सपितामहाः ।
ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम् । १५

---

1. क-ख-ग—स्थित. 2. क-ख-ग—वा

पितरः—

यतस्व यत्नवांस्तात संतानाय कुलस्य नः ।

आत्मनोऽर्थेऽस्मदर्थे [1]वा गृहमेधी भवाद्य भो ॥ १६

न हि धर्मफलैस्तात न तपोभिः स्वसंचितैः ।

तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति च ॥ १७

तद्दारग्रहणे यत्नं संतत्यर्थे मनः कुरु ।

पुत्रक त्वां नियोक्ष्याम एतन्नः परमं हितम् ॥ १८

जरत्कारुः—

न दारान्वै [2]करिष्येऽहं इति मे भाषितं मनः ।

भवतां तु हितार्थाय करिष्ये दारसंग्रहम् ॥ १९

समयेन च कर्ताऽहं अनेन विधिपूर्वकम् ।

तथा यद्युपलप्स्यामि करिष्ये नान्यथा त्वहम् ॥ २०

सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभिः ।

भैक्ष्यवत्तामहं कन्यां उपयंस्ये विधानतः ॥ २१

दरिद्राय हि मे कन्यां को दास्यति विशेषतः ।

प्रतिग्रहीष्ये भिक्षां तु यदि कश्चित्प्रदास्यति ॥ २२

एवं दारक्रिया[3]योगे प्रयतिष्ये पितामहाः ।

अनेन विधिना शश्वत् करिष्ये नाहमन्यथा ॥ २३

तत्रोत्पत्स्यति चेज्जन्तुर् भवतां तारणाय वै ।

शाश्वतं स्थानमासाद्य मोदन्तु पितरो मम ॥ २४

---

1. क—च धर्म इत्येव वाभि भो। ख-ग—धर्म इत्येव चाभिभो ।
2. क-ख-ग—करिष्यामि बुद्धिर्मे तपसि स्थिता 3. क-ख-ग—हेतोः

सूतः—

ततो निवेशाय तदा स विप्रः संशितव्रतः ।
महीं चचार दारार्थी न च दारां[1]स्त्वविन्दत ॥ २५

स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन् ।
चुक्रोश कन्या[2]भिक्षेति तिस्रो वाचः शनैः शनैः ॥ २६

तां वासुकिः प्रत्यगृह्णाद् उद्यम्य भगिनीं तदा ।
न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन् ॥ २७

सनाम्नी[3]मुत्तमां भार्यां गृह्णीयामिति तस्य हि ।
मनो निविष्टमभवज् जरत्कारोर्महात्मनः ॥ २८

तमुवाच महाप्राज्ञो जरत्कारुर्महामनाः ।
किंनाम्नी भगिनीयं ते ब्रूहि स [4]त्वं भुजंगम ॥ २९

वासुकिः—

जरत्कारो जरत्कारुः स्वसेयमनुजा मम ।
त्वदर्थं रक्षिता पूर्वं प्रतीच्छेमां द्विजोत्तम ॥ ३०

सूतः—

[5]मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर ।
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ॥ ३१

---

क-ख-ग— 1. नवि 2. भिक्षार्थी 3. मुद्यतां 4. त्वं

5. क-ख-ग—एवमुक्त्वा तदा प्रादाद्भार्यार्थे वरवर्णिनीम् ।
[अधिकः पाठः]

तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तमः ।
स्वसारमृषये तस्मै सुवृत्ताय महात्मने ॥ ३२

स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ।
अस्तीको नाम पुत्रश्च तस्यां जज्ञे महामनाः ॥ ३३

तपस्वी च महात्मा च वेदवेदाङ्गपारगः ।
समः सर्वस्य लोकस्य पितृमातृभयापहः ॥ ३४

अथ कालस्य महतः पाण्डवेयो नराधिपः ।
आजहार महायज्ञं सर्पसत्रमिति श्रुतम् ॥ ३५

तस्मिन्प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै ।
मोचयामास [1]ताञ्शापाद् अस्तीकः स महातपाः ॥ ३६

नागांश्च मातुलांश्चैव तथा संबन्धिबान्धवान् ।
पितॄंश्च तारयामास संतत्या तपसा तथा ॥ ३७

व्रतैश्च विविधैर्ब्रह्मन् स्वाध्यायैश्चानृणोऽभवत् ।
देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः ॥ ३८

ऋषींश्च ब्रह्मचर्येण सन्तत्या च पितामहान् ।
अपहृत्य गुरुं भारं पितॄणां संशितव्रतः ॥ ३९

जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः ।
अस्तीकं च सुतं प्राप्य धर्मं चानुत्तमं मुनिः ॥ ४०

---

1. क-ख ग—तं शापं

जरत्कारुः सुमहता कालेन स्वर्गमेयिवान् ॥ ४०॥

एतदाख्यानमास्तीकं यथावत्[1] कथितं मया ।
प्रब्रूहि भृगुशार्दूल किं भूयः कथ्यतामिति ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ५ ॥ आस्तीकपर्वणि [2]द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ४१॥ श्लोकाः]

---

## ॥ एकादशोऽध्यायः ॥

---

अस्तीकाख्यानविस्तरः ॥ १ ॥ सर्पाणां गरुडारुणयोश्चोत्पत्तिः ॥ २ ॥

---

शौनकः—

सौते कथय तत्वेन विस्तरेण कथामिमाम् ।
अस्तीकस्य कवेः साधोः शुश्रूषा परमा हि नः ॥ १

मधुरं कथ्यते सौते श्लक्ष्णाक्षरपदं त्वया ।
प्रीयामहे भृशं तात पितेवेदं प्रभाषसे ॥ २

अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव ।
आचष्टे तद्यथाऽऽख्यानं पिता ते त्वं तथा वद ॥ ३

---

1. क-ख-ग—कीर्तितं
2. क-ख-ग—कोशेष्वत्रैव प्रथमाध्यायसमाप्तिः

सूत —

आयुष्मन्निदमाख्यानं आस्तीकं कथयामि ते ।
यथाश्रुतं कथयतः सकाशाच्च पितुर्मया ॥ ४

पुरा देवयुगे ब्रह्मन् पितामहसुते शुभे ।
आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुते तदा ॥ ५

ते भार्ये काश्यपस्यास्तां कद्रूश्च विनता तथा ।
प्रादात्ताभ्यां [1]वरौ प्रीतः पितमहसमः पतिः ॥ ६

काश्यपो धर्मपत्नीभ्यां [2]परया च मुदान्वितः ।
वरातिसर्गं श्रुत्वैव काश्यपादुत्तमं च ते ॥ ७

हर्षादप्रतिमां प्रीतिं प्रापतुः स्म वरस्त्रियौ ।
वव्रे कद्रूः सुतान्नागान् सहस्रं तुल्यतेजसः ॥ ८

द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले ।
ओजसा तेजसा चैव विक्रमेणाधिकौ सुतौ ॥ ९

तस्यै भर्ता वरं प्रादाद् ईदृशौ तौ भाविष्यतः ।
एवमस्त्विवति तं चाह काश्यपं विनता तदा ॥ १०

[3]कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ ।
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यतेजसाम् ॥ ११

---

क-ख-ग— { 1. वरं प्रीतः प्रजापति 2. सम्यक्प्रीत्या समन्वितः
3. सा प्रीता चाभवत्तौ तु }

धार्यौ प्रयत्नतो गर्भौ इत्युक्त्वा स महातपाः ।
[1]ते भार्ये वरसंहृष्टे काश्यपो वनमाविशत् ॥ १२
कालेन महता कद्रू[2]रण्डानां दशतीर्दश ।
जनयामास विप्रेन्द्र द्वे त्वण्डे विनता तदा ॥ १३
ततोऽण्डानि निदधुः प्रहृष्टाः परिचारिकाः ।
सोपव[3]स्तुषु कुण्डेषु पञ्चवर्षशतानि च ॥ १४
ततः पञ्चशते [4]वर्षे कद्रूपुत्रा विनिस्सृताः ।
अण्डाभ्यां विनतायास्तु मिथुनं नाप्यदृश्यत ॥ १५
ततः पुत्रार्थिनी देवी व्रीडिता सा तपस्विनी ।
अण्डं बिभेद विनता तत्र पुत्रमदृश्यत ॥ १६
पूर्वार्धकायसं[5]पन्नं इतरेणाप्रकाशितम् ।
स पुत्रो रोषसंपन्नः शशापैनामिति श्रुतम् ॥ १७
सोऽहमेवं कृतो मातस्त्वया लोभपरीतया ।
शरीरेणासमग्रोऽद्य तस्माद्दासी भविष्यसि ॥ १८
पञ्च वर्षशतान्यस्या यया विस्पर्ध[6]से सह ।
एष च त्वां सुतो मात[7]र्दास्यकान्मोक्षयिष्यति ॥ १९
यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ।

---

क-ख-ग— 1. भार्ये परमसंहृष्टे　2. रण्डान्दशशतान्यथ　3. स्नेहेषु　4. पूर्णे　5. पूर्णमितरेणाप्रकाशता　6. ते　7. दासीत्वान्मोक्षयिष्यति

न करिष्यस्यदेहं वा व्यङ्गं वापि तपस्वि[1]नम् ॥ २०
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया ।
विशिष्टं फलमीप्सन्त्या पञ्चवर्षशतात्परम् ॥ २१

सूतः—

एवं शप्त्वा ततः पुत्रो विनतामन्तरिक्षगः ।
अरुणो दृश्यते ब्रह्मन् प्रभातसमये तदा ॥ २२
[2]गरुडोऽपि यथाकालं जज्ञे पन्नगसूदनः ।
स जातमात्रो विनतां परित्यज्य खमाविशत् ॥ २३
आदास्यन्नात्मनो भोज्यं अन्नं विहितमस्य यत् ।
विधात्रा भृगुशार्दूल क्षुधितस्य बुभुक्षतः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ ५ ॥ आस्तीकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये २४ श्लोका ।]

---

1. क-ख-ग—नी

2. क-ख-ग— अधिकः पाठः ॥
उद्यन्नथ सहस्रांशुर्दृष्ट्वा तमरुणं प्रभुः ।
स्वतेजसा प्रज्वलन्तमात्मनः समतेजसम् ॥
सारथ्ये कल्पयामास प्रीयमाणस्तमोनुदं ।
सोऽपि तं रथमारुह्य भानोरमिततेजसः ॥
सर्वलोकप्रदीपस्य ह्यमरोप्यरुणोऽभवत् ।

## ॥ द्वादशोऽध्यायः ॥

भगवता देवानां समुद्रमथने नियमनम् ॥ १ ॥

सूतः—

एतस्मिन्नेव काले तु भगिन्यौ ते तपोधन ।
अपश्यतां समायान्तं उच्चैःश्रवसमन्तिकात् ॥ १
यं [1]ते देवगणाः सर्वे हृष्टरूपाह्यपूजयन् ।
मथ्यमानेऽमृते जातं अश्वरत्नमनुत्तमम् ॥ २
महौघबलमश्वानां दिव्यं जववतां वरम् ।
श्रीमन्तमजरं दिव्यं सर्वलक्षणलाक्षितम् ॥ ३

शौनकः

कथं तदमृतं देवैर् मथितं क च शंस मे ।
[2]यत्र [3]जज्ञे महावीर्यः सोऽश्वराजो महाद्युतिः ॥ ४

सूतः—

ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ॥ ५
काञ्चनाभरणं चित्रं देवगन्धर्वसेवितम् ।
अप्रमेयमनाधृष्यं अधर्मबहुलैर्जनैः ॥ ६
व्यालैराचरितं घोरैर् दिव्यौषधिविदीपितम् ।

---

1. क-ख-ग—तु
2. क-ख-ग—कारणं चात्र मथने संजातममृतात्परम् ।
3. क-ख-ग—जातो [अधिकः पाठः।]

नाकमावृत्य तिष्ठन्तं उ[1]च्छ्रायेण महागिरिम् ॥ ७
अगम्यं मनसाप्यन्यैर् नदीवृक्ष[2]गणान्वितम् ।
नानापतगसङ्घैश्च नादितं सुमनोहरैः ॥ ८

तस्य पृष्ठं समारुह्य बहुरत्नाचितं शुभम् ।
अनन्तकल्पमद्वन्द्वं सुराः सर्वे महौजसः ॥ ९

ते मन्त्रयितुमारब्धास् तत्रा[3]सीना दिवौकसः ।
अमृतार्थे [4]समागम्य सर्वे चन्द्रपुरोगमाः ॥ १०

तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत् ।
चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्वशः ॥ ११

देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः ।
भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ ॥ १२

सर्वौषधीः समावाप्य सर्वरत्नानि चैव हि ।
मन्थध्वमुदधिं देवा वेत्स्यध्वममृतं ततः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ ५ ॥ आस्तीकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये १२ श्लोकाः]

---

1. क-ख-ग—च्छ्रयेण 2. ग—समन्वितम् 3. क-ख-ग—दी
4. क-ख-ग—पुरो गम्य

## ॥ त्रयोदशोऽध्यायः ॥

वासुकियोक्त्रेण मन्दरेण समुद्रमथनम् ॥ १ ॥ अमृतोत्पत्तिः ॥२॥ मोहिन्या देवेभ्योऽमृतदानम् ॥ ३ ॥

सूतः—

ततोऽभ्रशिखराकारैर् गिरिशृङ्गैरलंकृतम् ।
मन्दरं पर्वतवरं लताजालसमावृतम् ॥ १

नानाविहंगसंघुष्टं नाना[1]व्यालसमाकुलम् ।
किंनरैरप्सरोभिश्च देवैरपि च [2]शोभितम् ॥ २

एकादश सहस्राणि योजनानां समुच्छ्रितम् ।
अधोभूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् ॥ ३

[3]समुद्धर्तुं न शक्ता वै सर्वे देवगणास्तदा ।
विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् ॥ ४

भवन्तावत्र कुरुतां बुद्धिं नैःश्रेयसीं पराम् ।
मन्दरोद्धरणे यत्नः क्रियतां [4]तु हिताय नः ॥ ५

तथेति चाब्रवीद्विष्णुर् ब्रह्मणा सह भार्गव ।
अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः ॥ ६

---

क-ख-ग— 1. दंष्ट्रि 2. सेवि
3. त 4. च

[1]ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः ।
नारायणेन चाप्युक्तस् तस्मिन्कर्मणि वीर्यवान् ॥ ७
अथ पर्वतराजानं तमनन्तो महाबलः ।
उज्जहार बलाद्ब्रह्मन् सवनं सवनौकसम् ॥ ८
ततस्तेन सुराः सार्धं समुद्रमुपतस्थिरे ।
तमूचुरमृतार्थे वै निर्मथिष्याम[2]ते जलम् ॥ ९
अपांपतिरथोवाच ममाप्यंशो भवेत्ततः ।
सोढाऽस्मि विपुलं मर्दं मन्दरभ्रमणादिह ॥ १०
ऊचुश्च कूर्मराजानं अकूपारे सुरासुराः ।
गिरेरधिष्ठानमस्य भवान्भवितुमर्हति ॥ ११
कूर्मेण तु तथेत्युक्ते पृष्ठे तस्य समर्पितः ।
स शैलस्तस्य चाग्रं वै वज्रेणेन्द्रोऽप्यपीडयत् ॥ १२
मन्थानं मन्दरं कृत्वा ततो योक्त्रं च वासुकिम् ।
देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ॥ १३
अमृतार्थे ततो ब्रह्मन् सहिता दैत्यदानवैः ।
एकमन्त्रमुपाश्लिष्टा नागराज्ञो महाबलाः ॥ १४
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ।
वासुकेरग्रमाश्लिष्टा नागराज्ञो महासुराः ॥ १५

1. क-ख-ग—सूतः [अधिकः पाठः ।] 2. क-ख-ग—हे

शिर उद्यम्य नागस्य पुनः पुनरवाक्षिपन् ।
अनन्तो भगवान्देवो यतो नारायणः स्थितः ॥ १६

वासुकेरथ नागस्य सहसा क्षिप्यतोऽसुरैः ।
सधूमाश्चार्चिषो वह्नेर् निष्पेतुरसकृन्मुखात् ॥ १७

वासुकेर्मथ्यमानस्य निस्सृतेन विषेण च ।
अभवन्मिश्रितं तोयं तदा भार्गवनन्दन ॥ १८

मथनान्मन्दरेणाथ देववदानवबाहुभिः ।
[1]विषं तीक्ष्णं समुद्भूतं हालाहलमिति श्रुतम् ॥ १९

देवाश्च दानवाश्चैव दग्धास्तेन विषेण ह ।
अपाक्रामंस्ततो भीत्या विषादमगमंस्तदा ॥ २०

ब्रह्माणमब्रुवन्देवाः समेत्य मुनिपुङ्गवैः ।
मथ्यमानेऽमृते जातं विषं कालानलप्रभम् ॥ २१

तेनैव तापिता लोकास् तत्र प्रतिकुरुष्व ह ।
एवमुक्तस्तदा ब्रह्मा दध्यौ लोकेश्वरं हरम् ॥ २२

त्र्यक्षं त्रिशूलिनं रुद्रं देवदेवमुमापतिम् ।
तदाऽथ चिन्तितो देवस् तज्ज्ञात्वा द्रुतमाययौ ॥ २३

तस्याथ देवस्तत्सर्वं आचचक्षे प्रजापतिः ।
तच्छ्रुत्वा देवदेवेशो लोकस्यास्य हितेप्सया ॥ २४

---

1. क-ख-ग—अम्भोनिधेस्समुद्भूतं वासुकेर्विषसंयुतम् ।
[अधिकः पाठः ।]

अपिबत्तद्विषं रुद्रः कालानलसमप्रभम् ।
कण्ठे निहितवान्देवो देवानां हितकाम्यया ॥ २५

यस्मात्तु नीलता कण्ठे नीलकण्ठस्ततः स्मृतः ।
पीतमात्रे विषे तत्र रुद्रेणामिततेजसा ॥ २६

देवाः प्रीताः पुनर्जग्मुश्चक्रुर्वै कर्म तत्तथा ।
मथ्यमानेऽमृतस्यार्थे भूयो वै देवदानवैः ॥ २७

वासुकेरथ नागस्य सहसा क्षिप्यतस्तु तैः ।
सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् ॥ २८

ते धूमसङ्घास्संभूताः महामेघाः सविद्युतः ।
अभ्यवर्षन्सुरगणान् श्रमसंतापकर्शितान् ॥ २९

तस्माच्च गिरिकूटाग्रात् प्रच्युताः पुष्पवृष्टयः ।
ततः सुरगणान्माल्यैः सर्वतः समवाकिरन् ॥ ३०

धूमो बभूवात्र महान् घोषो मेघरवोपमः ।
उदधेर्मथ्यमानस्य मन्दरेण सुरासुरैः ॥ ३१

तत्र नानाजलचरा विनिर्धूता महाद्रिणा ।
विलयं समुपाजग्मुः शतशो लवणाम्भसि ॥ ३२

वारुणानि च भूतानि विविधानि महीधरः ।
पातालतलवासीनि विलयं समुपानयत् ॥ ३३

तस्मिंश्च भ्राम्यमाणेऽद्रौ संघृष्यन्तः परस्परम् ।
न्यपतन्पतगोपेताः पर्वताग्रान्महाद्रुमाः ॥ ३४

तेषां संघर्षजश्चाग्निर् अर्चिर्भिः प्रज्वलन्बहु ।
विद्युद्भिरिव नीलाभ्रं आवृणोन्मन्दरं गिरिम् ॥ ३५

ददाह कुञ्जरांश्चैव सिंहांश्चान्यान् सहस्रशः ।
विगतासूनि सत्वानि सर्वाणि विविधानि च ॥ ३६

तमग्निममरश्रेष्ठः प्रदहन्तमितस्ततः ।
वारिणा मेघजेनेन्द्रः शमयामास सर्वतः ॥ ३७

ततो नानारसास्तत्र सुस्रुवुः सागराम्भसि ।
ततो द्रुमाणां निर्यासा बहवश्चौषधीरसाः ॥ ३८

तेषाममृतवीर्याणां रसानां तेजसैव च ।
अमरत्वं सुरा जग्मुः काञ्चनस्य च निस्स्रवात् ॥ ३९

अथ तस्य समुद्रस्य सञ्जातमुदकं पयः ।
रसोत्तरैर्विमिश्रं च ततः क्षीरादभूद्घृतम् ॥ ४०

ततो ब्रह्माणमासीनं देवा वरदमब्रुवन् ।
श्रान्ताः स्म सुभृशं ब्रह्मन् नोद्भवत्यमृतं च तत् ॥ ४१

ऋते नारायणं देवं दैत्या नागोत्तमास्तथा ।
चिरारब्धमिदं चापि सागरस्यापि मन्थनम् ॥ ४२

[1]ततो नारायणं देवं [2]ब्रह्मा वचनमब्रवीत् ।
विधत्स्वैषां बलं विष्णो भवानत्र परायणम् ॥ ४३

श्रीभगवान् ।

बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः ।
क्षोभ्यतां कलशः सर्वैर् मन्दरः परिवर्त्यताम् ॥ ४४

सूत —

नारायणवचः श्रुत्वा बलिनस्ते महोदधेः ।
तत्पयः सहिता भूयश् चक्रिरे भृशमाकुलम् ॥ ४५

तत्र पूर्वं विषं जातं [3]तद्ब्रह्मवचनाच्छिवः । ४५॥
ग्रासलोकरक्षार्थं ततो ज्येष्ठा समुत्थिता ।
कृष्णाम्बरधरा देवी सर्वाभरणभूषिता ॥ ४६॥

ततः शतसहस्रांशुसमानइव सागरात् ।
प्रसन्नाभः समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ॥ ४७॥

श्रीरनन्तरमुत्पन्ना घृतात्पाण्डुरवासिनी ।
सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा ॥ ४८॥

कौस्तुभश्च मणिर्दिव्य उत्पन्नोऽमृतसंभवः ।
मरीचिविकचः श्रीमान् स च नारायणं गतः ॥ ४९॥

---

1. क-ख-ग—देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
2. क-ख-ग—वचनं चेदमब्रवीत् [अधिकः पाठः ।]
3. क-ख-ग —शिवो ब्रह्माभियाचनात्

पारिजातश्च तत्रैव सुरभिश्च महामुने ।
जातौ तौ च महाब्रह्मन् सर्वकामफलप्रदौ ॥ ५०॥

ततो जज्ञे महाकायश्चतुर्दन्तो महागजः ।
[1]विषं ज्येष्ठा च सोमश्च श्रीः सुरा तुरगस्तथा ॥ ५१॥

[2]कपिला कामवृक्षश्च कौस्तुभश्च महागजः ।
यतो देवास्ततो जग्मुर् आदित्यपदमाश्रिताः ॥ ५२॥

धन्वन्तरिस्तदा देवो वपुष्मानुदतिष्ठत ।
श्वेतं कमण्डलुं बिभ्रद् अमृतं यत्र तिष्ठति ॥ ५३॥

एतदत्यद्भुतं दृष्ट्वा दानवानां समुत्थितः ।
अमृतार्थे महान्नादो ममेदमिति जल्पताम् ॥ ५४॥

ततो नारायणो मायां आस्थितो मोहिनीं प्रभुः ।
स्त्रीरूपमद्भुतं कृत्वा दानवानभिसंश्रितः ॥ ५५॥

ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः ।
स्त्रियै दानवदैतेयाः सर्वे तद्गतमानसाः ॥ ५६॥

सा तु नारायणी माया धारयन्ती कमण्डलुम् ।

---

1. क-ख—श्रीस्सुरा चैव सोमश्च तुरगश्च मनोजवः
[अधिकः पाठः ।]

2. क-ख—ऐरावतस्स वै नागः नागानां प्रवरश्शुभः ।
[अधिकः पाठः।]

आस्यमानेषु देवेषु पङ्क्त्या च सह दानवैः ॥ ५७॥
देवानपाययद्देवी न दैत्यांस्ते च चुक्रुशुः ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ५ ॥ आस्तीकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ५८ श्लोकाः]

## ॥ चतुर्दशोऽध्यायः ॥

राहुशिरश्छेद ॥ १ ॥ देवासुरयुद्धेऽसुरपराजयः ॥ २ ॥

सूत:—

अथावरणमुख्यानि नानाप्रहरणानि च ।
प्रगृह्याभ्यद्रवन्देवान् सहिता दैत्यदानवाः ॥ १
ततस्तदमृतं देवो विष्णुरादाय वीर्यवान् ।
जगाम दानवेन्द्रेभ्यो नरेण सहितः प्रभुः ॥ २
ततो देवगणाः सर्वे पपुस्तदमृतं तदा ।
विष्णोः सकाशात्संप्राप्य [1]संभ्रमे तुमुले सति ॥ ३
पाययत्स्वमृतं देवान् हरौ बाहुबलेन च ।
निरोधयति चापेन दूरीकृत्य धनुर्धरान् ॥ ४

1. क-ख-ग—सङ्ग्रामे

ततः पिबत्सु तत्काले देवेष्वमृतमुत्तमम् ।
[1]राहुर्विबुधरूपेण दानवः प्रापिबत्तदा ॥ ५
तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा ।
आख्यातं चन्द्रसूर्याभ्यां सुराणां हितकाम्यया । ६
ततो भगवता तस्य शिरश्छिन्नमलंकृतम् ।
चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ॥ ७
तच्छैलशृङ्गप्रतिमं दानवस्य शिरो महत् ।
चक्रेणोत्कृत्तमपतच्च चालयद्वसुधातलम् ॥ ८
ततो वैरविनिर्बद्धः कृतो राहुमुखेन वै ।
शाश्वतश्चन्द्रसूर्याभ्यां ग्रसतेऽद्यापि चैव तौ ॥ ९
विहाय भगवांश्चापि स्त्रीरूपमतुलं हरिः ।
नानाप्रहरणै र्दीप्तैर् दानवान्समकम्पयत् ॥ १०
ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः ।
सुराणामसुराणां च स सुघोरतरो महान् ॥ ११
प्रासास्सुविपुलास्तीक्ष्णा न्यपतन्त सहस्रशः ।
तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च ॥ १२
ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु ।

---

1. क-ख—ये येऽमृतं पिबन्ति स्म ते ते युध्यन्ति दानवैः ।
[अधिकः पाठः ।]

असिशक्तिगदारुग्णा निपेतुर्धरणीतले ॥ १३

छिन्नानि [1]पट्टिशैश्चापि शिरांसि युधि दारुणैः ।
तप्तकाञ्चनमाल्यानि निपेतुरनिशं तदा ॥ १४

रुधिरेणानुलिप्ताङ्गा निहताश्च महासुराः ।
अद्रीणामिव कूटानि धातुरक्तानि शेरते ॥ १५

ततो हलहलाशब्दः संबभूव समन्ततः ।
हाहाकारः संबभूव तत्र तत्र समन्ततः ॥ १६

अन्योन्यं छिन्दतां शस्त्रैर् आदित्ये लोहितायति ।
परिघैश्चायसैः [2]पीनैस् संनिकृष्टे च मुष्टिभिः ॥ १७

निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् ।
छिन्धि भिन्धि प्रधाव त्वं पातयाभिसरेति च ॥ १८

व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः ।
एवं सुतुमुले युद्धे वर्तमाने भयावहे ॥ १९

नरनारायणौ देवौ समाजग्मतुराहवम् ।
तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि ॥ २०

चिन्तयामास तच्चक्रं विष्णुर्दानवसूदनम् ॥ २०॥

---

1. क-ख-ग—पट्टसैश्चापि शिरांसि विबुधद्विषाम्
2. क-ख-ग—पीतै स्संनिकर्षाच्च मुष्टिभि·

ततोऽम्बराच्चिन्तितमात्रमागतं
　महाप्रभं चक्रममित्रतापनम् ।
विभावसोस्तुल्यमकुण्ठमण्डलं
　सुदर्शनं भीममजेयमुत्तमम् ॥ २१॥
तदागतं ज्वलितहुताशनप्रभं
　भयंकरं करिकरबाहुरच्युतः ।
मुमोच वै विपुलमुदग्रतेजवन्
　महाप्रभं परनगरावदारणम् ॥ २२॥
तदन्तकं ज्वलितहुताशनप्रभं
　पुनः पुनर्न्यपतत वेगवत्तदा ।
व्यदारयद्दितिदनुजान्सहस्रशः
　करेरितं पुरुषवरेण संयुगे ॥ २३॥
दहत्क्वचिज्ज्वलन इवावलेलिहत्
　प्रसह्य तानसुरगणान्न्यकृन्तत ।
प्रचोदितं वियति मुहुः क्षितौ तदा
　पपौ रणे रुधिरमथो पिशाचवत् ॥ २४॥
अथासुरा गिरिभिरदीनमानसा
　मुहुर्मुहुः सुरगणमर्दयंस्तदा ।
महाबला विगलितमेघवर्चसः
　सहस्रशो गगनमभिप्रविश्य ते ॥ २५॥

अथाम्बराद्भयजननाः प्रपेदिरे
सपादपा बहुविधा मेघरूपिणः ।
महाद्रयः प्रविगलिताग्रसानवः
परस्परं द्रुतमभिहत्य सस्वनाः ॥ २६॥
ततो धरा प्रविचलिता सकानना
महाद्रिपाताभिहता समन्ततः ।
परस्परं भृशमभिगर्जतां मुहू
[1]रणाजिरे ध्वनिरनिशं प्रवर्तते ॥ २७॥
नरस्ततो वरकनकाग्रभूषणैर्
महेषुभिः पवनपथं समावृणोत् ।
विदारयन्गिरिशिखराणि पत्रिभिर्
महा[2]भयेऽसुरगणविग्रहे तदा ॥ २८॥
ततो महीं लवणजलं च सागरं
महासुराः प्रविविशुरर्दिताः शरैः ।
वियद्गतं ज्वलितहुताशनप्रभं
सुदर्शनं परिकुपितं निशाम्य च ॥ २९॥
ततः सुरैर्विजयमवाप्य मन्दरः
स्वमेव देशं गमितः सुपूजितः ।

1. क-ख-ग—विमर्दनं भृशमभिसंप्रवर्तते
2. क-ख-ग—हवे

विनाद्य खं दिवमपि चैव सर्वश-
स्ततो गताः सलिलधरा यथागतम् ॥ ३०॥

ततोऽमृतं सुनिहितमेव चक्रिरे
सुराः परां मुदमधिगम्य पुष्कलाम् ।
ददुश्च तं निधिममृतस्य रक्षितुं
किरीटिने बलिभिरथामरैः सह ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ५ ॥ आस्तीकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ३१॥ श्लोकाः ।]

---

## ॥ पञ्चदशोऽध्यायः ॥

कद्रूविनतयोः पणबन्धः ॥ १ ॥ सर्पाणां कद्रूशापः ॥ २ ॥ ब्रह्मणा कश्यपाय विषहरविद्यादानं ॥ ३ ॥

---

सूतः—

एतत्ते सर्वमाख्यातममृतं मथितं यथा ।
तत्र सोऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः ॥ १

यं निशम्य तदा कद्रूर् विनतामिदमब्रवीत् ।
उच्चैःश्रवास्तु किंवर्णो जानीहि ब्रूहि मा चिरम् ॥ २

विनता—

श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे ।
ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे ॥ ३

कद्रूः—

कृष्णवालमहं मन्ये हयमेतं [1]सुमध्यमे ।
एहि सार्धं मया [2]पश्य दासभावाय भामिनि ॥ ४

सूतः—

एवं तु समयं कृत्वा दासभावाय ते मिथः ।
जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ॥ ५

तत्र पुत्रसहस्रं तत् कद्रूर्जिह्मं चिकीर्षती ।
आज्ञापयामास तदा वाला भूत्वाऽञ्जनप्रभाः ॥ ६

प्रविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा ।
तद्वाक्यं नान्वमन्यन्त ताञ्शशाप भुजंगमान् ॥ ७

सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति ।
जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ॥ ८

शापमेनं तु शुश्राव स्वयमेव पितामहः ।
अतिक्रूरं समुद्दिष्टं कद्र्वा दैवादतीव हि ॥ ९

सार्धं देवगणैः सर्वैर् वचनं चान्वमोदत ।
बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया ॥ १०

1. क-ख-ग—शुचिस्मिते 2. क-ख-ग—देवि दासीभावाय

उग्रवीर्यविषा ह्येते दन्दशूका महाबलाः ।
तेषां तीक्ष्णविषत्वाद्धि प्रजानां च हिताय वै ॥ ११
प्रादाद्विषहणीं विद्यां काश्यपाय महात्मने ॥ ११॥
एवं शप्तेषु नागेषु कद्र्वा च द्विजसत्तम ।
उद्विग्नः शापतस्तस्याः कद्रूं कार्कोटकोऽब्रवीत् ॥ १२॥
मातरं परमप्रीतस् तथा भुजगसत्तमः ।
आविश्य वाजिनं मुख्यं वालो भूत्वाऽञ्जनप्रभः ॥ १३॥
दर्शयिष्यामि तत्राहमात्मानं काममाश्वस ।
एवमस्त्विति सा पुत्रं प्रत्युवाच यशस्विनी ॥ १४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

॥ ५ ॥ आस्तीकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये १४॥ श्लोकाः ।]

---

## ॥ षोडशोऽध्यायः ॥

उच्चैश्श्रवसो दर्शनार्थं कद्रूविनतयोर्गमनम् ॥ १ ॥

---

सूतः—
ततो रजन्यां व्युष्टायां प्रभात उदिते रवौ ।
कद्रूश्च विनता चैव भगिन्यौ ते तपोधन ॥ १

अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा ।
जग्मतुस्तुरगं द्रष्टुं उच्चैःश्रवसमन्तिकात् ॥ २
ददृशाते उभे तत्र समुद्रं निधिमम्भसाम् ॥ २॥
[1]तिमिंगिलझषाकीर्णं मकरैरावृतं तथा ।
सत्त्वैश्च बहुसाहस्रैर् नानारूपैः समावृतम् ॥ ३॥
उग्रैर्नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ।
आकरं सर्वरत्नानामालयं वरुणस्य च ॥ ४॥
नागानामालयं रम्यमुत्तमं सरितां पतिम् ।
पातालज्वलनावासमसुराणां च बान्धवम् ॥ ५॥
भयङ्कराणां सत्त्वानां पयसां निधिमद्भुतम् ॥ ६
शुभ्रं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलमद्भुतम् ॥ ७
घोरं जलचराकीर्णं रौद्रं भैरवनिस्वनम् ।
गम्भीरावर्तसलिलं सर्वभूतभयंकरम् ॥ ८
वेलालोलानिलबलक्षोभवेगसमुत्थितैः ।
वीचीहस्तैः प्रचलितैर् नृत्यन्तमिव सर्वतः ॥ ९
चन्द्रवृद्धिक्षयवशाद् उत्थितोर्मिं दुरासदम् ।
पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमम् ॥ १०

1. क-ख-ग—महान्तमुदकाधारं क्षोभ्यमाणं महास्वनम् ।
[अधिकः पाठः ।]

गां विन्दता भगवता गोविन्देनामितौजसा ।
वराहरूपिणा चान्तर् विक्षोभितजलाविलम् ॥ ११
ब्रह्मर्षिणा च तपता वर्षाणां शतमत्रिणा ।
अनासादितगाधं च पातालतलमव्ययम् ॥ १२
अध्यात्मयोगनिद्रां च पद्मनाभस्य सेवतः ।
युगान्तकालशयनं विष्णोरमिततेजसः ॥ १३
वडवामुखदीप्ताग्नेस् तोयहव्यप्रदं शुभम् ।
अगाधतलविस्तीर्णमप्रमेयं सरित्पतिम् ॥ १४
महानदीभिर्बह्वीभिः स्पर्धयेव सहस्रशः ।
अभिसार्यमाणमनिशं तत्र तत्र समन्ततः ॥ १५
गम्भीरं तिमिमकरोग्रसंकुलं तं
गर्जन्तं जलचररावनादितैस्तैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं
तेऽगाधं निधिमुरुमम्भसामपारम् ॥ १६
इत्येवं झषमकरोर्मिसंकुलं तं
गम्भीरं विकसितमम्बरप्रकाशम् ।
पातालज्वलनशिखाविदीपितान्तं
पश्यन्त्यौ द्रुतमभिपेततुस्तदानीम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ५ ॥ आस्तीकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये १७ श्लोकाः ।]

## ॥ सप्तदशोऽध्यायः ॥

मातुर्दास्यनिवृत्तये अण्डं भित्वा गरुडनिर्गमः ।

सूतः—

[1]तं समुद्रमभिक्रम्य कद्रूर्विनतया सह ।
न्यपतत्तुरगाभ्याशे नचिरादिव शीघ्रगा ॥ १

निशाम्य च बहून्वालान् कृष्णान्पुच्छमुपाश्रितान् ।
[2]विषण्णवदनां कद्रूर् नतां दास्ये न्ययोजयत् ॥ २

ततः सा विनता तस्मिन् पणिते वै पराजिता ।
अभवद्दुःखसंतप्ता दासीभावे नियोजिता ॥ ३

एतस्मिन्नन्तरे चैव गरुडः काल आगते ।
विना मात्रा महातेजा विदार्याण्डमजायत ॥ ४

1. क-ख-ग—नागास्तु सहिताः कृत्वा कर्तव्यमिति तद्वचः ।
विस्नेहा विदहेन्माताह्यसंप्राप्तमनोरथा ॥
प्रसन्ना मोक्षयेदस्मांस्तस्माच्छापाच्च भामिनि ।
कृष्णं पुच्छं करिष्यामस्तुरगस्य महात्मनः ॥
तथेति तस्य ते तस्य कृष्णा वाला इव स्थिताः ।
एतस्मिन्नन्तरे ते तु पत्न्यौ वै पणिते तदा ॥
महासत्वबलोपेतः शशिवद् द्योतयन्दिशः ।
कामरूपः कामगमः कामरूपो प्रियत्तमः ॥
[अधिकः पाठः ।]

2. क-ख-ग—विनतां विषण्णवदनां कद्रूर्दास्ये न्ययोजयत्

अग्निराशिरिवोद्भासन् समिद्धोऽतिभयंकरः ।
प्रवृद्धः स महापक्षी महाकायो नभोगतः ॥ ५

तं दृष्ट्वा शरणं जग्मुः प्रजाः सर्वा विभावसुम् ।
प्रणिपत्याब्रुवंश्चैनं आसीनं विश्वरूपिणम् ॥ ६

मा त्वमग्ने प्रवर्धिष्ठाः कच्चिन्नो न दिधक्षसि ।
असौ हि राशिः सुमहान् समिद्धस्तव सर्पति ॥ ७

अग्निः—

नैतदेवं यथा यूयं मन्यध्वमसुरार्दनाः ।
गरुडो बलवानेष मम तुल्यः स्वतेजसा ॥ ८

[1] सूतः—

एवमुक्तास्ततो देवा गरुडं वाग्भिरस्तुवन् ।
अदूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा ॥ ९

देवाः—

त्वमृषिस्त्वं महाभागस् त्वं देवः पतगेश्वरः ।
[2]त्वं प्रभुस्तपनप्रख्यः [3]परमेष्ठी प्रजापतिः ॥ १०
त्वमिन्द्रस्त्वं हयमुखस् त्वं [4]शर्वस्त्वं जगत्पतिः ।

---

1. क-ख-ग—नागक्षयकरश्चैव काश्यपेयो महाबलः ।
देवानां च हिते युक्तस्त्वहितो दैत्यरक्षसाम् ॥
न भीः कार्या कथञ्चिद्वै पश्यध्वं सहिता मया ।
[अधिकः पाठः ।]

2. क-ख-ग—त्वं प्रभुस्तपनस्सूर्यः परमेष्ठी प्रजापतिः ।

3. ख-ग—त्वं नस्त्राणमनुत्तमम् [अधिकः पाठः ।]

4. क-ख-ग—विष्णुः [अधिकः पाठः ।]

त्वं मुखं पद्मजो विप्रस् त्वमग्निः पवनस्तथा ॥ ११
त्वं विधाता च धाता च [1]त्वं विष्णुः सुरसत्तमः ।
त्वं महानभिभूः शश्वद् अमृतं त्वं महद्यशः ॥ १२
त्वं प्रभास्त्वमभिप्रेतस् त्वं नस्त्राणमनुत्तमम् ।
त्वं गतिः सततं भक्तान् कथं नः प्राप्नुयाद्भयम् ॥ १३

बलोत्तमः साधुरदीनसत्त्वः
समृद्धिमान्दुष्प्रसहस्त्वमेव ।
तव श्रुतं सर्वमहीनकीर्तेर्
अनागतं चोपगतं च सर्वम् ॥ १४
त्वमुत्तमः सर्वमिदं चराचरं
गभस्तिभिर्भासि दिवाकरो यथा ।
समाक्षिपन्भानुमतः प्रभां मुहुस्
त्वमन्तकः सर्वमिदं ध्रुवाध्रुवम् ॥ १५
दिवाकरः परिकुपितो यथा दहेत्
प्रजास्तथा दहसि हुताशनप्रभ ।
भयंकरः प्रलय इवाग्निरुत्थितो
विनाशयन् युगपरिवर्तनान्तकृत् ॥ १६
खगेश्वरं शरणमुपास्थिता वयं
महौजसं वितिमिरमभ्रगोचरम् ।

---

1. क-ख-ग—त्वमीश्वरस्सुरनायकः

महाबलं गरुडमुपेत्य खेचरं
परावरं वरदमजेयविक्रमम् ॥ १७

[1] सूतः—
[2]एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा ।

---

1. क-ख-ग—त्वदोजसा सकलमिदं प्रतापितं
जगत्प्रभो तपन सुवर्णवर्चसा ।
त्वयार्दिता नभसि विमानगामिनो
विमानिता विषमगतिं प्रयान्ति ॥
सुतस्त्वमसि सदाऽव नः प्रभो
महात्मनः खगवरः काश्यपस्य ।
स मा क्रुधः कुरु जगतो दयां परां
त्वमीश्वरः परममुपैहि पाहि नः ॥
महाशनिस्फुरितसमस्वनेन तं
दिशान्तरं त्रिदिवमिमां च मेदिनीम् ।
चलन्ति नः खग हृदयानि चानघ
निगृह्यतां वपुरिदमग्निसंनिभम् ॥
तव द्युतिं कुपितकृतान्तसन्निभां
निशाम्य नश्चलति मनोऽव्यवस्थितम् ।
प्रसीद नः पतगपते प्रयाचतां
शिवश्च नो भव भगवन्सुखावहः ॥
[अधिकः पाठः]

2. क-ख-ग—वचः श्रुत्वात्मनो देहं सुपर्णः प्रेक्ष्य च स्वयम् ।
ततस्संप्रति हर्तुं स सर्वतः परिचक्रमे ॥
सुपर्णः—
न मे सर्वाणि भूतानि बिभियुर्देहदर्शनात् ।
समुद्विग्नानि रूपान्मे इति तेजस्समाहरत् ॥
[अधिकः पाठः]

तेजसः प्रतिसंहारमात्मन[1]स्तु चकार ह ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

॥ ५ ॥ आस्तीकपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये १८ श्लोकाः ।]

---

## ॥ अष्टादशोऽध्यायः ॥

विनतागरुडाभ्यां कद्रूसर्पवहनम् ॥ १ ॥

---

2 सूतः—

---

1. क-ख-ग —स चकार ह
2. क-ख-ग—ततः कामगमः पक्षी महावीर्यो महाबलः ।
अरुणं चात्मनः पृष्ठमुपारोप्य पितुर्गृहात् ॥
मातुरन्तिकमागम्य परया च मुदा युतः ।
तथारुणिस्सनिक्षिप्तः पुरोदेशे महाद्युतेः ।
सूर्यस्य सहितान् लोकांस्तदा दग्धुं समुद्यतः ॥
शौनकः—
किमर्थं भगवान् सूर्यो लोकान्दग्धुमनास्तदा ।
किमस्यापकृतं देवैर्येनेमं मन्युराविशत् ॥
सूतः—
चन्द्रार्काभ्यां यदाराहुराख्यातो ह्यमृतं पिबत् ।
वैरानुबन्धं कृतवांश्चन्द्रार्काभ्यां तदानघ ॥
बाध्यमानं ग्रहेणाथ आदित्यं मन्युराविशत् ।
सुरार्थं यत्समुत्पन्नो दोषो राहोस्तु सांप्रतम् ॥
बह्वनर्थकरं पापमहोऽहं समवाप्नुयाम् ।
सहाय एव कार्येषु न मे कृच्छ्रेषु जायते ॥

**ततः कामगमः पक्षी [1]कामवीर्यो महाबलः ।**
**अरुणं चात्मनः पृष्ठमुपारोप्य पितुर्गृहात् ॥** १

पश्यन्ति वध्यमानं मां सह लोकैर्दिवौकसः ।
तस्माल्लोकविनाशाय व्यवतिष्ठे न संशयः ॥
एवं कृतमतिस्सूर्य अस्तमभ्यगमद्गिरिम् ॥
अह्नः प्रारम्भसमये सर्वलोकभयावह ।
उत्पत्स्यति महाबाहुस् त्रैलोक्यस्य विनाशन ॥
ततो देवास्सर्षिगणा उपगम्य पितामहम् ।
अब्रुवन् किमिदं देव अद्य भानुकृतं भयम् ॥
न तावद्दृश्यते सूर्यः क्षयोऽयं नः प्रभाति च ।
उदिते भगवन् भानौ कथमेतद्भविष्यति ॥

ब्रह्मा —

एष लोकविनाशाय रविरुद्गन्तुमुद्यतः ।
दृश्यते यदि लोकांश्च भस्मराशिं करिष्यति ॥
तस्य प्रतिविघातं हि विहितं पूर्वमेव हि ।
काश्यपस्य सुतो विद्वानरुणेत्यभिविश्रुतः ॥
महाकायो महातेजाः स स्थास्यति पुरो रवेः ।
करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति ॥
लोकानां शान्तिरेव स्याद् ऋषीणां च दिवौकसाम् ॥

सूतः—

ततः पितामहाज्ञप्तः सर्वं चक्रे तदाऽरुणः ।
उदितश्चैव सविता अरुणेन सदा युतः ॥
एतत्ते सर्वमाख्यातं यत्सूर्यं मन्युराविशत् ।
अरुणश्च तदा चास्य सारथ्यमकरोत्प्रभुः ॥
भूय एव परं ब्रह्म श्रृणु पूर्वमुदाहृतम् ॥

[अधिकः पाठः ।]

1. क-ख-ग—महा

मातुरन्तिकमागच्छत् परं तीरं महोदधेः ।
यत्र सा विनता तस्मिन् पणिते वै पराजिता ॥ २
अतीव दुःखसंतप्ता दासभावमुपागता ॥ २॥
ततः कदाचिद्विनतां प्रवणां पुत्रसंनिधौ ।
काल आहूय वचनं कद्रूरिदमभाषत ॥ ३॥
नागानामालयं भद्रे सुरम्यं रमणीयकम् ।
समुद्रकुक्षावेकान्ते तत्र मां विनते वह ॥ ४॥
ततः सुपर्णमाता तां आवहत्सर्पमातरम् ।
पन्नगान्गरुडश्चापि मातुर्वचनचोदितः ॥ ५॥
स सूर्यमभितोऽगच्छद् वैनतेयो विहंगमः ।
सूर्यरश्मिपरीताश्च मूर्च्छिताः पन्नगाऽभवन् ॥ ६॥
तदवस्थान्सुतान्दृष्ट्वा कद्रूः शक्रमथास्तुवत् ॥ ७

कद्रूः—

नमस्ते देवदेवेश नमस्ते बलसूदन ।
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ॥ ८
सर्पाणां सूर्यतप्तानां वारिणा त्वं प्लवो भव ।
त्वमेव परमं त्राणमस्माकममरोत्तम ॥ ९
ईशो ह्यसि पयः स्रष्टुं त्वं ह्यनल्पं पुरंदर ।
त्वमेव मेघस्त्वं वायुस् त्वमग्निर्वैद्युतोऽम्बरे ॥ १०

त्वमभ्रघनविक्षेप्ता त्वामेवाहुर्घनं पुनः ॥ ११

त्वं वज्रमतुलं घोरं घोषवांस्त्वं वलाहकः ।
स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ॥ १२

त्वं ज्योतिः सर्वभूतानां त्वमादित्यो विभावसुः ।
त्वं महाभूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ॥ १३

त्वं विष्णुस्त्वं सहस्राक्षस् त्वं देवस्त्वं परायणम् ।
त्वं सर्वममृतं देव त्वं सोमः परमार्चितः ॥ १४

त्वं मुहूर्तास्तिथिस्त्वं च त्वं लवस्त्वं परः क्षणः ।
शुक्लस्त्वं बहुलश्चैव कलाः काष्ठा तथा त्रुटिः ॥ १५

[1]त्वमुत्तमस्सगिरिवना वसुंधरा
सभास्करं वितिमिरमम्बरं तथा ।
महोदधिः सतिमितिमिङ्गिलस्तथा
महोर्मिमान्बहुमकरो झषाकुलः ॥ १६

महद्यशस्त्वमिति सदाऽभिपूज्यसे
मनीषिभिर्मुदितहृदम्बुजे विभो ।
अभिष्टुतः पिबसि च सोममध्वरे
वषट्कृतान्यपि च हवींषि हूयते ॥ १७

1. क-ख-ग—संवत्सरर्तवो मासा पक्षाहोरात्रयः क्रमात् ।
[अधिकः पाठः ।]

त्वं विप्रैः [1]सततमिहेज्यसे फलार्थं
वेदान्तेष्वतुलबलौघ गीयसे त्वम् ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदान्तान्यभिगमयन्ति सर्ववेदैः ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ५ ॥ आस्तीकपर्वणि – दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये १८ श्लोकाः ।]

---

## ॥ एकोनविंशोऽध्यायः ॥

स्तुत्या तुष्टेन इन्द्रेण कृतं जलवर्षणम् ॥ १ ॥

---

सूत —

एवं स्तुतस्तदा कद्र्वा भगवान्हरिवाहनः ।
नीलजीमूतसंघातैः व्योम सर्वं समावृणोत् ॥ १

मेघानाज्ञापयामास वर्षध्वमुदकं शुभम् ।
ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः ॥ २

परस्परमिवात्यन्तं गर्जन्तः सततं दिवि ।
अद्रिसङ्घमिवाकाशं जलदैस्तु महाद्भुतैः ॥ ३

1. क-ख-ग—सुहितमिहेज्यसे

सृजद्भिरतुलं तोयमसक्तं सुमहारवैः ।
संप्रवृत्तमिवाकाशं धारोर्मिभिरनेकशः ॥ ४
मेघस्तनितनिर्घोषमम्बरं समपद्यत ।
नागानामुत्तमो हर्षस्तु तथा वर्षति वासवे ॥ ५
आपूर्यत मही चापि सलिलेन समन्ततः ॥ ५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ५ ॥ आस्तीकपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ५॥ श्लोकाः]

---

## ॥ विंशोऽध्यायः ॥

गरुडस्य विनतां प्रति दास्यकारणप्रश्नः ॥ १ ॥ सर्पैः दास्यमोचनोपायकथनम् ॥ २ ॥ गरुडस्यामृताहरणोद्यमः ॥ ३ ॥

---

सूतः—
सुपर्णेनोह्यमानास्ते जग्मुस्तं देशमाशु वै ।
[1]सागराम्बुपरिक्षिप्तं पक्षिसङ्घविनादितम् ॥ १

---

1. क-ख-ग—तं द्वीपं मकरावासं विहितं विश्वकर्मणा ॥
इन्द्रतुल्यबला घोरा ददृशुः पूर्वमालयम् ।
सुपर्णसहितास्सर्पाः काननं च मनोरमम् ॥
[अधिकः पाठः]

विचित्रफलपुष्पाभिर् वनराजिभिरावृतम् ।
भवनैश्चावृतं दिव्यैस् तथा पद्माकरैरपि ॥ २

प्रसन्नसलिलैश्चापि ह्रदैश्चित्रैर्विभूषितम् ।
दिव्यगन्धवहैः पुण्यैर् मारुतैरुपवीजितम् ॥ ३

आजिघ्रद्भिरिवाकाशं वृक्षैर्मलयजैरपि ।
शोभितं पुष्पवर्षैश्च मुञ्चद्भिर्मारुतेरितैः ॥ ४

किरद्भिरिव नागेन्द्रांस्तत्र तान् पुष्पवृष्टिभिः ।
मनःसंहर्षजं दिव्यं गन्धर्वाप्सरसां प्रियम् ॥ ५

नानापक्षिरुतं रम्यं कद्रूपुत्रप्रहर्षणम् ।
तत्ते वनं समासाद्य विजह्रुः पन्नगा मुदा । ६
अब्रुवंश्च महावीर्यं सुपर्णं पन्नगोत्तमाः ॥ ६॥

वहास्मानपरं [1]दिव्यं सुरम्यं विपुलोदकम् ।
त्वं हि देशान्बहून्रम्यान् पतन्पश्यसि खेचर ॥ ७॥

स विचिन्त्याब्रवीत्पक्षी मातरं विनतां तदा ।
किं कारणं मया मातः कर्तव्यं सर्पभाषितम् ॥ ८॥

विनता—

दासीभूतास्म्यनार्याया भगिन्याः पतगोत्तम ।
पणं वितथमास्थाय सर्पैरुपधिना कृतम् ॥ ९॥

---

1. क-ख-ग—द्वीपं

सूतः—

तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः ।
उवाच वचनं सर्पान् तेन दुःखेन दुःखितः ॥ १०॥

गरुडः—

किं वाऽऽहृत्य [1]वितीर्याहं किंवा कृत्वेह पौरुषम् ।
दास्याद्वा विप्रमुच्येयं तथ्यं शंसत लेलिहाः ॥ ११॥
श्रुत्वा तमब्रुवन्सर्पा आहरामृतमोजसा ।
तदा दास्याद्विप्रमोक्षो भविता तव खेचर ॥ १२॥

सूतः—

इत्युक्तो गरुडः सर्पैस् ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥ १३॥

विनता—

समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
सहस्राणामनेकानां तान्भुक्त्वाऽमृतमानय ॥ १४॥
[2]न तु ते ब्राह्मणान् हन्तुं कार्या बुद्धिः कथंचन ।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥ १५॥
अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः ।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठस्तथा गुरुः ॥ १६॥

---

1. क-ख-ग—विदित्वा वा किं वा कृत्वैव पौरुषम् ।
2. क-ख-ग—भवनानि निषादानां तत्र सन्ति द्विजोत्तम ॥
पापिनां नष्टलोकानां निर्घृणानां दुरात्मनाम् ।
सहस्राणि ह्यनेकानि तान्भुक्त्वाऽमृतमानय ॥
[अधिकः पाठः]

वैनतेय —

यथाह[1]मनुजानीयां ब्राह्मणं लक्षणैः शुभैः ।
तन्मे कारणतो मातर् वक्तुमर्हसि पृच्छतः ॥ १७॥

विनता—

यस्ते कण्ठबिलं प्राप्तो निगीर्णं बडिशं यथा ।
दहेदङ्गारवत्पुत्र तं विद्याद्ब्राह्मणर्षभम् ॥ १८॥

सूतः—

प्रोवाच चैनं विनता पुत्रहार्दादिदं वचः ।
जानन्त्यप्यतुलं वीर्यमाशीर्वादसमन्वितम् ॥ १९॥
पक्षौ ते मारुतः पातु चन्द्रः पृष्ठं तु पुत्रक ।
शिरस्तु पातु ते वह्निर् भास्करः सर्वमेव तु ॥ २०॥
[2]अहं च ते सदा पुत्र शान्तिस्वस्तिपरायणा ।
[3]अरिष्टं व्रज पन्थानं वत्स कार्यार्थसिद्धये ॥ २१॥

सूतः—

ततः स मातुर्वचनं निशम्य
वितत्य पक्षौ नभ उत्पपात ।

---

1. क-ख-ग—मभि
2. क-ख-ग—विष्णुस्सर्वगतस्सर्वमङ्गानि तव चैव च। [अधिकः पाठः]
3. क-ख-ग—व्रतोपवासनियता भवामि सुरलोकतः।
भविष्यति न सन्देहो यावदागमनं तव॥
[अधिकः पाठः]

ततो निषादान्बलवानुपागमत्
बुभुक्षितः काल इवान्तकोपमः ॥ २२॥

ततो निषादानुपसंहरंस्तदा
रजः समुद्धूय नभस्स्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन्पयः
समीपगान्भूमिधरान्विचालयन् ॥ २३॥

ततः स चक्रे महदाननं तदा
निषादमार्गान् प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरितं प्रजग्मुर्
यतो मुखं तस्य भुजंगभोजिनः ॥ २४॥

तदाननं विवृतमतिप्रमाणवत्
समभ्ययुर्गगनमिवार्दिताः खगाः ।
सहस्रशः पवनरजोऽभ्रमोहिता
महानिलप्रचलितपादपे वने ॥ २५॥

ततः खगो वदनममित्रतापनः
समाहरत्परिचपलो महाबलः ।

निषूदयन्बहुविधमत्स्यभक्षिणो
बुभुक्षितो गगनचरेश्वरस्तदा ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि विंशोऽध्यायः ॥ २० ॥

॥ ५ ॥ आस्तीकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[अस्मिन्नध्याये २६ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥

कण्ठं दहतो ब्राह्मणस्य परित्राणम् ॥ १ ॥ गरुडस्य काश्यपेन संवादः ॥ २ ॥ गजकच्छपपूर्ववृत्तान्तकथनम् ॥ ३ ॥ काश्यपाज्ञया गजकच्छपग्रहणम् ॥ ४ ॥

---

सूतः—

तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्यया ।
दहन्दीप्त इवाङ्गारस् तमुवाचान्तरिक्षगः ॥ १

द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात् ।
न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥ २

ब्रुवाणमेवं [1]गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्येयं निर्गच्छतु मया सह ॥ ३

---

1. क-ख-ग—करुणं ब्राह्मणः समभाषत

गरुडः—
एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं संभावयात्मानमजीर्णं मम तेजसा ॥ ४

सूतः—
निश्चक्राम ततो विप्रो निषादीसहितस्तदा ।
वर्धयित्वा च गरुडमिष्टं देशं जगाम ह ॥ ५

सहभार्ये विनिष्क्रान्ते तस्मिन्विप्रे स पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥ ६
ततोऽपश्यत्स पितरं [1]पृष्टश्चाख्यातवान्पितुः ॥ ६॥
[2]अहं हि सर्पैः प्रहितः सोममाहर्तुमुत्तमम् ।
मातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै ॥ ७॥

मात्रा चापि समादिष्टो निषादान्भक्षयेति वै ।
न च मे तृप्तिरभवद् भक्षयित्वा सहस्रशः ॥ ८॥
तस्माद्भोक्तव्यमपरं भगवन्प्रदिशस्व मे ।
यद्भुक्त्वाऽमृतमाहर्तुं समर्थः स्यामहं प्रभो ॥ ९॥

---

1. क-ख-ग—काश्यपं दीप्ततेजसम् ।
तं श्रेष्ठं पततां श्रेष्ठो ब्रह्म ब्रह्मविदां प्रभुम् ॥
पृष्टश्च पित्रा बलवान् वैनतेयः प्रतापवान् ।
क्व गन्तासीति वेगेन मम त्वं वक्तुमर्हसि ॥
[अधिक पाठः]

2. क-ख-ग—माता मे कुशली तात यथाभूता तथा ह्यहम् ।
न च मे कुशलं तात भोजने बहुले सदा ॥
[अधिकः पाठः]

काश्यपः—

[1]आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम् ॥ १०

भ्राता तस्यानुजश्चासीत् सुप्रतीको महातपाः ।
स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः ॥ ११

विभागं कीर्तयत्येव सुप्रतीकः स नित्यशः ।
अथाब्रवीत्स तं भ्राता सुप्रतीकं विभावसुः ॥ १२

विभागे बहवो दोषा भविष्यन्ति महातपः ॥ १२॥

विभागं बहवो मोहात् कृतमिच्छन्ति नित्यशः ।
ततो विभक्तश्चान्योन्यं नाद्रियन्तेऽर्थमोहिताः ॥ १३॥

ततः स्वार्थपरान्मूढान् पृथग्भूतान्स्वकैर्जनैः ।
विदित्वा भेदयन्त्येनान् अमित्रा मित्ररूपिणः ॥ १४॥

विदीर्णाश्चापरे भिन्ना नरकेषु पतन्त्यधः ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते ॥ १५॥

तस्माच्चैव विभागार्थं न प्रशंसन्ति पण्डिताः ।
एवमुक्तः सुप्रतीको भागं कीर्तयतेऽनिशम् ॥ १६॥

---

1. क-ख-ग—आसीत्सरो महत्पुण्यं देवलोकेऽतिविश्रुतम् ।
यत्र कूर्मो गजं गत्वा समहर्षदवाङ्मुखः ॥
तयोर्जन्म च ते कर्म प्रवक्ष्याम्यनु पूर्वशः ।
तन्मम त्वं निबोधस्व यत्प्रमाणौ च तावुभौ ॥
श्रृणु त्वं वत्स भद्रं ते कथां वैराग्यवर्धिनीम् ।
पित्रोरर्थविभागे वै समुत्पन्नं पुराण्डज ॥
[अधिकः पाठः ।]

एवं निर्बध्यमानस्तु शशापैनं विभावसुः ।
गुरुशास्त्रेण बद्धानामन्योन्यमभिशङ्किनाम् ॥ १७॥
तेषां मध्ये त्वमप्येकश् छद्मकृच्च महात्मभिः ॥ १८
निहन्तुं न हि शक्यस्त्वं भेदतो धनमिच्छसि ।
यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि ॥ १९
शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत् ।
त्वमप्यन्तर्जलेचरः कच्छपः संभविष्यसि ॥ २०
एवमन्योन्यशापात्तौ सुप्रतीकविभावसू ।
गजकच्छपतां प्राप्तौ धनार्थं मूढचेतसौ ॥ २१
रोषदोषानुषङ्गेण तिर्यग्योनिगतावपि ।
परस्परं दोषरतौ प्रमाणबलदर्पितौ ॥ २२
सरस्यस्मिन्महाकायौ पूर्ववैरानुसारिणौ ।
तयोरेकः सरः श्रीमान् समुपैति महागजः ॥ २३
तस्य बृंहितशब्देन कूर्मोऽप्यन्तर्जलेचरः ।
उत्थितोऽसौ महाकायः कृत्स्नं संक्षोभयन्सरः ॥ २४
यं दृष्ट्वाऽऽवेष्टितकरः पतत्येष गजो [1]बली ।
दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्यवान् ॥ २५
तं विक्षोभयमाणं तु सरो बहुझषाकुलम् ।

1. क-ख-ग—जलम्

स कूर्मोऽप्युन्नतशिरा युद्धायाभ्येति वीर्यवान् ॥ २६
षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः ।
कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः ॥ २७
तावेतौ युद्धसंमत्तौ परस्परजयैषिणौ ।
उपभुक्त्वा कूर्मगजौ साधयेप्सितमात्मनः ॥ २८

सूतः—

[1]स तच्छ्रुत्वा पितुर्वाक्यं भीमवेगोऽन्तरिक्षगः ।
करेण गजमेकेन कूर्ममेकेन चाक्षिपत् ॥ २९
समुत्पपात चाकाशं तत उच्चैर्विहङ्गमः ।
स लम्बतीर्थमासाद्य देववृक्षानुपागमत् ॥ ३०
ते भीताः समकम्पन्त तस्य पक्षानिलाहताः ।
न नो भञ्जेदिति तदा दिव्याः कनकशाखिनः ॥ ३१
प्रचलाङ्गांस्तदा दृष्ट्वा मनोहरफलाङ्कुरान् ।

---

1. क-ख-ग—इत्युक्त्वा गरुडं सर्पिर् मङ्गलान्यकरोत्तदा ।
सहपुत्रैस्तु दैवैस्ते युद्धं भवतु मङ्गलम् ॥
पूर्णकुम्भो द्विजा गावो यच्चान्यद्भुवि चोत्तमम् ।
शुभं स्वस्त्ययनं चापि भविष्यति तवाण्डज ॥
युध्यमानस्य संग्रामे देवैस्सार्धं महाबल ।
ऋचो यजूंषि सामानि पवित्राणि हवींषि च ॥
रहस्यानि च सर्वाणि सर्वे देवाश्च ते बलम् ।
इत्युक्तो गरुडः पित्रा तं गत्वा देशमन्तिकात् ॥
अपश्यन्निर्मलस्वच्छं नानापक्षिसमाकुलम् ।
[अधिकः पाठः।]

अन्यानतुलरूपाङ्गान् उपचक्राम खेचरः ॥ ३२
राजतैः काञ्चनैश्चैव फलैर्वैदूर्यशाखिनः ।
सागराम्बुपरिक्षिप्तान् भ्राजमानान्महाद्रुमान् ॥ ३३
[1]तमुवाच खगश्रेष्ठं तत्र [2]रोचनपादपः ।
अतिप्रवृद्धः सुमहान् आपतन्तं मनोजवम् ॥ ३४

रोचनः—

एषा मम महाशाखा शतयोजनमायता ।
तां ममास्थाय शाखां त्वं खादेमौ गजकच्छपौ ॥ ३५

ततो द्रुमं पतगसहस्रसेवितं
महीधरप्रतिमवपुः प्रकम्पयन् ।
खगोत्तमो द्रुतमभिगम्य वेगवान्
बभञ्ज तामविरलपत्रसंवृताम् ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

॥ ५ ॥ आस्तीकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये ३६ श्लोकाः]

---

1. क-ख-ग—तेषां मध्ये महानासीत् पादप सुमनोहरः ।
सहस्रयोजनोत्सेधो बहुशाखासमन्वितः ॥
खगानामालयो दिव्यो नाम्ना रौहिणपादपः ।
यस्य छायां समाश्रित्य सद्यो भवति निर्वृतः ॥
[अधिकः पाठः ।]

2. क-ख-ग—रौहिण

## ॥ द्वाविंशोऽध्यायः ॥

लम्बमानवालखिल्यरक्षणाय भग्नशाखाग्रहणम् ॥ १ ॥ काश्यपाज्ञया हिमालयगमनम् ॥ २ ॥ तत्र गजकच्छपभक्षणम् ॥ ३ ॥ देवानाममृतरक्षणोद्यमः ॥ ४ ॥

सूतः—

स्पृष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा ।
अभज्यत तरोः शाखा भग्नां चैनामधारयत् ॥ १

तां भग्नां स महाशाखां स्मयन्समवलोकयन् ।
तत्रावलम्बतोऽपश्यद् वालखिल्यानवाङ्मुखान् ॥ २

[1]तपस्यतो भयाविष्टो वैनतेयो महाबलः ।
स तद्विनाशसंत्रासाद् उत्पत्य च महाखगः ॥ ३

शाखामास्येन जग्राह तेषामेवान्ववेक्षया ।

1. क-ख-ग—वैखानसांश्च शाखायां लम्बमानानधोमुखान् ।
हन्यादेतान्पतन्तीयं शाखेत्यथ विचिन्तयन् ॥
शनैर्विदारयामास सङ्गृह्य गजकच्छपौ ।
अधिदैवं तु तत्कर्म तस्य दृष्ट्वा महर्षयः ॥
विस्मयोत्फुल्लहृदया नाम चक्रुर्महात्मनः ।
गुरुभारं समासाद्य दीनपुच्छं विहङ्गमम् ॥
गरुत्मन्तं खगश्रेष्ठं तस्मात्पन्नगभोजिनम् ।
[अधिकः पाठः ।]

शनैः पर्यपतत्पक्षी पर्वतान्परिचालयन् ॥ ४

एवं सोऽभ्यपतद्देशान् बहून् सगजकच्छपः ।
भयात्तु वालखिल्यानां न च स्थानमविन्दत ॥ ५

स गत्वा पर्वतश्रेष्ठं गन्धमादनमव्ययम् ।
ददर्श काश्यपं तत्र पितरं तपसि स्थितम् ॥ ६

ददर्श तं पिता चापि दिव्यरूपं विहङ्गमम् ।
तेजोवीर्यबलोपेतं मनोमारुतरंहसम् ॥ ७

शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतम् ।
अचिन्त्यमनभिज्ञेयं सर्वभूतभयंकरम् ॥ ८

महावीर्यधरं साक्षाद् अग्निमिद्धमिवोद्यतम् ।
अप्रधृष्यमजय्यं च देवदानवराक्षसैः ॥ ९

भेत्तारं गिरिशृङ्गाणां नदीजलविशोषणम् ।
लोकसंलोडनं घोरं कृतान्तसमदर्शनम् ॥ १०

तमागतमभिप्रेक्ष्य भगवान्काश्यपस्तदा ।
विदित्वा चास्य संकल्पमिदं वचनमब्रवीत् ॥ ११

काश्यप —

पुत्र मा साहसं कार्षीर् मा सद्यो लप्स्यसे व्यथाम् ।
मा त्वां दहेयुः संक्रुद्धा वालखिल्या मरीचिपाः ॥ १२

सूत.—

प्रसादयामास स तान् काश्यपः पुत्रकारणात् ।
वालखिल्यांस्तपस्सिद्धान् इदमुद्दिश्य कारणम् ॥ १३

काश्यपः—

प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ।
चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ ॥ १४

सूतः—

एवमुक्ता भगवता मुनयस्ते समभ्ययुः ।
मुक्त्वा शाखां गिरिं पुण्यं हिमवन्तं तपोधनाः ॥ १५
ततस्तेष्वपयातेषु पितरं विनतात्मजः ।
शाखां व्याक्षिप्य वदनात् पर्यपृच्छत काश्यपम् ॥ १६

गरुड —

भगवन्क्व नु मुञ्चामि तरुशाखामिमामहम् ।
वर्जितं ब्राह्मणैर्देशमाख्यातु भगवान्मम ॥ १७

सूतः—

ततो निष्पुरुषं देशं हिमसंरुद्धकन्दरम् ।
अगम्यं मनसाप्यन्यैस् तस्याचख्यौ स काश्यपः ॥ १८
तं पर्वतं महाकुक्षिमुद्दिश्य मनसा खगः ।
जवेनाभ्यपतत्तार्क्ष्यः सशाखागजकच्छपः ॥ १९
न तां वार्ध्रः परिणहेच् छतचर्मा महानणुः ।

शाखिनो महतीं शाखां प्रगृह्य प्रययौ खगः ॥ २०
ततः शतसहस्रं स योजनान्तरमागतः ।
कालेन चातिमहता गरुडः पततां वरः ॥ २१
स गत्वा तत्क्षणेनैव पर्वतं वचनात्पितुः ।
अमुञ्चन्महतीं शाखां सस्वनां तत्र खेचरः ॥ २२
पक्षानिलहतश्चात्र प्राकम्पत स शैलराट् ।
मुमोच पुष्पवर्षं च समागलितपादपः ॥ २३
शृङ्गाणि च व्यशीर्यन्त गिरेस्तस्य समन्ततः ।
मणिकाञ्चनचित्राणि शोभयन्ति महागिरिम् ॥ २४
शाखिनो बहवश्चापि शाखयाऽभिहतास्तथा ।
काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः ॥ २५
ते हेमसदृशैर्भूयो युक्ताः पर्वतधातुभिः ।
व्यराजञ्छाखिनस्तत्र सूर्यांशुपरिरञ्जिताः ॥ २६
ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः ।
भक्षयामास गरुडस् तावुभौ गजकच्छपौ ॥ २७
तावुभौ भक्षयित्वा तु स तार्क्ष्यः कूर्मकुञ्जरौ ।
ततः पर्वतकूटाग्राद् उत्पपात महाजवः ॥ २८
प्रावर्तन्ताथ देवानामुत्पाता भयवेदिनः ।
इन्द्रस्य वज्रं दयितं प्रजज्वाल व्यथन्निव ॥ २९

सधूमा चापतत्सार्चिर् दीप्तोल्का नभसि च्युता ।
तथा वसूनां रुद्राणामादित्यानां च सर्वशः ॥ ३०
साध्यानां मरुतां चैव ये चान्ये देवतागणाः ।
स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् ॥ ३१
अभूतपूर्वं संग्रामे तदा देवासुरेष्वपि ।
ववुर्वाताः सनिर्घाताः पेतुरुल्काः समन्ततः ॥ ३२
निरभ्रमेव चाकाशं प्रजगर्ज महास्वनम् ।
देवानामपि यो देवः सोऽप्यवर्षदसृक्तदा ॥ ३३
मम्लुर्माल्यानि देवानां शेमुस्तेजांसि चैव ह ।
उत्पातमेघा रौद्राश्च ववृषुः शोणितं बहु ॥ ३४
रजांसि मुकुटांश्चैषामुत्थितानि प्रधर्षयन् ।
ततस्त्रासससमुद्विग्नः सह देवैः शतक्रतुः ॥ ३५
उत्पातान्दारुणान्पश्यन् इत्युवाच बृहस्पतिम् ॥ ३५॥
किमिदं भगवन् घोरा महोत्पाताः समुत्थिताः ।
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ॥ ३६॥
बृहस्पतिः—
तवापराधाद्देवेश प्रमादाच्च शतक्रतो ।
तपसा वालखिल्यानां भूतमुत्पन्नमद्भुतम् ॥ ३७॥
काश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः ।

हर्तुं सोममनुप्राप्तो बलवान्कामरूपवान् ॥ ३८॥

समर्थो बलिनां श्रेष्ठो हर्तुं सोमं विहंगमः ।
सर्वं संभावयाम्यस्मिन् असाध्यमपि साधयेत् ॥ ३९॥

सूत —

श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः ।
महावीर्यबलः पक्षी हर्तुं सोममिहोद्यतः ॥ ४०॥

युष्मान्संबोधयाम्येष [1]यथा न स हरेद्बलात् ।
अतुलं हि बलं तस्य बृहस्पतिरुवाच मे ॥ ४१॥

सूतः—

तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः ।
परिवार्यामृतं तस्थुर् वज्री चेन्द्रः शतक्रतुः ॥ ४२॥

धारयन्तो महार्हाणि कवचानि मनस्विनः ।
काञ्चनानि विचित्राणि वैदूर्यविकृतानि च ॥ ४३॥

विविधानि च शस्त्राणि घोररूपाण्यनेकशः ॥ ४४

शततीक्ष्णाग्रधाराणि समुद्यम्य सहस्रशः ।
सविष्फुलिङ्गज्वालानि सधूमानि च सर्वशः ॥ ४५॥

---

1. क-ख-ग—गृहीत्वा वरणायुधान् ।
परिवार्यामृतं सर्वे यूयं मद्वचनादिह ।
रक्षध्वं विबुधा वीरा यथा न स हरेद्बलात् ॥
[अधिकः पाठः]

चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् ।
शक्तीश्च विमलास्तीक्ष्णाः करवालांश्च निर्मलान् ॥ ४६
स्वदेहरूपाश्चादाय गदाश्चोग्रप्रदर्शनाः ॥ ४६॥

तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः ।
भानुमन्तः सुरगणास् तस्थुर्विगतकल्मषाः ॥ ४७॥

अनुपमबलवीर्यतेजसो
धृतमनसः परिरक्षणेऽमृतस्य ।
असुरपुरविदारणाः सुरास्ते
ज्वलनसमिद्धवपुःप्रकाशिनश्च ॥ ४८॥

इति समरपरैः सुरैर्वृतं तत्
परिघसहस्रशतैः समाकुलम् ।
विलिखितमिव चाम्बरान्तरं
तपनमरीचिविभावितं बभासे ॥ ४९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

॥ ५ ॥ आस्तीकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[अस्मिन्नध्याये ४९॥ श्लोकाः ।]

---

## ॥ त्रयोविंशोऽध्यायः ॥



वालखिल्यतपोबलेन गरुडोत्पत्तिकथनम् ॥ १ ॥



शौनकः—

कः प्रमोदो महेन्द्रस्य कोऽपराधश्च सूतज ।
तपसा वालखिल्यानां संभूतो गरुडः कथम् ॥ १

काश्यपस्य द्विजातेश्च कथं वै पक्षिराट् सुतः ।
अधृष्यः सर्वभूतानामवध्यश्चाभवत्कथम् ॥ २

कथं च कामरूपी स कामवीर्यश्च खेचरः ।
एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ॥ ३

सूतः—

विषयोऽयं पुराणस्य यन्मां त्वं परिपृच्छसि ।
शृणु मे वदतः सर्वमेतत्संक्षेपतो द्विज ॥ ४

यजतः पुत्रकामस्य काश्यपस्य प्रजापतेः ।
साहाय्यमृषयो देवा गन्धर्वाश्च ददुः किल ॥ ५

तत्रेध्मानयने शक्रो नियुक्तः काश्यपेन हि ।
मुनयो वालखिल्याश्च ये चान्ये देवतागणाः ॥ ६

शक्रः स्ववीर्यसदृशमिध्मभारं गिरिप्रभम् ।
समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभो ॥ ७

अथापश्यदृषीन् सर्वान् ह्रस्वानङ्गुष्ठमात्रकान् ।
पालाशवृत्तिकामेकां वहतः सहितान्पथि ॥ ८

प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् ।
क्लिश्यमानान्मृदुबलान् गोष्पदे संप्लुतोदके ॥ ९

तान्स्म सर्वान् स्मयाविष्टो वीर्योन्मत्तः पुरन्दरः ।
अपहास्यात्यगाच्छीघ्रं लङ्घयित्वाऽवमत्य च ॥ १०

ते तु रोषसमाविष्टा भृशं संजातमन्यवः ।
आरेभिरे महत्कर्म तदा शक्रभयंकरम् ॥ ११

जुहुवुस्ते सुतपसो विधिवज्जातवेदसम् ।
मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु ॥ १२

कामवीर्यः कामगमो देवराजभयप्रदः ।
इन्द्रोऽन्यः सर्वभूतानां भवेदिति यतव्रताः ॥ १३

इन्द्राच्छतगुणो वीर्ये शौर्ये चैव मनोजवः ।
तपसो नः फलेनाद्य दारुणः समपद्यताम् ॥ १४

तच्छ्रुत्वा भृशसंतप्तो देवराजः शतक्रतुः ।
जगाम शरणं तत्र काश्यपं संशितव्रतम् ॥ १५

तच्छ्रुत्वा देवराजस्य काश्यपोऽथ प्रजापतिः ।
वालखिल्यानुपागम्य कर्मसिद्धिमपृच्छत ॥ १६

[1]एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः ।
तान्काश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः ॥ १७
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः ।
इन्द्रार्थं च भवन्तोऽपि यत्नवन्तस्तपोधनाः ॥ १८
न मिथ्या ब्रह्मणो वाक्यं कर्तुमर्हथ सत्तमाः ।
भवतां च न मिथ्याऽयं संकल्पो हि भवेदिति ॥ १९
भवत्वेव पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् ।
प्रसादः क्रियतां चैव देवराजस्य याचतः ॥ २०
एवमुक्ताः काश्यपेन वालखिल्यास्तपोधनाः ।
प्रत्यूचुरभिसंपूज्य मुनिश्रेष्ठं प्रजापतिम् ॥ २१
इन्द्रार्थोऽयं समारम्भः सर्वेषां नः प्रजापते ।
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः ॥ २२
तदिदं सफलं कर्म त्वयावै प्रतिगृह्यताम् ।
तथा चैनं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि ॥ २३

---

1. क-ख-ग—काश्यपः—
केन कामेन चारब्धं भवद्भिर्होमकर्म च ।
याथातथ्येन मे ब्रूत श्रोतुं कौतूहलं हि मे ॥
वालखिल्याः—
अवज्ञातास्सुरेन्द्रेण मूढेनाकृतबुद्धिना ।
ऐश्वर्यमदमत्तेन सदाचारान्निरस्यता ॥
तद्विघातार्थमारम्भो विधिवत्तस्य काश्यप ।
[अधिकः पाठः]

एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा ।
विनता नाम कल्याणी पुत्रकामा यशस्विनी ॥ २४

तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः ।
उपचक्राम भर्तारं तामुवाचाथ काश्यपः ॥ २५

आरम्भः सफलो देवि भविताऽयं तवेप्सितः ।
जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ॥ २६

तपसा वालखिल्यानां मम संकल्पजौ तथा ।
भविष्यतो महाभागौ पुत्रौ त्रैलोक्यविश्रुतौ ॥ २७

उवाच चैनां भगवान् मारीचः पुनरेव ह ।
धार्यतां मत्प्रसादेन गर्भोऽयं सुमहोदयः ॥ २८

एकः सर्वपतत्रीणामिन्द्रत्वं कारयिष्यति ।
लोकसंभावितो वीरः कामवीर्यो विहङ्गमः ॥ २९

शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः । २९॥

काश्यपः--

त्वत्सहायौ खगावेतौ भ्रातरौ ते भविष्यतः ॥ ३०

नैताभ्यां भविता दोषः सकाशात्ते पुरंदर ।
व्येतु ते शक्र संतापस् त्वमेवेन्द्रो भविष्यसि ॥ ३१

न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः ।
न चावमान्या दर्पात्ते वाग्विषा भृशकोपनाः ॥ ३२

सूतः—

एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम् ।
विनता चापि सिद्धार्था बभूव मुदिता तदा ॥ ३३

जनयामास पुत्रौ द्वावरुणं गरुडं तथा ।
अरुणस्तयोस्तु विकल आदित्यस्य पुरस्सरः ॥ ३४

पतत्रिणां तु गरुड इन्द्रत्वेनाभ्यषिच्यत ।
तस्यैतत्सुमहत्कर्म श्रूयतां भृगुनन्दन ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ५ ॥ आस्तीकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[अस्मिन्नध्याये ३५ श्लोकाः ।]

## ॥ चतुर्विंशोऽध्यायः ॥

देवगरुडयुद्धं, तत्र देवानां पराजयः ॥ १ ॥

सूतः—

ततस्तस्माद्द्विजश्रेष्ठः समुदीर्णो महाबलः ।
[1]गरुत्मानपि संप्राप्तो जवेन विबुधान्प्रति ॥ १

तं दृष्ट्वातिबलं चैव प्राकम्पन्त समन्ततः ।

1. क-ख-ग—गरुत्मान् पक्षिराट् तूर्णं संप्राप्तो विबुधान् प्रति

परस्परं च [1]प्रत्यघ्नन् सर्वप्रहरणा[2]युधि ॥ २

तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः ।
[3]भौवरः सुमहावीर्यः सोमस्य परिरक्षिता ॥ ३

स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः ।
मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि ॥ ४

रजश्चोद्धूय सुमहत् पक्षवातेन खेचरः ।
कृत्वा लोकान्निरालोकान् तेन देवानवाकिरत् ॥ ५

तेनावकीर्णा रजसा देवा मोहमुपाविशन् ।
न चैनं ददृशुश्छन्ना रजसाऽमृतरक्षिणः ॥ ६

एवं संलोडयामास गरुडस्त्रिदिवालयान् ।
पक्षतुण्डप्रहारैश्च देवांश्च विरराद ह ॥ ७

ततो देवः सहस्राक्षस् तूर्णं वायुमचोदयत् ।
विक्षिपेमां रजोवृष्टिं तवेदं कर्म मारुत ॥ ८

अथ वायुरपोवाह तद्रजस्तरसा बली ।
ततो वितिमिरे जाते देवाः शकुनिमर्दयन् ॥ ९

ननाद चोच्चै बलवान् महामेघरवः खगः ।
बध्यमानः सुरगणैस् सर्वभूतानि भीषयन् ॥ १०

---

1. क-ख-ग—प्रत्यस्यन् 2. क-ख-ग—न्यपि
3. क—भौवनः; ख-ग—भावनः

उत्पपात महावीर्यः पक्षिराट् परवीरहा ।
तमुपेत्यान्तरिक्षस्थं देवानामुपरि स्थितम् ॥ ११

वर्मिणो विबुधाः सर्वे नानाशस्त्रैरवाकिरन् ।
पट्टसैः परिघैः शूलैर् गदाभिश्च सवासवाः ॥ १२

क्षुरप्रैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः ।
नानाशस्त्रविसर्गैस्तु वध्यमानः समन्ततः ॥ १३

कुर्वन्सुतुमुलं युद्धं पक्षिराण्ण ह्यकम्पत ॥ १३॥
विनर्दन्निव चाकाशे वैनतेयः प्रतापवान् ।
पक्षाभ्यामुरसा चैव समन्ताद्व्याक्षिपत्सुरान् ॥ १४॥

ते विक्षिप्ताः सुराः सर्वे प्रजग्मुर्गरुडार्दिताः ।
नखतुण्डहताश्चापि सुस्रुवुः शोणितं बहु ॥ १५॥

साध्याः प्राचीं सगन्धर्वा वसवो दक्षिणां दिशम् ।
प्रजग्मुः सहिता रुद्रैः पतगेन्द्रप्रधर्षिताः ॥ १६॥

दिशं प्रतीचीमादित्या नासत्यौ चोत्तरां दिशम् ।
मुहुर्मुहुः प्रेक्षमाणा युध्यमानमनेकशः ॥ १७॥

अश्वक्रन्देन वीरेण रेणुकेन च पक्षिणा ।
उत्क्रूकश्वसनाभ्यां च निमेषेण च पक्षिणा ॥ १८॥

क्रथनेन च शूरेण पतनेन च खेचरः ।

[1]परजेर्नं च संयुद्धं चकार प्रलिहेन च ॥ १९॥
तान्पक्षनखतुण्डाग्रैर् अभिनद्विनतासुतः ।
युगान्तकाले संक्रुद्धः पिनाकीव महाबलः ॥ २०॥
महाबला महावीर्यास् तेन ते बहुधा क्षताः ।
रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः ॥ २१॥
तान्कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान् ।
अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत ॥ २२॥
आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरम् ।
दहन्तमिव तीक्ष्णांशुं घोरवायुसमीरितम् ॥ २३॥

[2]ततो नवत्या नवतिं मुखानि
कृत्वा तरस्वी गरुडो महात्मा ।
नदीः समापीय मुखैस्ततस्तैः
स शीघ्रमागत्य पुनर्जवेन ॥ २४॥

ज्वलन्तमग्निं तममित्रतापनः
समास्तरत्पत्ररथो नदीभिः ।

---

1. क-ख-ग—प्ररुचेन
2. क-ख-ग—नभस्स्पृशन्तं ज्वालाभिस्सर्वभूतभयङ्करम् ।
[अधिकः पाठः]

ततः प्रचक्रे वपुरन्यदल्पं
प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ ५ ॥ आस्तीकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये २५॥ श्लोकाः ।]

---

## ॥ पञ्चविंशोऽध्यायः ॥

अमृताहरणम् ॥ १ ॥ विष्णुगरुडसंवादश्च ॥ २ ॥

---

सूतः—

जाम्बूनदमयो भूत्वा मरीचिविकचोज्ज्वलः ।
प्रविवेश बलात्पक्षी वारिवेग इवार्णवम् ॥ १

स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके ।
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् ॥ २

ज्वलनार्कप्रभं घोरं [1]किङ्किणीजालसंवृतम् ।
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्मितम् ॥ ३

तस्यान्तरं स दृष्ट्वैव पर्यवर्तत खेचरः ।
अरान्तरेणाभ्यपतत् संक्षिप्याङ्गं क्षणेन ह ॥ ४

1. क-ख-ग—छेदनं सोमहारिणाम् ।

[1]अथ चक्रस्य चैवास्तां दीप्तानलसमद्युती ।
विद्युज्जिह्वौ महाकायौ दीप्तास्यौ दीप्तलोचनौ ॥ ५
चक्षुर्विषौ महावीर्यौ नित्यं क्रुद्धौ तरस्विनौ ।
रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ ॥ ६
सदा संरक्तनयनौ सदा चानिमिषेक्षणौ ।
तयोरेकोऽपि यं पश्येत् स तूर्णं भस्मसाद्भवेत् ॥ ७
[2]तयोश्चक्षूंषि रजसा सुपर्णस्तु समावृणोत् ।
अदृष्टरूपस्तौ चापि सर्वतः पर्यकालयत् ॥ ८
तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरिक्षगः ।
आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ ९
समुत्पाट्यामृतं तत्तु वैनतेयस्तदा बली ।
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्यवान् ॥ १०
अपीत्वैवामृतं पक्षी परिगृह्याशु वीर्यवान् ।
आगच्छदपरिश्रान्त आवार्यार्कप्रभां खगः ॥ ११
विष्णुना तु तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस् तेनातुल्येन कर्मणा ॥ १२

---

1. क-ख-ग—अथश्चक्रस्य
2. क-ख-ग—तौ दृष्ट्वा सहसा खेदं जगाम विनतात्मजः ।
कथमेतौ महावीर्यौ जेतव्यौ हरिभोजिनौ ।
इति संचिन्त्य गरुडस् तयोस्तूर्णं निराकरः ।
[अधिकः पाठः]

तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः ॥ १३
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाऽप्यहम् ॥ १४
प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत् ॥ १४॥
भवतोऽपि वरं दद्मि वृणीतां भगवानपि ।
तं वव्रे वाहनं कृष्णो गरुत्मन्तं महाबलम् ॥ १५॥
ध्वजं च चक्रे भगवान् उपरि स्थास्यसीति तम् ।
[1]तथेत्येवाब्रवीत्पक्षी भगवन्तं सनातनम् ॥ १६॥
[2]अभ्युपेत्य खगं त्विन्द्रो वज्रेणाङ्गे न्यपातयत् ।
विहङ्गमं सुरान्जित्वा हरन्तममृतं बलात् ॥ १७॥
तमुवाचेन्द्रमाक्रान्तो गरुडः पततां वरः ॥ १८
प्रहसञ्श्लक्ष्णया वाचा तथा वज्रसमाहतः ।
ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम् ॥ १९
वज्रस्य च करिष्यामि तव चैव शतक्रतो ।
एष पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे ॥ २०

---

1. क-ख-ग—एतस्मिन्नेव काले तु भगवान्हरिवाहनः ।
वव्राज तरसा वेगाद् वायुमार्गान्मनोजव ॥
[अधिकः पाठः]

2. क-ख-ग—अथाभ्येत्य तु खं त्विन्द्रो वज्रेणैवाभ्यताडयत् ।

न हि वज्रनिपातेन वेदना मेऽस्ति काचन ।
इत्येवमुक्त्वा गरुडः पत्रं त्वेकं व्यसर्जयत् । २१
तत्रैव सर्वभूतानि विस्मितान्यब्रुवंस्तदा ।
सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति ॥ २२
[1]दृष्ट्वा तदद्भुतं चापि सहस्राक्षः पुरंदरः ।
खगो महदिदं भूतमिति मत्वाऽभ्यभाषत ॥ २३

इन्द्रः—

बलं वेदितुमिच्छामि यत्ते बलमनुत्तमम् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ५ ॥ आस्तीकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः ।]

---

## ॥ षड्विंशोऽध्यायः ॥

विनताया दास्यमोचनम् ॥ १ ॥ शक्रेणामृताहरणं च ॥ २ ॥

---

[2]गरुडः—

सख्यमस्तु त्वया देव यथेच्छसि पुरंदर ।
बलं तु मम जानीहि महच्चासह्यमेव च ॥ १

---

1. क-ख-ग—त्रिधा कृत्वा तदा वज्रं गतं स्थानं स्वमेव हि ।
[अधिकः पाठः]

2. क-ख-ग—इत्येवमुक्तो गरुडः प्रत्युवाच शचीपतिम् ।
[अधिकः पाठः]

कामं नैव प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
[1]गुणसंकीर्तनं चापि [2]स्वयमेव शतक्रतो ॥ २

[3]सखेति कृत्वा तु सखे! पृष्टो वक्ष्याम्यहं त्वया ।
न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ॥ ३

सपर्वतवनामुर्वीं ससागरनदीमिमाम् ।
पक्षेणैकेन वै शक्र त्वां चैवात्रावलम्बिनम् ॥ ४

सर्वान्संपिण्डितान्वापि लोकान्स्थावरजङ्गमान् ।
वहेयमपरिश्रान्तो विद्धीदं मे महद्बलम् ॥ ५

सूतः—

इत्युक्त्वा वचनं वीरः किरीटी श्रीमतां वरः ।
आह शौनक [4]देवेन्द्र सर्वभूतहिते रत ॥ ६

प्रगृह्यतामिदानीं मे सख्यमानन्त्यमुत्तमम् ।
न कार्यं तव सोमेन मम सोमः प्रदीयताम् ॥ ७

अस्मांस्ते [5]हि च बन्धेयुर् येभ्यो दद्याद्भवानिमम् ॥ ७ ॥

---

1. क-ख-ग—अनिमित्तं सुरश्रेष्ठ सद्यः प्राप्नोति गर्हणाम् ।
[अधिकः पाठः]

2. क-ख-ग--पृष्टो नान्येन गोपते।

3. क-ख-ग—वक्तव्यं न तु वक्तव्यं स्वयमेव शतक्रतो ।
[अधिकः पाठः]

4. क-ख-ग—न्द्रस्सर्वभूतप्रभुः प्रभुः ।

5. क-ख-ग—नु प्रबाधेयुः

गरुडः—

किंचित्कारणमुद्दिश्य सोमोऽयं नीयते मया ।
न दास्यामि समापातुं सोमं कस्मैचिदप्यहम् ॥ ८॥

यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम् ।
समादाय ततस्तूर्णं ब्रजेथास्त्रिदिवेश्वर ॥ ९॥

शक्रः—

वाक्येनानेन तुष्टोऽस्मि यत्त्वयोक्तमिहाण्डज ।
यमिच्छसि वरं मत्तस् तं गृहाण खगोत्तम ॥ १०॥

सूतः—

इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुस्मरन् ।
स्मृत्वा चैवोपधिकृतान् मातुर्दास्यनिमित्ततः ॥ ११॥

गरुडः—

ईशोऽहमपि सर्वस्य करिष्यामि यथेप्सितम् ।
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ॥ १२॥

सूतः—

तथेत्युक्त्वाऽन्वगच्छत्तं शक्रो दानवसूदनः ॥ १३

हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् ।
आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिके ॥ १४

[1]अथ सर्पानुवाचेदं सर्वान्परमहृष्टवत् ॥ १४॥

गरुडः—

इदमानीतममृतं निक्षिपामि कुशेषु वः ।
स्नाता मङ्गलसंयुक्तास् ततः प्राश्नीत पन्नगाः ॥ १५॥
अदासी चैव मातेयम् अद्यप्रभृति चास्तु मे ।
यथोक्तं भवतामेतद् वचो मे प्रतिपादितम् ॥ १६॥
ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत ।
शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः ॥ १७॥
अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा ।
स्नाताश्च कृतजप्याश्च हृष्टाश्च कृतमङ्गलाः ॥ १८॥
[2]तद्विज्ञाय हृतं सर्पाः [3]शक्रमायाकृतं च तत् ।

---

1. क-ख-ग—विनयावनतो भूत्वा वचनं चेदमब्रवीत् ॥
गरुडः—
इदमानीतममृतं देवानां भवनान्मया ।
प्रशाधि किमितो मातः करिष्यामि शुभव्रते ॥
विनता—
परितुष्टाहमेतेन कर्मणा तव पुत्रक ।
अजरश्चामरश्चैव देवानां सुप्रियो भव ॥ [अधिकः पाठः]

2. क-ख-ग—परस्परकृतद्वेषाः सोमप्राशनकर्मणि ।
अहं पूर्वमहं पूर्वमित्युक्त्वा ते समाद्रवन् ॥

3. क-ख-ग—प्रति [अधिकः पाठः]

सोमस्थानमिदं चेति दर्भास्ते लिलिहुस्तदा ॥ १९॥
ततो द्वैधीकृता जिह्वाः सर्पाणां तेन कर्मणा ।
अभवंश्चामृतस्पर्शाद् दर्भास्तेऽथ पवित्रिणः ॥ २०॥

[1]ततः सुपर्णः परमप्रहर्षवान्
विहृत्य मात्रा सह तत्र कानने ।
भुजंगभक्षः परमार्थतः खगैर्
अहीनकीर्तिर्विनतामनन्दयत् ॥ २१॥

इमां कथां यः शृणुयान्नरः सदा
पठेत वा द्विजजनमुख्यसंसदि ।
असंशयं त्रिदिवमियात्स पुण्यभाङ्-
महात्मनः पतगपतेः प्रकीर्तनात् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

॥ ५ ॥ आस्तीकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[अस्मिन्नध्याये २२॥ श्लोकाः ।]

॥ सौपर्णं समाप्तम् ॥

---

1. क-ख-ग—नागाश्च वञ्चिता भूत्वा विसृज्य विनतां ततः ।
विषादमगमंस्तीव्रं गरुडस्य बलात्प्रभो ॥
[अधिकः पाठः]

## ॥ सप्तविंशोऽध्यायः ॥

सर्पनामकथनम् ॥ १ ॥

शौनकः—

भुजङ्गमानां शापस्य मात्रा चैव सुतेन च ।
विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ॥ १

वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा ।
नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः ॥ २

पन्नगानां तु नामानि न कीर्तयसि सूतज ।
प्राधान्येन तु नामानि श्रोतुमिच्छामहे वयम् ॥ ३

सूतः—

बहुत्वान्नामधेयानि भुजंगानां तपोधन ।
न कीर्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु ॥ ४

शेषस्तु प्रथमो जातो वासुकिस्तदनन्तरम् ।
ऐरावतस्तक्षकश्च कार्कोटकधनञ्जयौ ॥ ५

कालियो मणिनागश्च नागश्चापूरणस्तथा ।
नागस्तथा [1]पञ्चशिरा एलापत्रोऽथ वामनः ॥ ६

नीलानीलौ तथा नागौ कल्माषशबलौ तथा ।
आर्यकश्चार्द्रकश्चैव नागश्च हलपोतकः ॥ ७

1. क-ख-ग—पिञ्जरक

सुमुखो दुर्मुखश्चैव विमुखोऽसिमुखस्तथा ।
विमलः पिण्ड[1]कश्चैव शङ्खो वालशिखस्तथा ॥ ८
आम्रकोटरकश्चैव शङ्खपालशिखिस्तथा ।
निष्ठूरिको हेमगुहो नहुषः पिङ्गलस्तथा ॥ ९
बाह्य[2]कर्णौ हस्तिबकस् तथा मुद्गरपिण्डकः ।
कम्बलाश्वतरौ चापि नागः का[3]लिकटस्तथा ॥ १०
[4]वृत्तसंवृत्तकौ नागौ द्वौ च पद्माविति श्रुतौ ।
नागः शङ्खनकश्चैव तथा [5]गन्धवृकोदनः ॥ ११
क्षेमकश्च तथा नागो नागः [6]पिण्डीरकस्तथा ।
करवीरः पुष्पदंष्ट्रो [7]बिल्वको बिल्वपाण्डकः ॥ १२
मूषिकादः शङ्खशिराः पूर्णदंष्ट्रो हरिद्रकः ।
[8]अथानामित्रो ज्योतीकः पन्नगः शिवगस्तथा ॥ १३
कौरव्यो धृतराष्ट्रश्च पुष्करः शल्यकस्तथा ।
विराजश्च सुबाहुश्च [9]शालिपिण्डश्च वीर्यवान् ॥ १४
हस्तिभद्रः पिठरकः मुखरः कोणनासिकः ।
कुञ्जर[10]स्तुरगश्चैव तथा नागः प्रभाकरः ॥ १५

---

क-ख-ग—
1. कः क्षुमश्शङ्खो विलिखितस्तथा 2. कल्पो हस्तिपदः
3. लिङ्ककस्तथा 4. वृत्रस्संवर्तको 5. चण्डप्रकोपनः
6. पिण्डारकः 7. बैल्वको बिल्वपाण्डुकः ।
8. अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा ।
9. शल 10. :कञ्जरश्चैव तथा नाग· प्रहारकः ।

कुमुदः कुमुदाक्षश्च [1]तिकिरिर्हरिलस्तथा ।
[2]कर्कराकर्करौ लोहौ तुण्डोदरमहोदरौ ॥ १६

एते प्राधान्यतो नागाः कीर्तिता द्विजसत्तम ।
बहुत्वान्नामधेयानाम् इतरे नानुकीर्तिताः ॥ १७

एतेषां प्र[3]भवो यश्च प्रभवस्य च संततिः ।
असङ्ख्येयेति मत्वा तान् न ब्रवीमि द्विजोत्तम ॥ १८

बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
अशक्यान्येव सङ्ख्यातुं भुजंगानां तपोधन ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ५ ॥ आस्तीकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[अस्मिन्नध्याये १९ श्लोकाः]

## ॥ अष्टाविंशोऽध्यायः ॥

शेषस्य ब्रह्माज्ञया पृथ्वीधारणांगीकरणम् ॥ १ ॥

शौनकः—

एते वै भुजगास्तात वीर्यवन्तो दुरासदाः ।
शापतत्त्वमविज्ञाय कृतवन्तो नु किं परम् ॥ १

क-ख-ग— 1. तित्तिरि र्हलिलस्तथा ।
2. कर्करार्ककरौ चोभौ कुण्डोदर 3. सवो यश्च प्रसवस्य

सूतः—

तेषां तु भगवाञ्छेषः त्यक्त्वा कद्रूसुतानपि ।
तपो विपुलमास्थाय वायुभक्षो जितेन्द्रियः ॥ २

गन्धमादनमासाद्य बदर्यां च तपोधनः ।
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥ ३

तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च ।
एकान्तशीलो नियतः सततं विजितेन्द्रियः ॥ ४

[1]तप्यमानं तपो घोरं ददर्श च पितामहः ॥ ४॥

[2]ब्रह्मा—

किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ॥ ५

त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ ।
ब्रूहि कामं च मे शेष यत्ते हृदि चिकीर्षितम् ॥ ६

शेषः—

सोदर्या मम सर्वे हि भ्रातरो मन्दचेतसः ।
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ॥ ७

---

1. क-ख-ग—शीतवातातपसहः परित्यक्तप्रियाप्रियः ।
धर्मे मनस्समाधाय स्नानी त्रिषवणे तथा ॥
[अधिकः पाठः]

2. क-ख-ग—परिशुष्कमांसत्वक्स्नायुं जटाचीरधरं प्रभुः ।
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः ॥
[अधिकः पाठः]

अभ्यसूयन्ति सततं परस्परममित्रवत् ।
ततोऽहं तप आतिष्ठे नैतान्पश्येयमित्युत ॥ ८

न मर्षयन्ति सततं ससुतां विनतां च ते ।
अस्माकं चापरो भ्राता वैनतेयः पितामह ॥ ९

तं च द्विषन्ति तेऽत्यर्थं स चापि सुमहाबलः ।
वरप्रदानात्स्वपितुः काश्यपस्य महात्मनः ॥ १०

सोऽहं तपः समास्थाय मोक्ष्यामीदं कलेबरम् ।
कथं मे प्रेत्यभावेऽपि तैर्न स्यात्सह सङ्गमः ॥ ११

ब्रह्मा —

जानामि शेष सर्वेषां भ्रातृणां ते विचेष्टितम् ॥ ११॥

मातुश्चाप्यपराधाद्वै भ्रातृणां ते महद्भयम् ।
कृतोऽत्र परिहारश्च पूर्वमेव भुजङ्गम ॥ १२॥

भ्रातृणां तव सर्वेषां [1]न शोकं कर्तुमर्हसि ॥ १३

शापादस्मान्महाघोराद् उक्तान्मात्रा महाबल ।
वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितम् ॥ १४

दित्सामीह वरं तेऽद्य प्रीतिर्मे परमा त्वयि ।
दिष्ट्या च बुद्धिर्धर्मे ते निविष्टा पन्नगोत्तम ॥ १५
अतो भूयश्च ते बुद्धिर् धर्मे भवतु सुस्थिरा ॥ १५॥

---

1. क-ख-ग—सुवृत्तानां विमोक्षणम्

शेषः—

एष एव वरो मेऽद्य काङ्क्षितः प्रपितामह ।
धर्मे मे रमतां बुद्धिः शमे तपसि चेश्वर ॥ १६॥

ब्रह्मा—

प्रीतोऽस्म्यनेन ते शेष दमेन प्रशमेन च ।
त्वया त्विदं वचः कार्यं मन्नियोगात्प्रजाहितम् ॥ १७॥

इमां महीं शैलवनोपपन्नां
ससागरां सनगरपत्तनां च ।
त्वं शेष सम्यक् चलितां यथावत्
संगृह्य तिष्ठस्व यथाऽचला स्यात् ॥ १८॥

शेषः—

यथाऽऽह देवो वरदः प्रजापतिर्
महीपतिर्भूतपतिर्जगत्पतिः ।
तथा महीं धारयिताऽस्मि निश्चलां
प्रयच्छतां मे शिरसि प्रजापते ॥ १९॥

ब्रह्मा—

अधो महीं गच्छ भुजङ्गमोत्तम
स्वयं तवैषा विवरं प्रदास्यति ।
इमां महीं धारयता त्वया हि मे
महत्प्रियं शेष कृतं भविष्यति ॥ २०॥

शेषोऽसि नागोत्तम धर्मदेवो
महीमिमां धारयिता त्वमेकः ।
अनेकभोगान् परिगृह्य सर्वान्
यथाहमेवं बलभिद्यथा वा ॥ २१॥

सूतः--

तथेति कृत्वा विवरं प्रविश्य स
प्रभुर्भुवो भुजगवराग्रजः स्थितः ।
बिभर्ति देवीं शिरसा महीमिमां
समुद्रनेमिं परिगृह्य सर्वशः ॥ २२॥

अधो भूमेर्वसत्येव नागोऽनन्तः प्रतापवान् ।
धारयन्वसुधामेकः शासनाद्ब्रह्मणः प्रभोः ॥ २३॥

सुपर्णं च सहायं वै भगवानमरोत्तमः ।
प्रादादेनमनन्ताय वैनतेयं पितामहः ॥ २४॥

अनन्ते च प्रयाते तु वासुकिः सुमहाबलः ।
अभ्यषिच्यत नागैस्तु दैवतैरिव वासवः ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ ५ ॥ आस्तीकपर्वणि विंशोऽध्यायः ॥ २० ॥

[अस्मिन्नध्याये २५॥ श्लोकाः ।]

## ॥ एकोनत्रिंशोऽध्यायः ॥

मातृशापपरिहारार्थं सर्पाणां मन्त्रालोचनम् ॥ १ ॥

सूतः—

मातुः सकाशात्तच्छापं श्रुत्वा पन्नगसत्तमः ।
वासुकिश्चिन्तयामास शापोऽयं न भवेत्कथम् ॥ १

ततः स मन्त्रयामास भ्रातृभिः सह सर्वशः ।
ऐरावतप्रभृतिभिर् ये स्वधर्मपरायणाः ॥ २

वासुकिः—

अयं शापो य[1]थोत्सृष्टो विदितो वस्सदानघाः ।
तस्य शापस्य मोक्षार्थे मन्त्रयित्वा यतामहे ॥ ३

सर्वेषामपि शापानां प्रतिघातो हि विद्यते ।
न तु मात्राऽभिशप्तानां मोक्षो विद्येत पन्नगाः ॥ ४

अव्ययस्याप्रमेयस्य सत्यस्य च यथाग्रतः ।
शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः ॥ ५

नूनं सर्वविनाशोऽयमस्माकं समुदाहृतः ।
[2]न [3]ह्यस्मान् सोऽव्ययो देवः शपन्तीं प्रत्यषेधयत् ॥ ६

1. अ—थादृष्टो विदितो वस्तदानघ ।
2. क-ख-ग—शापस्सृष्टो महाघोरो मात्रा खल्वविनीतया ।
3. क-ख-ग—ह्येनामव्ययो देवः [अधिकः पाठः]

तस्मात्संमन्त्रयामोऽद्य भुजङ्गानामनामयम् ।
यथा भवेन्न सर्वेषां मातुः कामोऽत्यगादयम् ॥ ७

मन्त्रयाम इहैवाथ हेतुं पश्याम मोक्षणे ।
यथा नष्टं पुरा देवो गूढमग्निं गुहागतम् ॥ ८

यथा स यज्ञो न भवेद् यथा चापि पराभवः ।
जनमेजयस्य सर्पाणां विनाशकरणाय वै ॥ ९

सूतः—

तथेत्युक्त्वा ततः सर्वे काद्रवेयाः समाहिताः ।
समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः ॥ १०

एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः ।
[1]जनमेजयं तं भिक्षामो यज्ञस्ते न भवेदिति ॥ ११

अपरे त्वब्रुवन्नागास् तत्र पण्डितमानिनः ।
मन्त्रिणोऽस्य वयं सर्वे भविष्यामः [2]सुसंमताः ॥ १२

स नः पृच्छति सर्वेषु कार्येष्वर्थविनिश्चयम् ।
तत्र बुद्धिं प्रवक्ष्यामो यथा यज्ञो न वर्तते ॥ १३

---

1. क-ख-ग—तेषु तत्रोपविष्टेषु पन्नगेषु द्विजोत्तम ।
एलापत्रोऽब्रवीत्तेषां मन्त्रविद्योत्तमो बली ।
एलापत्रः—
शृण्वन्तु नागा हृत्स्थं मे वयं भूत्वा द्विजर्षभा ।
[अधिकः पाठ ]

2. क-ख-ग—समागता

स नो बहुमतान् राजा बुद्धौ बुद्धिमतां वरः ।
यज्ञार्थं वक्ष्यते व्यक्तं नेति वक्ष्यामहे वयम् ॥ १४
दर्शयन्तो बहून्दोषान् प्रेत्य चेह च दारुणान् ।
हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः ॥ १५
अथवा य उपाध्यायः क्रतौ तस्य भविष्यति ।
सर्पसत्रविधानज्ञो राजकार्यहिते रतः ॥ १६
तं गत्वा दशतां कश्चिद् भुजङ्गः स मरिष्यति ।
तस्मिन्हते यज्ञकारे क्रतुः स न भविष्यति ॥ १७
ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यत्र चर्त्विजः ।
तान् सर्वान्दंशयिष्यामः कृतमेवं भविष्यति ॥ १८
तत्रापरे मन्त्रयन्ति धर्मात्मानो भुजङ्गमाः ।
अबुद्धिरेषा युष्माकं ब्रह्महत्या न शोभना ॥ १९
[1]सम्यक्सा धर्ममूला वै व्यसने शान्तिरुत्तमा ।
अधर्म एवं चरितः कृत्स्नं व्यापादयेज्जगत् ॥ २०
अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसम् ।
वर्षैर्निर्वापयिष्यामो मेघा भूत्वा सविद्युतः ॥ २१
स्रुग्भाण्डा[2]न्निशि गत्वा चाप्यपरे भुजगोत्तमाः ।
प्रमत्तानाहरन्त्वाशु विघ्न एवं भविष्यति ॥ २२

1. क-ख-ग—सत्यव्रता धर्ममूला
2. क-ख-ग—ण्डं निशि गत्वा वा त्वपरे

यज्ञे वा भुजगास्तस्मिन् शतशोऽथ सहस्रशः ।
जनं दशन्तु वै सर्वमेवं त्रासो भविष्यति ॥ २३
अथवा संस्कृतं भोज्यं दूषयन्तु भुजङ्गमाः ।
स्वेन मूत्रपुरीषेण सर्वभोक्तृविनाशनम् ॥ २४
अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे ।
यज्ञविघ्नं करिष्यामो दीयतां दक्षिणा इति ॥ २५
वश्यतां चागतोऽसौ नः करिष्यति यथेप्सितम् ।
अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपम् ॥ २६
गृहीत्वाऽऽनीय बध्नीमः क्रतुरेवं भवेन्न सः ।
अपरे त्वब्रुवंस्तत्र नागास्सुकृतकारिणः ॥ २७
दशामैनं प्रसह्याशु कृतमेवं भविष्यति ।
छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति ॥ २८
एषा नो नैष्ठिकी बुद्धिः [1]मता कर्तुं भुजङ्गमाः ।
यथा वा मन्यसे राजंस् तत्क्षिप्रं संविधीयताम् ॥ २९
इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगेश्वरम् ।
वासुकिश्चापि संचिन्त्य तानुवाच भुजङ्गमान् ॥ ३०

वासुकिः—

[2]नैषा वै नैष्ठिकी बुद्धिर् मता कर्तुं भुजङ्गमाः ।

---

1. क-ख-ग—सर्वेषां यदि रोचते

2. क-ख-ग— अधिकः पाठः { श्रेयः प्रसादनं मन्ये काश्यपस्य महात्मन. । ज्ञातिवंशस्य सौहार्दाद् आत्मनश्च भुजंगमाः ॥

सर्वेषामेव मे बुद्धिः पन्नगानां न रोचते ॥ ३१

किं तत्र संविधातव्यं भवतां यद्धितं भवेत् ।
अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ ५ ॥ आस्तीकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[अस्मिन्नध्याये ३२ श्लोकाः]

## ॥ त्रिंशोऽध्यायः ॥

एलापत्रभाषणम् ॥ १ ॥ देवब्रह्मसंवादमुखेनास्तीकोत्पत्तिकथनम् ॥ २ ॥

सूतः—

श्रुत्वा तु वचनं तेषां सर्वेषामपि चैव हि ।
वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदम् ॥ १

एलापत्रः—

[1]न स यज्ञो न भविता स च राजा तथाविधः ।
जनमेजयः पाण्डवेयो यतोऽस्माकमिदं भयम् ॥ २

1. क-ख-ग—प्रागेव दर्शिता बुद्धिर् मयैषा भुजगोत्तमाः ।
हेयेति यदि वो बुद्धिस् तवापि च तथा प्रभो ॥
अस्तु कामं ममाद्यापि बुद्धिः स्मरणमागता ।
तां शृणुष्व प्रवक्ष्यामि याथातथ्येन पन्नगाः ॥
[अधिकः पाठः]

दैवेनोपहतं राजन् न कर्तव्यं च पौरुषम् ।
[1]स दैवमेवाश्रयेत नान्यत्तत्र परायणम् ॥ ३

[2]पौरुषं नैतदस्माकं भयदं पन्नगोत्तमाः ।
दैवमेवाश्रयामोऽत्र श्रृणुध्वं वचनं मम ॥ ४

अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा ।
मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ॥ ५

[3]देवैश्चोक्तं तदाश्रौषं तीक्ष्ण तीक्ष्ण इति प्रभो ।
[4]पितामहमुपागम्य [5]दुःखार्तानां महाद्युते ॥ ६

देवाः—

का हि लब्ध्वा प्रियान्पुत्रान् शपेदेवं पितामह ।
ऋते कद्रूं तीक्ष्णरोषां देवदेव तवाग्रतः ॥ ७

तथेति वचनं तस्यास् त्वयाप्युक्तं पितामह ।
एतदिच्छाम विज्ञातुं कारणं यन्न वारिता ॥ ८

ब्रह्मा—

बहवः पन्नगास्तीक्ष्णा भीमवीर्या विषोल्बणाः ।

---

1. क-ख-ग—दैवेनोपद्रुतो राजन् यो भवेदिह पूरुषः।
2. क-ख-ग—तदिदं दैवमस्माकं
3. क-ख-ग—देवानां पन्नगश्रेष्ठ
4. क-ख-ग—शापदुःखान्वितप्तानां पन्नगानामनामयम् ।
कृपया परयाऽऽविष्टाः प्रार्थयन्तो दिवौकसः ॥
[अधिकः पाठः]
5. क-ख-ग—देवा वचनमब्रुवन्

प्रजानां हितकामोऽहं न च वारितवांस्तदा ॥ ९

ये दन्दशूकाः क्षुद्राश्च पापाचारा विषोल्बणाः ।
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ १०

तन्निमित्तश्च भविता मोक्षस्तेषां महाभयात् ।
पन्नगानां निबोधध्वं [1]यथा वै गदितं मया ॥ ११

यायावरकुले धीमान् भविष्यति महानृषिः ।
जरत्कारुरिति ख्यातस् तेजस्वी नियतेन्द्रियः ॥ १२

तस्य पुत्रो जरत्कारोर् उत्पत्स्यति महातपाः ।
अस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा ॥ १३
तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः ॥ १३॥

देवा —

स मुनिप्रवरो देव जरत्कारुर्महातपाः ।
कस्यां पुत्रं महात्मानं जनयिष्यति वीर्यवान् ॥ १४॥

ब्रह्मा—

[2]सनामायां सनामा स कन्यायां द्विजसत्तमः ।
अपत्यं वीर्यवान्देवा वीर्यवज्जनयिष्यति ॥ १५॥

---

1. क-ख-ग—तस्मिन्काले तथा गते ।
2. क-ख-ग—वासुकेर्भगिनी कन्या समुत्पन्ना सुशोभना ।
तस्मै दास्यति तां कन्यां वासुकिर्भुजगोत्तमः ।
तस्यां जनयिता पुत्रं वेदवेदांगपारगम् ॥
[अधिक· पाठः]

एलापत्रः—

एवमस्त्विति तं देवाः पितामहमथाब्रुवन् ।
उक्त्वा चैवं गता देवाः स च देवः पितामहः ॥ १६॥

सोऽहमेवं प्रपश्यामि वासुके भगिनीं तव ।
जरत्कारुरिति ख्यातां तां तस्मै प्रतिपादय ॥ १७॥

भैक्षवद्भिक्षमाणाय नागानां भयशान्तये ।
ऋषये सुव्रताय त्वम् एष मोक्षः श्रुतो मया ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

॥ ५ ॥ आस्तीकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

[अस्मिन्नध्याये १८॥ श्लोकाः ।]

---

## ॥ एकत्रिंशोऽध्यायः ॥

एलापत्रोपदेशेन वासुकिभगिन्या जरत्कार्वा रक्षणम् ॥ १ ॥

---

सूत —

[1]एलापत्रस्य तु वचश् श्रुत्वा नागा द्विजोत्तम ।
सर्वे प्रहृष्टमनसः साधु साध्वित्यपूजयन् ॥ १

ततः प्रभृति तां कन्यां वासुकिः पर्यरक्षत ।

---

1. अ—एलापत्रवचः श्रुत्वा नागरजो द्विजोत्तम ।

जरत्कारुं स्वसारं वै परं हर्षमवाप च ॥ २
ततो नातिमहान् कालः समतीत इवाभवत् ।
ततो देवासुराः सर्वे ममन्थुर्वरुणालयम् ॥ ३
तत्र योक्त्रमभून्नागो वासुकिर्बलिनां वरः ।
संस्थाप्य च महत्कर्म पितामहमुपागमन् ॥ ४
देवा वासुकिना सार्धं [1]पितामहमथाब्रुवन् ।
भगवञ्शापभीतोऽयं वासुकिस्तप्यते भृशम् ॥ ५
अस्यैतन्मानसं शल्यं समुद्धर्तुं त्वमर्हसि ॥ ५॥
जनन्याः शापजं देव ज्ञातीनां हितकाङ्क्षिणः ।
हितो ह्ययं सदाऽस्माकं प्रियकारी च नागराट् ॥ ६॥
कुरु प्रसादं देवेश शमयास्य मनोज्वरम् ॥ ७

ब्रह्मा—

मयैतद्विन्तितं पूर्वं वचनं मनसाऽमराः ।
एलापत्रेण नागेन यदस्याभिहितं पुरा ॥ ८
तत्करोत्वेष नागेन्द्रः काले प्राप्तं वचस्तदा ।
विनशिष्यन्ति ते पापा न तु ये धर्मचारिणः ॥ ९
उत्पन्नः स जरत्कारुस् तपस्युग्रे रतः सदा ।
तस्मै स्वभगिनीं काले जरत्कारुं प्रयच्छतु ॥ १०

---

1. क-ख-ग—तेऽथ ब्रह्माणमब्रुवन्

एलापत्रेण वचनं तदोक्तं भुजगोत्तम ।
भुजगानां हितं चैव तथा तन्न तदन्यथा ॥ ११

सूतः—

एतच्छ्रुत्वा स नागेन्द्रः पितामहवचस्तदा ।
सर्पान्बहूञ्जरत्कारौ [1]नियुक्तान्सुसमादधत् ॥ १२

जरत्कारुर्यथा भार्याम् इच्छेद्वरयितुं प्रभुः ।
शीघ्रमेत्य ममाऽऽख्येयं तन्नः श्रेयो भविष्यति ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ ५ ॥ आस्तीकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

[अस्मिन्नध्याये १३ श्लोकाः ।]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

परीक्षिन्मृगयाकथनम् ॥ १ ॥ परीक्षिता शमीकस्कन्धे मृतसर्पनिधानम् ॥ २ ॥

---

शौनकः—

जरत्कारुरिति प्रोक्तं यत्त्वया सूतनन्दन ।
इच्छामि तदहं तस्य ऋषेः श्रोतुं महात्मनः ॥ १

---

1. क-ख-ग—नित्ययुक्तान्समादधत्

किं कारणं जरत्कारोर् नामैतत्प्रथितं भुवि ।
जरत्कारुनिमित्तं मे यथावद्वक्तुमर्हसि ॥ २

सूतः—
जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम् ।
शरीरं कारु तस्यासीत् तत्स धीमाञ्शनैः शनैः ॥ ३

क्षपयामास तीव्रेण तपसेत्येतदुच्यते ।
जरत्कारुरिति ब्रह्मन् वासुकेर्भगिनीपतिः ॥ ४

एवमुक्तस्तु धर्मात्मा शौनकः प्राह तं तदा ।
उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ॥ ५

[1]अथ कालस्य महतः स मुनिः संशितव्रतः ।
तपस्यभिरतो धीमान् न दारानभ्यकाङ्क्षत ॥ ६

स ह्यूर्ध्वरेतास्तपसि प्रसक्तः
स्वाध्यायवान्वीतभयक्लमस्सः ।
चचार सर्वां पृथिवीं महात्मा
न चापि दारान्मनसाभ्यकाङ्क्षत् ॥[2] ७

---

1. क-ख-ग—उक्तं नाम यथातत्त्वं सर्वं यत्पृष्टवानहम् ।
यथा तु जातो ह्यास्तीक एतदिच्छामि वेदितुम् ॥
तच्छ्रुत्वा तस्य वचनं सौतिः प्रोवाच शाश्वतम् ।
संन्दिश्य पन्नगान्सर्वान् वासुकिश्शापमोहितः ॥
स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति॥[अधिकः पाठ.]

2. क-ख-ग—कोशेषु अत्र अध्यायसमाप्तिः–
द्वाविंशोऽध्यायस्समाप्त इति ॥

ततः परस्मिन्संप्राप्ते काले कस्मिंश्चिदेव तु ।
परीक्षिदिति [1]विख्यातो राजा कौरववंशभृत् ॥ ८
यथा पाण्डुर्महाबाहुर् धनुर्धरवरो भुवि ।
तथा विख्यातवांल्लोके परीक्षिदभिमन्युजः ॥ ९
[2]पाण्डुस्तु मृगयाशीलः पुरास्य प्रपितामहः ।
मृगान्विध्यन्वराहांश्च तरक्षून्महिषांस्तथा ॥ १०
अन्यांश्च विविधान्वन्यान् जघान पृथिवीपतिः ॥ १०॥
स कदाचिन्मृगं [3]विद्ध्वा बाणेन नतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ ११॥
यथा हि भगवान्रुद्रो विद्ध्वा यज्ञमृगं दिवि ।
अन्वगच्छद्धनुष्पाणिः पर्यन्विष्यंस्ततस्ततः ॥ १२॥
न हि तेन मृगो विद्धो जीवन्गच्छति वै वनम् ।
अभूतपूर्वस्तत्रासीद् राज्ञस्स्वर्गगातिं प्रति ॥ १३॥
[4]परीक्षितो महाराज्ञो विद्धो यन्नष्टवान्मृगः ।
दूरं चापहृतस्तेन मृगेण स महीपतिः ॥ १४॥
परिश्रान्तः पिपासार्त आससाद मुनिं वने ।
गवां प्रचारेष्वासीनं वत्सानां मुखनिस्सृतम् ॥ १५॥

---

क-ख-ग— { 1. नामासीद्राजा कौरववंशजः ।　　2. बभूव
3. घोरं विद्ध्वा तीक्ष्णेन पत्रिणा
4. पाण्डवेयस्य ब्रह्मर्षे }

भूयिष्ठमुपयुञ्जानं फेनं वै पिबतां पयः ॥ १६

तमभिद्रुत्य वेगेन स राजा संशितव्रतः ।
अपृच्छद्धनुरुद्यम्य तं मृगं क्षुच्छ्रमान्वितः ॥ १७

भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ।
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि ॥ १८

स मुनिस्तस्य नोवाच किंचिन्मौनव्रते स्थितः ।
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासृजत् ॥ १९

धनुष्कोट्या समुत्क्षिप्य [1]स चैनं समवैक्षत ।
न च किंचिदुवाचैनं शुभं वा यदि वाऽशुभम् ॥ २०

स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम् ।
दृष्ट्वा जगाम नगरीम् ऋषिस्त्वास्ते तथैव च ॥ २१

[2]तरुणस्तस्य पुत्रोऽभूत् तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ २२

स देवं परमीशानं सर्वभूतहिते रतम् ॥
ब्रह्माणमुपतस्थे वै काले काले सुसंयतः ॥ २३

---

1. क-ख-ग—न चैनं समुदैक्षत
2. क-ख-ग—न हि तं राजशार्दूलस् तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस् तत एनमधर्षयत् ॥
[अधिकः पाठः]

स तेन समनुज्ञातो ब्रह्मणा गृहमेयिवान् ।
सख्योक्तः क्रीडमानेन स तत्र [1]सहसा किल ॥ २४

संरम्भात्कोपनोऽतीव विषकल्प ऋषेः सुतः ।
ऋषिपुत्रेण तत्त्वार्थे कृशेन द्विजसत्तम ॥ २५

कृशः—

तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव ॥ २६

व्याहरत्स्वृषिपुत्रेषु मा च किञ्चिद्वचो वदीः ।
अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु ॥ २७

क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः ।
दर्पजाः पितरं द्रष्टा यस्त्वं शवधरं तथा ॥ २८

इति श्रीमहाभारते शतसहास्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ ५ ॥ आस्तीकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[अस्मिन्नध्याये २८ श्लोकाः ।]

---

1. क-ख-ग—हसता

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

मुनिपुत्रेण शृंगिणा परीक्षितः शापः ॥ १ ॥

सूतः—

एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः ।
[1]मृतधारं गुरुं श्रुत्वा पर्यतप्यत मन्युना ॥ १

स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन् ।
अपृच्छत कथं तातः [2]स मेऽद्य मृतधारकः ॥ २

[3]कृशः—

राज्ञा परीक्षिता तात मृगयां परिधावता ।
अवसक्तः पितुस्तेऽद्य मृतः कण्ठे भुजङ्गमः ॥ ३

शृङ्गी—

किं मे पित्रा कृतं तात राज्ञोऽनिष्टं दुरात्मनः ।
ब्रूहि त्वं कृश तत्त्वेन पश्य मे तपसो बलम् ॥ ४

1. क-ख-ग—मृतभारगुरुं श्रुत्वा पर्यतप्यन्महामनाः ॥
2. क-ख-ग—सर्वभूतहिते रतः
3. क-ख-ग—अनन्यचेतास्सततं विष्णुं देवमतोषयत् ।
वन्याशभोजी सततं मुनिर्मौनव्रते स्थितः ।
एवं भूतस्स तेजंस्वी सखेऽद्य मृतभारकः ॥
[अधिकः पाठः]

कृशः—

स राजा मृगयां यातः परीक्षिदभिमन्युजः ।
ससार मृगमेकाकी विद्धा बाणेन पत्रिणा ॥ ५

न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ॥ ६

तं स्थूणभूतं तिष्ठन्तं क्षुत्पिपासाश्रमान्वितः ।
पुनःपुनर्मृगं नष्टं पप्रच्छ पितरं तव ॥ ७

स च मौनव्रतोपेतो वचो न प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या मृतं सर्पमवासृजत् ॥ ८

[1]स्कन्धे तव पिता चासौ तथैवास्ते यतव्रतः ।
सोऽपि राजा स्वनगरं प्रतियातो गजाह्वयम् ॥ ९

सूतः—

[2]श्रुत्वैतद्दृषितः सख्युर् वधःस्तब्ध्वा च विष्ठितः ।
कोपसंरक्तनयनः प्रज्वलन्निव मन्युना ॥ १०

आविष्टः स तु कोपेन शशाप नृपतिं तदा ।
वार्युपस्पृश्य तेजस्वी क्रोधवेगसमन्वितः ॥ ११

शृङ्गी—

योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य च ।

---

1. क-ख-ग—शृंगिस्तव
2. क-ख-ग—श्रुत्वैतदृषिपुत्रस्तु दिवं स्तब्ध्वैव तिष्ठति ।

स्कन्धे मृतमवास्राक्षीत् पन्नगं राजकिल्बिषी ॥ १२

तं पापमतिसंक्रुद्धस् तक्षकः पन्नगोत्तमः ।
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ॥ १३

सप्तरात्रादितो नेता यमस्य सदनं प्रति ।
द्विजानामवमन्तारं कुरूणामयशस्करम् ॥ १४

सूतः—

इति शप्त्वा नृपं क्रुद्धः शृङ्गी पितरमभ्ययात् ॥ १४॥

आसीनं गोचरे तस्मिन् वहन्तं शवपन्नगम् ।
वृद्धमालोक्य पितरं शृङ्गी स्कन्धगतेन वै ॥ १५॥

शवेन भुजगेनासीद् भूयः क्रोधसमन्वितः ॥ १६

दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत् ॥ १६॥

श्रुत्वेमां धर्षणां तात राज्ञा तेन दुरात्मना ।
[1]कोपात्तमशपं तात राजानं दृष्टचेतसम् ॥ १७॥

यथार्हति तथा चोग्रं शप्तः कुरुकुलाधमः ॥ १८

सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः ।
वैवस्वतस्य सदनं नेता परमदारुणम् ॥ १९

सूतः—

तमब्रवीत्पिता ब्रह्मंस् तथा कोपसमन्वितम् ॥ १९॥

---

1. क-ख-ग—राज्ञा परीक्षिता कोपाद् अशपं तमहं नृपम् ॥

न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ।
वयं तस्य नरेन्द्रस्य विषये निवसामहे ॥ २०॥
न्यायतो रक्षितास्तेन तस्य शापं न रोचये ॥ २१
सर्वथा वर्तमानस्य राज्ञोऽप्यस्मद्विधैः सदा ।
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः ॥ २२
यदि राजा न रक्षेत पीडा वै नः परा भवेत् ।
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम् ॥ २३
[1]रक्ष्यमाणा वयं तात राजभिश्शास्त्रदृष्टिभिः ।
चरामो विपुलं धर्मं तेषां भागोऽस्ति धर्मतः ॥ २४
परीक्षित्तु विशेषेण यथाऽस्य प्रपितामहः ।
रक्षत्यस्मान्यथा राज्ञा रक्षितव्याः प्रजास्तथा ॥ २५
तेनेह क्षुधितेनैत्य श्रान्तेन मृगलिप्सया ।

---

1. क-ख-ग—अराजके जनपदे दोषो जायेत वै सदा ।
उद्धृतं सततं लोकं राजा धर्मेण शास्ति वै ॥
राज्ञा प्रवर्तते धर्मो नोद्विग्नश्चरते प्रजाः ।
धर्मे प्रवर्तते धर्मो धर्मात्स्वर्गः प्रतिष्ठितः ।
राज्ञा यज्ञकथास्सर्वा यज्ञाद्देवाः प्रतिष्ठिताः ।
देवाद्वृष्टिः प्रवर्तेत वृष्टेरोषधयः स्मृताः ॥
ओषधीभ्यो मनुष्याणां जायते सततं हितम् ।
मानुषाणां हि यो धाता राजा राज्यकरः प्रभुः ।
सुदुःखश्चोत्रियस्सोम्य इत्येवं मनुरब्रवीत् ॥
[अधिकः पाठः]

अजानता [1]कृतं तात ध्रुवमेतदसंशयम् ॥ २६

कस्मादिदं त्वया बाल्यात् सहसा दुष्कृतं कृतम् ।
न ह्यर्हति नृपः शापम् अस्मत्तः पुत्र सर्वथा ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ ५ ॥ आस्तीकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[अस्मिन्नध्याये २७ श्लोकाः ।]

## ॥ चतुस्त्रिंशोऽध्यायः ॥

शमीकप्रेषितेन गौरमुखाख्यशिष्येण सह परीक्षित्संवादः ॥ १ ॥ मन्त्रिभि सह राज्ञो विचारः ॥ २ ॥ तक्षककाश्यपसंवादः ॥ ३ ॥

शृङ्गी—

यद्येतत्साहसं तात यदि वा दुष्कृतं कृतम् ।
प्रियं वाप्यप्रियं वापि वागुक्ता न मृषा मम ॥ १

नैवान्यथा तद्भविता पितरेतद्ब्रवीमि ते ।
नाहं मृषा प्रब्रवीमि स्वैरे[2]ष्वपि कुतः शपन् ॥ २

शमीकः—

[3]जानाम्यस्युग्रभावं त्वां तव सत्यां गिरं तथा ।

---

1. क-ख-ग—व्रतमिदं कृतमेतदसंशयम्
2. क-ख-ग—ष्वकुपितश्शपन्
3. क-ख-ग—जानाम्युग्रप्रभावं त्वां पुत्र सत्यगिरं तथा ।

नानृतं प्रोक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ ३
पित्रा पुत्रो वयस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः ॥ ४
किं पुनर्बाल एव त्वं तपसा भावितः प्रभो ।
वर्धते च प्रभवतां कोपोऽतीव महात्मनाम् ॥ ५
[1]सोऽहं पश्यामि वक्तव्यं त्वयि धर्मभृतां वर ।
पुत्रत्वाद्बालभावाच्च तवावेक्ष्य च साहसम् ॥ ६
स त्वं शमयुतो भूत्वा [2]नातः साहसमाचर ।
चरन् क्रोधमिमं त्यक्त्वा नैव धर्मं प्रहास्यसि ॥ ७
क्रोधो हि धर्मं हरति यतीनां दुःखसंचितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते । ८
शम एव यतीनां हि क्षमिणां सिद्धिकारकः ।
क्षमावतामयं लोकः परश्चापि क्षमावताम् ॥ ९
तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः ।
क्षमया प्राप्स्यसे लोकान् ब्रह्मणः समनन्तरान् ॥ १०
[3]अहं तु शममास्थाय वक्तुं तत्त्वाख्यमद्य वै ।

---

1. क-ख-ग—उत्सीदेयुरिमे लोकाः क्षमा चास्य प्रतिश्रयः।
[अधिकः पाठः]
2. क-ख-ग—वन्यमाहारमाहरन् ।
3. क-ख-ग--मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै ।

[1]शिष्यं धर्मभृतस्तात प्रेषयिष्ये नृपस्य वै ॥ ११
मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना ।
ममेमां धर्षणां त्वत्तः प्रेक्ष्य राजन्नमर्षिणा ॥ १२

सूतः—

एवमादिश्य शिष्यं वै प्रेषयामास सुव्रतः ।
परीक्षिते नृपतये दयापन्नो महातपाः ॥ १३
संदिश्य कुशलप्रश्नं कार्यवृत्तान्तमेव च ।
शिष्यं गौरमुखं नाम शीलवन्तं समाहितम् ॥ १४
सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्धनम् ।
विवेश भवनं राज्ञः पूर्वं द्वार्स्थैर्निवेदितः ॥ १५
पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा ।
आचख्यौ विपरिश्रान्तो राज्ञे सर्वमशेषतः ॥ १६
शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ ॥ १६॥

गौरमुखः—

शमीको नाम राजेन्द्र विषये वसते तव ।
ऋषिः [2]शमदमोपेतो मौनव्रतसमन्वितः ॥ १७॥
तस्य त्वया नरव्याघ्र स्कन्धे भरतसत्तम ।
अवसक्तो धनुष्कोट्या सर्पः प्राणैर्वियोजितः ॥ १८॥

---

1. क-ख-ग—तत्करिष्यामि ताताहं
2. क-ख-ग—परमधर्मात्मा शान्तो दान्तो महातपाः ।

श्रान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे ॥ १९

तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै ।
तक्षकात्सप्तरात्रेण मृत्युर्वै ते भविष्यति ॥ २०

तस्य रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत् ।
तदन्यथा न शक्यं च कर्तुं केनचिदप्युत ॥ २१

न हि शक्नोति संयन्तुं पुत्रं कोपसमन्वितम् ।
ततोऽहं प्रेषितस्तेन तव राजन्हितार्थिना ॥ २२

सूतः—

इति श्रुत्वा वचो घोरं स राजा कुरुनन्दनः ।
पर्यतप्यत तत्पापं कृत्वा ब्रह्मन्महात्मनः ॥ २३

तं च मौनव्रतधरं श्रुत्वा मुनिवरं तदा ।
भूय एवाभवद्राजा शोकसंतप्तमानसः ॥ २४

अनुक्रोशात्मतां तस्य शमीकस्योपधार्य तु ।
पर्यतप्यत भूयोऽपि कृत्वा तत्किल्बिषं मुने ॥ २५

न हि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत ।
अशोचदमरप्रख्यो यथा कृत्वेह कर्म तत् ॥ २६

ततस्तं प्रेषयामास राजा गौरमुखं तदा ।
भूयः प्रसादं भगवान् करोत्विति ममैष वै ॥ २७

श्रुत्वा तद्वचनं राज्ञो मुनिर्गौरमुखस्तदा ।

तमनुज्ञाप्य वेगेन प्रजगामाश्रमं गुरोः ॥ २८

तस्मिंस्तु गतमात्रे तु राजा गौरमुखे तदा ।
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः ॥ २९

निश्चित्य मन्त्रिभिश्चैव सहितो मन्त्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् ॥ ३०

रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान् सिद्धमन्त्रांश्च सर्वतो वै न्यवेशयत् ॥ ३१

राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः ।
मन्त्रिभिः सह मन्त्रज्ञैः समन्तात्परिरक्षितः ॥ ३२

प्राप्ते च दिवसे तस्मिन् सप्तमे द्विजसत्तम ।
काश्यपोऽभ्यागमद्विद्वांस् तं राजानं चिकित्सितुम् ॥ ३४

श्रुतं हि तेन तदभूद् अद्य तं राजसत्तमम् ।
तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम् ॥ ३५

तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम् ।
तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ॥ ३६

तं ददर्श स नागेन्द्रस् तक्षकः काश्यपं पथि ।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽधिकः ॥ ३७

तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुंगवम् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ ३८

काश्यपः—

नृपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमम् ।
तक्षकः पन्नगश्रेष्ठस् तेजसाऽद्य प्रधक्ष्यति ॥ ३९

तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा ।
पाण्डवानां कुलकरं राजानममितौजसम् ॥ ४०

गच्छामि सौम्य त्वरितः सद्यः कर्तुमपज्वरम् ॥ ४०॥

1तक्षकः—

अहं स तक्षको ब्रह्मंस् तं धक्ष्यामि महीपतिम् ।
निवर्तस्व मया दष्टं न शक्यं स्याच्चिकित्सितुम् ॥ ४१॥

काश्यप —

अहं तु नृपतिं नाग त्वया दष्टमपज्वरम् ।
करिष्य इति मे बुद्धिर् विद्याबलसमाश्रिता ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ ५ ॥ आस्तीकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[अस्मिन्नध्याये ४२ ॥ श्लोकाः]

---

1. क-ख-ग—विज्ञातविषविद्योऽहं ब्राह्मणो लोकपूजितः ।
अस्मद्गुरुकटाक्षेण कल्योऽहं विषनाशने ॥

[अधिकः पाठः]

## ॥ पञ्चत्रिंशोऽध्यायः ॥

परीक्षितः कृमिभूतेन तक्षकेण दंशनम् ॥ १ ॥

तक्षकः—

दष्टं यदि मयेह त्वं शक्तः किंचिच्चिकित्सितुम् ।
ततो दष्टं मया वृक्षम् इमं जीवय काश्यप ॥ १

परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ २

काश्यपः—

दश नागेन्द्र वृक्षं त्वं यमेनमभिमन्यसे ।
अहमेनं त्वया दष्टं जीवयिष्ये भुजंगम ॥ ३

सूतः—

एवमुक्तस्स नागेन्द्रः काश्यपेन महात्मना ।
अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ॥ ४

स वृक्षस्तेन दष्टस्सन् सद्य एव महाद्युते ।
आशीविषविषोपेतः प्रजज्वाल समन्ततः ॥ ५

तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत् ।
कुरु यत्नं द्विजश्रेष्ठ जीवयैनं वनस्पतिम् ॥ ६

सूतः—

भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा ।
भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत् ॥ ७

काश्यपः—

विद्याबलं पन्नगेन्द्र पश्य मेऽस्मिन्वनस्पतौ ।
अहं संजीवयाम्येनं पश्यतस्ते भुजंगम ॥ ८

सूत —

ततस्स भगवान्विद्वान् काश्यपो द्विजसत्तमः ।
भस्मराशीकृतं वृक्षं विद्यया समजीवयत् ॥ ९

साङ्कुरं तं स कृतवांस् ततः पर्णद्वयान्वितम् ।
पलाशिनं शाखिनं च तथा विटपिनं पुनः ॥ १०

तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना ।
उवाच तक्षको ब्रह्मन् [1]एतदत्यद्भुतं त्वयि ॥ ११

विप्रेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा ।
कं त्वमर्थमभिप्रेक्ष्य यासि तत्र तपोधन ॥ १२

यत्तेऽभिलषितं प्राप्तुं फलमस्मान्नृपोत्तमात् ।
[2]तत्तेऽहं संप्रदास्यामि निवर्तस्व द्विजोत्तम ॥ १३

विप्रशापाभिभूते च क्षीणायुषि नराधिपे ।
अटमानस्य ते विप्र सिद्धिः संशयिता भवेत् ॥ १४

---

1. अ—नैत 2. क-ख-ग—अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ।

ततो यशः प्रदीप्तं ते त्रिषु लोकेषु विश्रुतम् ।
विरश्मिरिव घर्मांशुर् अन्तर्धानमितो व्रजेत् ॥ १५

काश्यपः—

धनार्थी याम्यहं तत्र तद्ददस्व भुजंगम ।
ततोऽहं विनिवर्तिष्ये गृहायोरगसत्तम ॥ १६

तक्षकः—

यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम् ।
अहं तेऽद्य प्रदास्यामि निवर्तस्व द्विजोत्तम ॥ १७

सूत —

तक्षकस्य वचश्श्रुत्वा काश्यपो द्विजसत्तमः ।
प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान् ॥ १८

दिव्यज्ञानस्स तेजस्वी ज्ञात्वा तं नृपतिं तदा ।
क्षीणायुषं पाण्डवेयम् अपावर्तत काश्यपः ॥ १९
लब्ध्वा वित्तं मुनिवरस् तक्षकाद्यावदीप्सितम् ॥ १९॥
निवृत्ते काश्यपे तस्मिन् समयेन महात्मनि ।
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम् ॥ २०॥

अथ शुश्राव गच्छन्स तक्षको जगतीपतिम् ।
मन्त्रैर्विषहरैर्दिव्यै रक्ष्यमाणं प्रयत्नतः ॥ २१॥

स चिन्तयामास तदा मायायोगेन पार्थिवः ।

मया वञ्चयितव्योऽसौ क उपायो भवेदिति ॥ २२॥
ततस्तापसरूपेण प्राहिणोत्स भुजंगमान् ।
फलपात्रोदकं गृह्य राज्ञे नागोऽथ तक्षकः ॥ २३॥

तक्षक—
गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया ।
फलपात्रोदकं नाम प्रतिग्राहयितुं नृपम् ॥ २४॥

सूत—
ते तक्षकसमादिष्टास् तथा निन्युर्भुजङ्गमाः ।
उपनिन्युस्तथा राज्ञे दर्भानम्भः फलानि च ॥ २५॥
तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान् ।
श्रुत्वा तु तेषां कार्याणि गम्यतामित्युवाच तान् ॥ २६॥
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ।
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः ॥ २७॥
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः ।
तापसैरुपनीतानि फलानि सहिता मया ॥ २८॥
अथ राजा ससचिवः फलान्यादातुमैच्छत ॥ २९
यज्जग्राह फलं राजा तस्मिन् क्रिमिरभूदणुः ।
ह्रस्वकः कृष्णनयनस् ताम्रो वर्णेन शौनक ॥ ३०
स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् ॥ ३०॥
अस्तमभ्येति सविता विषादन्यन्न मे भयम् ।

सत्यवागस्तु स मुनिः कृमिको मां दशत्वयम् ॥ ३१॥
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ।
ते चैनमन्ववर्तन्त मन्त्रिणः कालचोदिताः ॥ ३२॥
एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य ह ।
कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः ॥ ३३॥
हसन्नेव च नागेन तक्षकेणाभिवेष्टितः ।
तस्मात्फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् ॥ ३४॥
वेष्टयित्वा च भोगेन विनद्य च महास्वनम् ।
अदशत्पृथिवीपालं तक्षकः पन्नगेश्वरः ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ५ ॥ आस्तीकपर्वणि सप्तविंशोऽध्याय ॥ २७ ॥
[अस्मिन्नध्याये ३५ ॥ श्लोकाः]

## ॥ षट्त्रिंशोऽध्यायः ॥

जनमेजयस्य राज्याभिषेक विवाहश्च ॥ १ ॥

सूतः—
तं तथा मन्त्रिणो दृष्ट्वा नागेन परिवेष्टितम् ।
विवर्णवदनास्सर्वे रुरुदुर्भृशदुःखिताः ॥ १
[1]दहन्तं तं तथा दृष्ट्वा मन्त्रिणस्ते प्रदुद्रुवुः ।

1. क-ख-ग—तं तु नागं ततो

अपश्यंश्चैव ते यान्तम् आकाशे नागमद्भुतम् ॥ २
सीमन्तमिव कुर्वाणं नभसः पद्मवर्चसम् ।
तक्षकं पन्नगश्रेष्ठं भृशं शोकपरायणाः ॥ ३

ततस्तु ते तद्गृहमग्निना वृतं
प्रदीप्यमानं विषजेन भोगिनः ।
भयात्परित्यज्य दिशः प्रपेदिरे
पपात तच्चाशनिताडितं यथा ॥ ४
ततो नृपे तक्षकतेजसा हते
प्रयुज्य सर्वाः परलोकसत्क्रियाः ।
शुचिर्द्विजो राजपुरोहितस्तदा
तथैव ते तस्य नृपस्य मन्त्रिणः ॥ ५
नृपं शिशुं तस्य [1]नृपस्य चक्रिरे
समन्त्रिणस्तत्पुरवासिनो जनाः ।
नृपं यमाहुस्तममित्रतापनं
कुरुप्रवीरं जनमेजयं [2]तदा ॥ ६
स बाल एवार्यमतिर्नृपोत्तमः
सहैव तैर्मन्त्रिपुरोहितैस्तदा ।
शशास राज्यं कुरुपुंगवाग्रजो
यथाऽस्य वीरः प्रपितामहस्तथा ॥ ७

---

1. क-ख-ग—सुतं प्रचक्रिरे 2. क-ख-ग—जनाः

ततस्तु राजानममित्रतापनं
समीक्ष्य ते तस्य नृपस्य मन्त्रिणः ।
सुवर्णवर्माणमुपेत्य काशिपं
वपुष्टमार्थे वरयांप्रचक्रमुः ॥ ८

ततस्स राजा प्रददौ वपुष्टमां
कुरुप्रवीराय [1]समीक्ष्य धर्मतः ।
स चापि तां प्राप्य मुदा युतोऽभवन्-
न चान्यनारीषु मनो दधे क्वचित् ॥ ९

सरस्सु फुल्लेषु नगेषु चैव हि
प्रसन्नचेता विजहार [2]सप्रियः ।
तथा स राजप्रवरो विजह्निवान्
यथोर्वशीं प्राप्य पुरा पुरूरवाः ॥ १०

वपुष्टमा चापि वरं पतिं तदा
प्रतीतरूपं तमवाप्य भूमिपम् ।
[3]अनन्यभावा रमयांबभूव सा
विहारकालेष्ववरोधसुन्दरी ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ५ ॥ आस्तीकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[ अस्मिन्नध्याये ११ श्लोकाः ]

---

1. क-ख-ग—परीक्ष्य 2. क-ख-ग—वीर्यवान्
3. क-ख-ग—सुखेन रामा

## ॥ सप्तत्रिंशोऽध्यायः ॥

जरत्कारोर्गर्ते लम्बमानस्वपितॄणां दर्शनम् ॥ १ ॥

सूतः—

एतस्मिन्नेव काले तु जरत्कारुर्महातपाः ।
चचार पृथिवीं कृत्स्नां यत्रसायंगृहो मुनिः ॥ १

चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः ।
तीर्थेष्वा[1]यतनं कुर्वन् पुण्येषु विचचार ह ॥ २

वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः ।
स ददर्श पितॄन्गर्ते लम्बमानानधोमुखान् ॥ ३

एकतन्त्ववशिष्टान्वै वीरणस्तम्बमाश्रितान् ।
तं च तन्तुं शनैराखुम् आददानं बिलाश्रयम् ॥ ४

निराहारकृशाङ्गीणान् गर्ते स्वत्राणमिच्छतः ।
उपसृत्य स तान्दीनान् दीनरूपोऽभ्यभाषत ॥ ५

जरत्कारुः—

के भवन्तोऽवलम्बन्ते वीरणस्तम्बमाश्रिताः ।
दुर्बलं खादितं मूले आखुना बिलवासिना ॥ ६

वीरणस्तम्बके मूलं यदप्येकमिह स्थितम् ।
तदप्ययं शनैराखुर् आदत्ते दशनैः शितैः ॥ ७

---

1. क-ख-ग—प्लवनं

छिद्यतेऽल्पावशिष्टत्वाद् एतदप्यचिरादिव ।
तत्रस्थाः पतिता रौद्रे गर्तेह्यस्मिन्नधोमुखाः ॥ ८
तस्मान्मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान् ।
कृच्छ्रामापदमापन्नान् प्रियं किं करवाणि वः ॥ ९
तपसोऽस्य चतुर्थेन तृतीयेन च वा पुनः ।
अर्धेन वापि [1]सन्तर्तुम् आपदं ब्रूत मा चिरम् ॥ १०
अथवा तु समग्रेण तरन्तु तपसा मम ।
भवन्तः सर्व एतस्मात् काममेवं विधीयताम् ॥ ११

पितरः—

कुतो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छति ।
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् ॥ १२
अस्ति नस्तात तपसः फलं प्रवदतां वर ।
संतानप्रक्षयाद्ब्रह्मन् पताम निरयेऽशुचौ ॥ १३
लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै ।
येन त्वामभिजानीमो लोके विख्यातपौरुषम् ॥ १४
ऋद्धो भवान् महायोगी यो नः शोच्यान् सुदुःखितान् ।
[2]शोचस्युपेत्य कारुण्याच्छृणु ये वै वयं द्विज ॥ १५
यायावरा नाम वयम् ऋषयः संशितव्रताः ।

---

1. क-ख-ग—निस्तर्तुं
2. क-ख-ग—शोच्यान्सुदुःखितानस्मान् कस्माद्वेदविदांवर ।
[अधिकः पाठः]

लोकात् पुण्यादि[1]तो भ्रष्टाः सन्तानप्रक्षयान्विताः ॥ १६
प्रणष्टं नस्तपः पुण्यं न हि नस्तन्तुरस्ति वै ।
अस्ति त्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा ॥ १७
मन्दभाग्योऽल्पभाग्यानां बन्धुस्स किल नः कुले ।
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ॥ १८
नियतात्मा महात्मा च सुव्रतः सुमहातपाः ।
तेन स्म तपसो लोभात् कृच्छ्रमापादिता वयम् ॥ १९
न तस्य भार्या पुत्रो वा बान्धवो वाऽपि कश्चन ।
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् ॥ २०
स वक्तव्यस्त्वया दृष्ट्वा ह्यस्माकं नाथवत्तया ।
पितरस्तेऽवलम्बन्ते गर्ते दीना अधोमुखाः ॥ २१
साधु दारान् कुरुष्वेति प्रजायस्वेति चाभि भोः ।
कुलतन्तुर् हि नश्शिष्टः स एवैकस्तपोधन ॥ २२
यं तु पश्यसि नो ब्रह्मन् वीरणस्तम्बमाश्रितान् ।
एषोऽस्माकं कुलस्तम्ब आस्ते स्वकुलवर्धनः ॥ २३
यानि पश्यसि चैवं त्वं मूलानीमानि वीरुधः ।
एते नस्तन्तवस्तात कालेन परिभक्षिताः ॥ २४
यत्त्वेकं पश्यसि ब्रह्मन् मूल[2]मस्य न भक्षितम् ।
अत्र लम्बामहे सर्वे सोऽप्येकस्तम्ब आश्रितः ॥ २५

---

1. क-ख-ग—हस्तस्ता.　　2. क-ख-ग—मस्यार्धभक्षितम्

यमाखुं पश्यसि ब्रह्मन् काल एष महाबलः ॥ २५॥
[1]स तन्तुमेकं दिवसैर् दशनैः क्षयते नुदन् ।
जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् ॥ २६॥
न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम ॥ २७
छिन्नमूलान् परिभ्रष्टान् कालोपहतचेतसः ।
अप्रतिष्ठान् प्रपश्यास्मान् यथा दुष्कृतकारिणः ॥ २८
अस्मासु पतितेष्वत्र सह [2]पूर्वैः सहान्वयैः ।
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ॥ २९
तपो वाऽप्यथ वा यज्ञो यच्चान्यत्पावनं महत् ।
तत्सर्वं न समं तात संतत्यैतत्सतां मतम् ॥ ३०
स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपस्विनम् ।
यथा दृष्टमिदं चाद्य त्वयाऽऽख्येयमशेषतः ॥ ३१
यथा दारान्प्रकुर्यात्स पुत्रांश्चोत्पादयेद्यथा ।
तथा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ॥ ३२

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ ५ ॥ आस्तीकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[अस्मिन्नध्याये ३२ श्लोकाः ।]

---

1. क-ख-ग—स तं तपोरतं मन्दं शनैः क्षपयते तु नः
2. क-ख-ग—सर्वैः पितामहैः

## ॥ अष्टात्रिंशोऽध्यायः ॥

जरत्कारोः स्वपितृसंवाद ॥ १ ॥ भार्यान्वेषणं च ॥ २ ॥

सूतः—

एतच्छ्रुत्वा जरत्कारुर् भृशं शोकपरायणः ।
उवाच स्वान्पितॄन्[1] मुख्यान् बाष्पगद्गदया गिरा ॥ १

जरत्कारुः—

अहमेव जरत्कारुः किल्बिषी भवतां सुतः ।
तं दण्डं धारयत मे दुष्कृतेरकृतात्मनः ॥ २

पितरः—

पुत्र दिष्ट्याऽसि संप्राप्त इमं देशं यदृच्छया ।
किमर्थं च त्वया ब्रह्मन् न कृतो दारसङ्ग्रहः ॥ ३

जरत्कारुः—

ममायं पितरो नित्यं हृदि संपरिवर्तते ।
ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र च ॥ ४

एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ।
मया निवर्तिता बुद्धिर् ब्रह्मचर्यात्पितामहाः ॥ ५

करिष्ये वः प्रियं कामं निवेक्ष्ये नात्र संशयः ।
सनामां यद्यहं कन्याम् उपलप्स्ये कदाचन ॥ ६

---

1. क-ख-ग—दुःखाद्बाष्पसंदिग्धया

भविष्यति च या काचिद् भैक्षवत्स्वयमुद्यता ।
प्रतिग्रहीता तामस्मि [1]न हरेयं च तामहम् ॥ ७

एवंविधमहं [2]कुर्यां निवेशं प्राप्नुयां यदि ।
अन्यथा न करिष्ये तत् सत्यमेतत्पितामहाः ॥ ८

सूतः—

एवमुक्त्वा तु स पितॄंश् चचार पृथिवीं मुनिः ।
न च स्म लभते भार्यां वृद्धोऽयमिति शौनक ॥ ९

यदा निर्वेदमापन्नः पितृभिश्च प्रचोदितः ।
तदाऽरण्यं स गत्वोच्चैश् चुक्रोश भृशदुःखितः ॥ १०

यानि भूतानि सन्तीह जङ्गमस्थावराणि च ।
अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः ॥ ११

उग्रे तपसि वर्तन्तं पितरश्चोदयन्ति माम् ।
निविशस्वेति दुःखार्तास् तेषां प्रियचिकीर्षया ॥ १२

निवेशार्थ्यखिलां भूमिं कन्याभैक्षं चराम्यहम् ।
दरिद्रो दुःखशीलश्च पितृभिः सन्नियोजितः ॥ १३

यस्य कन्याऽस्ति भूतस्य गुणैः सम्यक् प्रकीर्तिता ।
प्रयच्छतु स मे कन्यां चरतः सर्वतोदिशम् ॥ १४

---

1. क-ख-ग—न भरेयं च    2. अ—कन्या

मम कन्या सनामा या भैक्षवच्चोद्यता भवेत् ।
[1]हरेयं चैव यां नाहं तां मे कन्यां प्रयच्छत ॥ १५

ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः ।
तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन् ॥ १६

तेषां श्रुत्वाऽथ नागेन्द्रस् तां कन्यां समलङ्कृताम् ।
प्रगृह्यारण्यमगमत् समीपं तस्य पन्नगः ॥ १७

[2]स तत्र भैक्षवत्कन्यां प्रादात्तस्मै महात्मने ।
[3]कालेन वासुकिर्ब्रह्मन् न स तां प्रत्यगृह्णत ॥ १८

असनामेति वै कृत्वा भरणे चाविचारिते ।
[4]मोक्षभावे स्थितश्चापि मन्दीभूतः परिग्रहे ॥ १९

ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन ।
वासुकिं हरणं चास्या न कुर्यामित्युवाच ह ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ ५ ॥ आस्तीकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[अस्मिन्नध्याये २० श्लोकाः]

---

1. क-ख-ग—भ
2. क-ख-ग—तत्र तां
3. क-ख-ग—नागेन्द्रो
4. क-ख-ग—मोक्ष एव

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

जरत्कारोरुद्वाह ॥ १ ॥ तस्यां गर्भसंभवः ॥ २ ॥ समयोल्लङ्घनेन क्रुद्धस्य मुनेः तपोऽर्थं गमनम् ॥ ३ ॥

सूतः—

वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा ।
सनामा तव कन्येयं स्वसा मे तपसान्विता ॥ १

हरिष्यामि च ते भार्यां प्रतीच्छेमां द्विजोत्तम ।
रक्षणं च करिष्येऽस्याः सर्वशक्त्या तपोधन ॥ २
त्वदर्थं रक्षिता चैषा मया मुनिवरप्रभो ॥ २॥

ऋषिः—

न भरिष्येऽहमेतां वै एष मे समयः कृतः ।
अप्रियं मा करिष्यश्च कृते चैनां त्यजाम्यहम् ॥ ३॥

सूतः—

प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति ।
जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ॥ ४॥

तत्र मन्त्रविदां श्रेष्ठस् तपोवृद्धो महा[1]मतिः ।
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ॥ ५॥

ततो वास[2]गृहे शुभ्रे पन्नगेन्द्रस्य धीमतः ।

1. क-ख-ग—तपाः 2. क-ख-ग—गृहं शुभ्रं

जगाम भार्यामादाय स्तूयमानो मनीषिभिः ॥ ६

शयनं तत्र वै क्लृप्तं [1]परार्ध्यास्तरणावृतम् ।
स तत्र भार्यासहितो जरत्कारुरुवास ह ॥ ७

स तत्र समयं चक्रे भार्यया सह सत्तमः ॥ ७॥

जरत्कारुः—

विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ।
त्यजेयमप्रिये हि त्वां कृते वासं च ते गृहे ॥ ८॥

एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ९

सूत—

ततः परमसंविग्ना स्वसा नागपतेस्तु सा ।
अतिदुःखान्विता वाचं तमुवाचैवमस्त्विति ॥ १०

तथैव साच भर्तारं दुःखशीलमुपाचरत् ।
उपायैश्श्वेतकाकीयैः प्रियकामा यशस्विनी ॥ ११

ऋतुकाले ततस्स्नाता कदाचिद्वासुकेस्स्वसा ।
भर्तारं तु यथान्यायम् उपतस्थे महामुनिम् ॥ १२

तत्र तस्यां समभवद् गर्भो ज्वलनसन्निभः ।
अतीव तपसा युक्तो वैश्वानरसमद्युतिः ॥ १३

शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः ।
ततः कतिपयाहस्सु जरत्कारुर्महातपाः ॥ १४

---

1. क-ख-ग—स्पर्ध्यास्तरणसंस्तृतम्

उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् ।
तस्मिंश्च सुप्ते विप्रेन्द्रे सविताऽस्तमियाद्गिरिम् ॥ १५

अह्नः परिक्षये ब्रह्मंस् ततः साऽचिन्तयत्तदा ।
वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी ॥ १६

किं नु मे सुकृतं भूयाद् भर्तुरुत्थापनेन वा ।
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् ॥ १७

कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः ।
धर्मलोपो गरीयान्वै स्यादित्यत्राकरोन्मनः ॥ १८

उत्थापयिष्ये यद्येनं ध्रुवं कोपो भविष्यति ।
धर्मलोपो भवेदस्य सन्ध्यातिक्रमणे ध्रुवम् ॥ १९

इति निश्चित्य मनसा जरत्कारुर्भुजंगमा ।
तमृषिं दीप्ततपसं शयानमनलोपमम् ॥ २०

उवाचेदं वचश्श्लक्ष्णं ततो मधुरभाषिणी ।
उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति ॥ २१

सन्ध्यामुपास्स्व भगवन् अपस्स्पृष्ट्वा महाव्रतः ।
प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ॥ २२

सन्ध्या प्रवर्तते चेयं पश्चिमस्यां दिशि प्रभो । २२॥

---

1. क-ख-ग—नास्या  2. क-ख-ग—मार्या

एवमुक्तस्स भगवान् जरत्कारुर्महातपाः ।
भार्यां प्रस्फुरमाणोष्ठ इदं वचनमब्रवीत् ॥　　२३॥

जरत्कारुः—

अवमानः प्रयुक्तोऽयं त्वया मम भुजंगमे ।
समीपे ते न वत्स्यामि गमिष्यामि यथागतम् ॥　　२४॥

न हि तेजोऽस्ति वामोरु मयि सुप्ते विभावसोः ।
अस्तं गन्तुं यथाकालम् इति मे हृदि वर्तते ॥　　२५॥

न चाप्यवमतस्येह वस्तुं रोचेत कस्य चित् ।
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा ॥　　२६॥

सूतः—

एवमुक्ता जरत्कारुर् भर्त्रा हृदयकम्पनम् ।
अब्रवीद्भगिनी तत्र वासुकेस्तु निवेशने ॥　　२७॥

जरत्कारुः—

नावमानात्कृतवती तवाहं प्रतिबोधनम् ।
धर्मलोपो न ते विप्र स्यादित्येवं कृतं मया ॥　　२८॥

सूतः—

उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः ।
ऋषिः कोपसमाविष्टस् त्यक्तुकामो भुजंगमाम् ॥　　२९॥

जरत्कारुः—

न मे वागनृतं प्राह गमिष्येऽहं भुजंगमे ।

समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ॥ ३०॥
सुखमभ्युषितं भद्रे ब्रूयास्त्वं भ्रातरं शुभे ॥ ३१
इतो मयि गते भीरु गतस्स भगवानिति ।
त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ॥ ३२

सूतः—

इत्युक्ता साऽनवद्याङ्गी प्रत्युवाच मुनिं तदा ।
जरत्कारुं जरत्कारुश् चिन्ताशोकपरायणा ॥ ३३
बाष्पगद्गदया वाचा मुखेन परिशुष्यता ।
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः ॥ ३४
धैर्यमालम्ब्य वामोरूर् हृदयेन प्रवेपता ॥ ३४॥

जरत्कारु —

न मामर्हसि धर्मज्ञ परित्यक्तुमनागसीम् ।
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ॥ ३५॥
प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ।
अपत्यार्थं तु मे भ्रात्रा ज्ञातीनां हितकाम्यया ॥ ३६॥
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ॥ ३७
मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ।
अपत्यमीप्सितं त्वत्तस् तच्च तावन्न दृश्यते ॥ ३८
त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शुभं भवेत् ॥ ३८॥

संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ।
ज्ञातीनां सुखमिच्छन्ती भगवंस्त्वां प्रसादये ॥ ३९॥

इममव्यक्तरूपं मे गर्भमाधाय सत्तम ।
कथं त्यक्त्वा महाभाग गन्तुमिच्छस्यनागसीम् ॥ ४०॥

सूतः—
एवमुक्तस्तु स मुनिर् भार्यां वचनमब्रवीत् ।
यद्युक्तमनुरूपं च जरत्कारुं तपोधनः ॥ ४१॥

अस्त्येष गर्भः सुभगे तव वैश्वानरोपमः ।
ऋषिः परमधर्मात्मा वेदवेदाङ्गपारगः ॥ ४२॥

एवमुक्त्वा स धर्मात्मा जरत्कारुर्महामुनिः ।
उग्राय तपसे भूयो जगाम कृतनिश्चयः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ५ ॥ आस्तीकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः ।]

## ॥ चत्वारिंशोऽध्यायः ॥

अस्तीकोत्पत्तिः ॥ १ ॥

सूतः—
गतमात्रं तु भर्तारं जरत्कारुरवेदयत् ।
भ्रातुस्त्वरितमागत्य याथातथ्यं तपोधन ॥ १

ततस्स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियम् ।
उवाच भगिनीं दीनां तदा दीनतरस्स्वयम् ॥ २

वासुकिः—

जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत् ।
पन्नगानां हितार्थाय पुत्रस्स्यात्ते ततो यदि ॥ ३

स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्यवान् ।
एवं पितामहः पूर्वम् उक्तवान्मां सुरैस्सह ॥ ४

अप्यस्ति गर्भस्सुभगे तस्मात्ते मुनिसत्तमात् ।
न चेच्छाम्यफलं तस्य दारकर्म मनीषिणः ॥ ५

कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम् ।
किंतु कार्यगरीयस्त्वात् तस्मादहमचूचुदम् ॥ ६

दुर्वारतां विदित्वा च भर्तुस्ते नियतात्मनः ।
नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ॥ ७

आचक्ष्व भद्रे सर्वं त्वं भर्तुश्चैव विचेष्टितम् ।
शल्यमुद्धर मे घोरम् इदं हृदि चिरस्थितम् ॥ ८

सूतः—

जरत्कारुस्ततो वाक्यम् इत्युक्ता प्रत्यभाषत ।
आश्वासयन्ती सन्तप्तं वासुकिं पन्नगेश्वरम् ॥ ९

जरत्कारुः—

पृष्टो मयाऽपत्यहेतोः स महात्मा महातपाः ।

अस्तीत्युदरमुद्दिश्य ममेदं गतवांश्च सः ॥ १०
स्वैरेष्वपि न तेनाहं स्मरामि वितथं क्वचित् ।
उक्तपूर्वं कुतो वाक्यं सांपराये स वक्ष्यति ॥ ११
न संतापस्त्वया कार्यः कामं प्रति भुजंगमे ।
उत्पत्स्यति हि ते पुत्रो ज्वलनार्कसमद्युतिः ॥ १२
इत्युक्त्वा स हि मां भ्रातर् गतो भर्ता तपोवनम् ।
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् ॥ १३

सूतः—

एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा ।
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत ॥ १४
सान्त्वमानार्थदानैश्च पूजया चानुरूपया ।
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ १५
ततस्स ववृधे गर्भो महातेजा रविप्रभः ।
यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि ॥ १६
यथाकालं तथा ब्रह्मन् प्रजज्ञे भुजगस्वसा ।
कुमारं देवगर्भाभं पितृमातृभयापहम् ॥ १७
ववृधे स च तत्रैव नागराजनिवेशने ।
वेदांश्चाधिजगे साङ्गान् भार्गवच्च्यवनात्मजात् ॥ १८
चरितव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः ।

नाम चास्याभवत्ख्यातं लोकेष्वस्तीक इत्युत ॥ १९

अस्तीत्युक्त्वा गतो यस्मात् पिता गर्भस्थमेव तम् ।
एवं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् ॥ २०

स बाल एव तत्रस्थश् चरन्नमितबुद्धिमान् ।
गृहे पन्नगराजस्य प्रयत्नात्पर्य [1]रक्ष्यत ॥ २१

भगवानिव देवेशः शूलपाणिः पिनाकधृक् ।
विवर्धमानः सर्वांस्तान् पन्नगानभ्यहर्षयत् ॥ २२

इति श्रीमहाभारते शतसहास्रिकायां संहितायां वैयासिक्यां आदिपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ ५ ॥ आस्तीकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[अस्मिन्नध्याये २२ श्लोकाः ।]

---

## ॥ एकचत्वारिंशोऽध्यायः ॥

मन्त्रिभिर्जनमेजयस्य परीक्षिच्चरित्रकथनम् ॥ १ ॥

---

2 शौनकः—

यदपृच्छत्ततो राजा मन्त्रिणो जनमेजयः ।
पितुस्स्वर्गगतिं तन्मे विस्तरेण पुनर्वद ॥ १

---

1. क-ख-ग—पर्यरक्षत
2. क-ख-ग—सूतस्य वचनं श्रुत्वा शौनक प्राह विस्मितः [अधिकः पाठः]

सूतः—

शृणु ब्रह्मन्यथापृष्टा मन्त्रिणो नृपतेस्तदा ।
आख्यातवन्तस्ते सर्वे निधनं तत्परीक्षितः ॥ २

जनमेजयः—

जानन्ति तु भवन्तस्तद् यथावृत्तं पितुर्मम ।
आसीद्यथा स निधनं गतः काले महायशाः ॥ ३

श्रुत्वा भवत्सकाशात्तु पितुर्वृत्तमशेषतः ।
कल्याणं प्रतिपत्स्यामि विपरीतं न जातु चित् ॥ ४

सूतः—

मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन [1]महात्मना ।
सर्वधर्मविदः प्राज्ञा राजानं जनमेजयम् ॥ ५

मन्त्रिणः—

धर्मज्ञश्च प्रजापालो महात्मा च पिता तव ।
आसीदिह यथावृत्तः स महात्मा शृणुष्व तत् ॥ ६

चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत ।
धर्मतो धर्मविद्राजा धर्मो विग्रहवानिव ॥ ७

[2]अरक्षत्पृथिवीं देवीं श्रीमानतुलविक्रमः ।
द्वेष्टारस्तस्य नैवासन् स च न द्वेष्टि कंचन ॥ ८

समस्सर्वेषु भूतेषु प्रजापतिरिवाभवत् ।

---

1. क-ख-ग—ससादरम् 2. क-ख-ग—अरक्षत्प्रथितः पृथ्वीं

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु ॥ ९

स्थितास्सुमनसो राजंस् तेन राज्ञा स्वधिष्ठिताः ।
विधवानाथकृपणान् विकलांश्च बभार सः ॥ १०

सुदर्शः सर्वभूतानाम् आसीत्सोम इवापरः ।
तुष्टपुष्टजनश्श्रीमान् सत्यवाग्दृढविक्रमः ॥ ११

धनुर्वेदे च शिष्योऽभून् नृपश्शारद्वतस्य सः ।
जितेन्द्रियश्चात्मवांश्च मेधावी वृद्धसेविता ॥ १२
षड्वर्गजिन्महाबुद्धिर् नीतिकर्मविदुत्तमः ।

गोविन्दस्य प्रियश्चासीत् पिता ते जनमेजय ॥ १३
लोकस्य चैव सर्वस्य प्रिय आसीन्महायशाः ॥ १३॥
परिक्षीणेषु कुरुषु उत्तरायामजायत ।

परीक्षिदभवत्तेन सौभद्रस्यात्मजो बली ॥ १४॥
राजा धर्मार्थकुशलो युक्तस्सर्वगुणैर्नृपः ।

[1]प्रजा इमास्तव पिता षष्टिवर्षाण्यपालयत् ॥ १५॥
ततो दिष्टान्तमापन्नः सर्पेणानतिवर्तिनम् ॥ १६

ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान् ।

---

1. क-ख-ग—जितेन्द्रियश्चात्मवांश्च मेधावी वृद्धसंमतः ।
षड्वर्गजिन्महाप्राज्ञो नीतिधर्मविदुत्तमः ॥
[अधिकः पाठः]

इदं वर्षसहस्राय राज्यं कलियुगे गतम् ॥ १७

बाल एवाभिजातोऽसि सर्वभूतानु[1]कम्पनः ॥ १७॥

जनमेजयः—

नास्मिन्कुले जातु बभूव राजा
यो न प्रजानां प्रियकृत्प्रियश्च ।
विशेषतः प्रेक्ष्य [2]महीपतीनां
वृत्तं महावृत्तपरायणानाम् ॥ १८॥

कथं निधनमापन्नः पिता मम तथाविधः ।
आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः ॥ १९॥

सूतः—

एवं संचोदिता राज्ञा मन्त्रिणस्ते नराधिपम् ।
ऊचुस्सर्वे यथावृत्तं राज्ञः प्रियहिते रताः ॥ २०॥

मन्त्रिण —

बभूव मृगयाशीलस् तव राजन्पिता सदा ॥ २१

यथा पाण्डुर्महाभागो धनुर्धरवरो युधि ॥ २१॥

अस्मास्वासज्य सर्वाणि राजकार्याण्यशेषतः ।
स कदाचिद्वनगतो मृगं विव्याथ पत्रिणा ॥ २२॥

विद्ध्वा चान्वचरत्तूर्णं स मृगं गहने वने ।
पदातिर्बद्धनिस्त्रिंशः शरपाणिर्धनुर्धरः ॥ २३॥

---

1. क-ख-ग—पालकः ॥　　2. क-ख-ग—पितामहानां

न चाससाद गहने मृगं नष्टं पिता तव ।
परिश्रान्तो वयस्थश्च षष्टिवर्षो जरान्वितः ॥ २४॥
क्षुधितस्स महारण्ये ददर्श मुनिमन्तिके ॥ २५

स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रतान्वितम् ।
न च किंचिदुवाचेदं स मुनिः पृच्छितोऽपि सन् ॥ २६

ततो राजा क्षुच्छ्रमार्तस् तं मुनिं स्थाणुवत्स्थितम् ।
मौनव्रतधरं शान्तं सद्यो मन्युवशं गतः ॥ २७

न बुबोध हितं राजा मौनव्रतधरं मुनिम् ।
स तं मन्युसमाविष्टो धर्षयामास ते पिता ॥ २८

मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात् ।
तस्य शुद्धात्मनः प्रादात् स्कन्धे भारतसत्तम ॥ २९

तं नोवाच स मेधावी राजानं साध्वसाधु वा ।
तस्थौ तथैव [1]नाक्रुध्यत् सर्पं स्कन्धेन धारयन् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ ५ ॥ आस्तीकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[अस्मिन्नध्याये ३० श्लोकाः ।]

---

1. क-ख-ग—चाक्रुध्यत्

## ॥ द्विचत्वारिंशोऽध्यायः ॥

परीक्षिन्मन्त्रिसंवाद ॥ १ ॥

मन्त्रिण —

ततस्स राजा राजेन्द्र स्कन्धे तस्य भुजंगमम् ।
मुनेः क्षुत्क्षाम आसज्य स्वपुरं पुनराययौ ॥ १

ऋषेस्तस्य तु पुत्रोऽभूद् [1]भुवि जातो महायशाः ।
शृङ्गी नाम महातेजास् तिग्मवीर्योऽतिकोपनः ॥ २

ब्रह्माणं सोऽप्युपागम्य मुनिः पूजां चकार ह ।
सोऽनुज्ञाय गतस्तस्य शृङ्गी शुश्राव तं तदा ॥ ३

सख्युस्सकाशात्पितरं पित्रा ते धर्षितं तदा ।
मृतं सर्पं तथासक्तं पित्रा ते जनमेजय ॥ ४

वहन्तं कुरुशार्दूल स्कन्धेनानपकारिणम् ।
तपस्विनं महात्मानं तं मुनिप्रवरं नृप ॥ ५

जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुते[2] ।
तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं तदा ॥ ६

शुभाचारं शुभकथं सुस्थिरं तमलोलुपम् ।

1. क-ख-ग—गवि　　2. क-ख-ग—तम्।

अक्षुद्रमनसूयं च वृद्धं मौनव्रते स्थितम् ।
शरण्यं सर्वभूतानां पित्रा [1]विप्रकृतं तव ॥ ७
शशापाथ स तच्छ्रुत्वा पितरं ते रुषान्वितः ।
ऋषेः पुत्रो महातेजा बालोऽपि स्थविरैर्वरः ॥ ८
स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह ।
पितरं तेऽभिसन्धाय तेजसा प्रज्वलन्निव ॥ ९
अनागसि गुरौ यो मे मृतं सर्पमवासृजत् ।
तं नागस्तक्षकः क्रुद्धस् तेजसा सादयिष्यति ॥ १०
सप्तरात्रादितः पापं पश्य मे तपसो बलम् ।
इत्युक्त्वा प्रययौ तत्र पिता यत्राऽस्य सोऽभवत् ॥ ११
दृष्ट्वा च पितरं तस्मै शापं तं प्रत्यवेदयत् ।
स चापि मुनिशार्दूलः प्रेषयामास ते पितुः ॥ १२
शप्तोऽसि मम पुत्रेण यत्तो भव महीपते ।
तक्षकस्त्वां महाराज [2]सप्तरात्रेण धक्ष्यति ॥ १३
श्रुत्वा तु तद्वचो घोरं पिता ते जनमेजय ।
यत्तोऽभवत्परित्रस्तस् तक्षकात्पन्नगोत्तमात् ॥ १४
ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते ।
राज्ञस्समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत ॥ १५

---

1. क-ख-ग—ते विकृतं तथा 2. क-ख-ग—तेजसा सादयिष्यति

तं ददर्शाथ नागेन्द्रस् तक्षकः काश्यपं तदा ।
तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं व्रजन् ॥ १६
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ १६॥

काश्यप·—

यत्र राजा कुरुश्रेष्ठः परीक्षिन्नाम वै द्विज ।
तक्षकेण भुजंगेन धक्ष्यते किल तत्र वै ॥ १७॥
गच्छाम्यहं तं त्वरितः सद्यः कर्तुमपज्वरम् ॥ १८
मयाऽभिमन्त्रितं चापि न सर्पो धर्षयिष्यति ॥ १८॥

तक्षकः—

किमर्थं तं मया दष्टं संजीवयितुमिच्छसि ।
ब्रूहि काममहं तत्ते दद्मि स्वं वेश्म गम्यताम् ॥ १९॥

1मान्त्रिणः—

धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः ॥ २०
तमुवाच महात्मानं वारयन् श्लक्ष्णया गिरा ।
यावद्धनं प्रार्थयसे राज्ञस्तस्मात्ततोऽधिकम् ॥ २१

---

1. क-ख-ग—इत्युक्त्वा तक्षकस्तत्र सोऽदशद्वै वनस्पतिम् ।
स दष्टमात्रो नागेन भस्मीभूतोऽभवन्नगः ॥
काश्यपस्तु ततो राजन् संजीवयत तं नगम् ।
ततस्तं लोभयामास कामं ब्रूहीति तक्षकः ॥
ब्रूहि काममहं तेऽद्य दद्मि स्वं वेश्म गम्यताम् ॥
[अधिकः पाठः

गृह्राण मत्त एव त्वं सन्निवर्तस्व चानघ ॥ २१॥
स एवमुक्तो नागेन काश्यपो द्विपदां वरः ।
लब्ध्वा वित्तं निववृते तक्षकात्पन्नगोत्तमात् ॥ २२॥
तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः ॥ २३
तं नृपं नृपतिश्रेष्ठं पितरं धार्मिकं तव ।
प्रासादस्थं क्षणेनैव दग्धवान् विषवह्निना ॥ २४
ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः ।
एवं दृष्टं श्रुतं चापि यथावन्नृपसत्तम ॥ २५
अस्माभिर्निखिलं वृत्तं कथितं तेऽतिदारुणम् ॥ २५॥
श्रुत्वा चैवं नृपश्रेष्ठ पार्थिवस्य पराभवम् ।
अस्य चर्षेरुदङ्कस्य विधत्स्व यदनन्तरम् ॥ २६॥

जनमेजय—

एतत्तु श्रोतुमिच्छामि ह्यटव्यां निर्जने वने ।
संवादं पन्नगेन्द्रस्य काश्यपस्य च यत्तदा ॥ २७॥
केन दृष्टं श्रुतं चापि भवतां श्रोत्रमागतम् ।
श्रुत्वा चाथ विधास्यामि पन्नगान्तकरीं मतिम् ॥ २८॥

मन्त्रिणः—

शृणु राजन्यथाऽस्माकं येनैतत्कथितं पुरा ।
समागतं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि ॥ २९॥

तस्मिन्वने[1]चरः कश्चिदिन्धनार्थाय पार्थिव ।
विचिन्वन्पूर्वमारूढः शुष्कशाखं वनस्पतिम् ॥ ३०॥
अबुध्यमानौ तत्रास्तां वृक्षस्थं पन्नगद्विजौ ।
स तु तेनैव वृक्षेण भस्मीभूतोऽभवत्तदा ॥ ३१॥
द्विजप्रभावाद्राजेन्द्र जीवितस्स वनस्पतिः ।
[2]तेन गत्वा नरश्रेष्ठ नगरेऽस्मिन्निवेदितम् ॥ ३२॥
यथा वृत्तं तु तत्सर्वं तक्षकस्य द्विजस्य च ।
एतत्ते कथितं राजन् यथावृत्तं यथाश्रुतम् ॥ ३३॥
श्रुत्वा च कुरुशार्दूल प्रकुरुष्व यथेप्सितम् ॥ ३४

सूतः—

मन्त्रिणां वचनं श्रुत्वा स राजा जनमेजयः ।
पर्यतप्यत दुःखार्तः प्रत्यपिङ्क्षत्करे करम् ॥ ३५
निश्श्वसन्नुष्णमसकृद् दीर्घं राजीवलोचनः ।
मुमोचाश्रूणि च तदा नेत्राभ्यां प्ररुदन्नृपः ॥ ३६
उवाच च महीपालो दुःखशोकसमन्वितः ॥ ३६॥
श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति ।
निश्चितेयं [3]मतिर्या वै तां निबोधत सत्तमाः ॥ ३७॥
अनन्तरमहं मन्ये तक्षकाय दुरात्मने ।

1. क-ख-ग—नरः
2. क-ख-ग—तेनागत्य
3. क-ख-ग—मम मतिर्यां वै तां मे निबोधत ।

प्रतिकर्तव्यमित्येवं येन मे हिंसितः पिता ॥ ३८॥
ऋषेर्हि शृङ्गेर्वचनं कृत्वा दृष्ट्वा च पार्थिवम् ।
यदि गच्छेदसौ पापो ननु जीवेत्पिता मम ॥ ३९॥
परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः ।
काश्यपस्य प्रयोगेण मन्त्रिणां सुनयेन च ॥ ४०॥
स च वारितवान्मोहात् काश्यपं द्विजसत्तमम् ।
[1]स सञ्जीवयितुं प्राप्तो राजानमपराजितम् ॥ ४१॥
महानतिक्रमो [2]ह्यस्य तक्षकस्य दुरात्मनः ।
[3]काश्यपस्याददाद्द्रव्यं न नृपं जीवयेदिति ॥ ४२॥
उदङ्कस्य प्रियं कुर्वन् आत्मनश्च महत्प्रियम् ।
भवतां चैव सर्वेषां यास्याम्यपचितिं पितुः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ ५ ॥ आस्तीकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[अस्मिन्नध्याये ४३॥ श्लोकाः ।]

---

1. क-ख-ग—संजिजीवयिषुं प्राप्तं
2. क-ख-ग—ह्येप
3. क-ख-ग—द्विजस्य योऽददाद्द्रव्यं मा नृपं

## ॥ त्रिचत्वारिंशोऽध्यायः ॥



सर्पसत्रोपक्रमः ॥ १ ॥ अग्नौ सर्पपतनम् ॥ २ ॥



सूतः—

एवमुक्त्वा ततश्श्रीमान् मन्त्रिभिश्चानुमोदितः ।
आरुरोह प्रतिज्ञां वै सर्पसत्राय पार्थिवः ॥ १

ब्रह्मन् भरतशार्दूलो राजा पारीक्षितस्तदा ।
पुरोहितमथाहूय ऋत्विजो वसुधाधिपः ॥ २
अब्रवीद्वाक्यसंपन्नः [1]संपन्नार्थतरं वचः । २॥

जनमेजय·—

यो मे हिंसितवांस्तातं तक्षकस्स दुरात्मवान् ।
प्रतिकुर्यां यथा तस्य तद्ब्रुवन्तो ब्रुवन्तु मे ॥ ३॥
अपि तत्कर्म विदितं भवतां येन पन्नगम् ।
तक्षकं संप्रदीप्तेऽग्नौ [2]प्रास्येयं सह बान्धवैः ॥ ४॥
यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना ।
तथाऽहमपि तं पापं दग्धुमिच्छामि पन्नगम् ॥ ५॥

ऋत्विजः—

अस्ति राजन् महत् सत्रं तदर्थं देवनिर्मितम् ।

---

1. क-ख-ग—सम्पदर्थकरं 2. क-ख-ग—प्रापयेयं सबान्धवम् ।

सर्पसत्रमिति ख्यातं पुराणैः कथ्यते नृप ॥ ६॥
आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ।
इति पौराणिकाः प्राहुर् अस्माकं चास्ति स क्रतुः ॥ ७॥

सूतः—

एवमुक्तस्स राजेन्द्रो मेने सर्पं हि तक्षकम् ।
हुताशनमुखं दीप्तं प्रविष्टं द्विजसत्तम ॥ ८॥
ततोऽब्रवीद्ब्रह्मविदः कर्मज्ञान् ब्राह्मणांस्तदा ॥ ९

जनमेजयः—

आहरिष्यामि तत्सत्रं संभारास्संभ्रियन्तु मे ॥ ९॥

सूतः—

ततस्त ऋत्विजस्तस्य शास्त्रेण द्विजसत्तम ।
देशं तं प्रापयामासुर् यज्ञायतनकारणात् ॥ १०॥
[1]यथाविज्ञानविद्वांसः सर्वे बुद्धिं परां गताः ॥ ११
ऋद्ध्या परमया युक्तम् इष्टं द्विजगणैर्युतम् ।
प्रभूतधनधान्याढ्यम् ऋत्विग्भिस्सुनिवेदितम् ॥ १२
निर्माय चापि विधिवत् यज्ञायतनमुत्तमम् ।
राजानं दीक्षयामासुः सर्पसत्रा[2]य वै द्विजाः ॥ १३
इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति ।
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा ॥ १४

1. क-ख-ग—यथा यथा यज्ञविदस्सर्वे बुद्ध्या परं गताः ।
2. क-ख-ग—सत्रासये तदा ।

यज्ञस्यायतने तस्मिन् क्रियमाणे वचोऽब्रवीत् ।
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः ॥ १५
इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा ॥ १५॥
यस्मिन्देशे च काले च [1]मापनेयं प्रकीर्तितम् ।
ब्राह्मणं कारणं कृत्वा नायं संस्थाप्यते क्रतुः ॥ १६॥
एतच्छ्रुत्वा च राजा स प्राग्दीक्षाकाल अब्रवीत् ।
क्षत्तारं नेह मे कश्चिद् अज्ञातः प्रविशेदिति ॥ १७॥
ततः कर्म प्रववृधे[2] सर्पसत्रे विधानतः ।
पर्यक्रामंश्च विधिवत् स्वे स्वे कर्मणि याजकाः ॥ १८॥
परिधाय कृष्णवासांसि धूम्रसंरक्तलोचनाः ।
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ॥ १९॥
कम्पयन्ति[3] स्म सर्वेषाम् उरगाणां मनांसि ते ।
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा ॥ २०॥
ततस्सर्पा[4]स्समोपतुः प्रदीप्ते हव्यवाहने ।
विवेष्टमानाः कृपणा आह्वयन्तः परस्परम् ॥ २१॥
विस्फुरन्तश्श्वसन्तश्च वेष्टयन्तस्तथापरे ।
पुच्छैश्चैव शिरोभिश्च चित्रभानुं प्रपेदिरे ॥ २२॥

---

1. क-ख-ग—स्थापनेयं प्रवर्तिता ।
2. क-ख-ग—ते
3. क-ख-ग—न्तश्च
4. क-ख-ग—स्ततस्समापेतुस्समिद्धे

श्वेताः कृष्णाश्च रक्ताश्च स्थविराश्शिशवस्तथा ।
रुवन्तो भैरवं नादं पेतुर्दीप्ते विभावसौ ॥ २३॥

क्रोशो योजनमात्रो हि गोकर्णस्य प्रमाणतः ।
पतन्त्यजस्रं वेगेन चाग्नावग्निमतां वर ॥ २४॥

एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ।
[1]अवशानि विनष्टानि नागानां द्विजसत्तम ॥ २५॥

दर्दुरा इव तत्रान्ये हस्तिहस्त इवापरे ।
मत्ता इव च मातङ्गा महाकाया महाबलाः ॥ २६॥

उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः ।
घोराश्च परिघप्रख्या दन्दशूका महाबलाः ॥ २७॥
प्रपेतुरग्नावुरगा मातृवाग्दण्डपीडिताः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ५ ॥ आस्तीकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

1. क-ख-ग—अग्नावेतानि नष्टानि पन्नगानां द्विजोत्तम ।

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

इन्द्रकृतं तक्षकाश्वासनम् ॥ १ ॥ वासुकेः स्वभगिन्या संवादः ॥२॥

शौनकः—

सर्पसत्रे महाराज्ञः पाण्डवेयस्य धीमतः ।
जनमेजयस्य केन्वासन् ऋत्विजः परमर्षयः ॥ १

के सदस्या बभूवुश्च तस्य सत्रे सुदारुणे ।
विषादजननेऽत्यर्थं पन्नगानां महाभये ॥ २

सर्वं विस्तरतस्तात भवाञ्छंसितुमर्हति ।
सर्पसत्रविधानज्ञा विज्ञेयास्तेऽपि सूतज ॥ ३

सूतः—

अहं ते कथयिष्यामि नामानीह मनीषिणाम् ।
य ऋत्विजस्सदस्याश्च तस्यासन्नृपतेस्तदा ॥ ४

तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः ।
च्यवनस्यान्वये जातः ख्यातो वेदविदां वरः ॥ ५

उद्गाता ब्राह्मणो वृद्धो विद्वान्कौ[1]त्सस्तु जैमिनिः ।
ब्रह्माऽभवच्छार्ङ्गरवोऽथाध्वर्युर्बोधपिङ्गलः ॥ ६

सदस्यश्चाभवद्व्यासः पुत्रशिष्यसमन्वितः ।

1. क-ख-ग—त्सोऽथ

उद्दालकः [1]कामठकः श्वेतकेतुश्च शाण्डिलः ॥ ७
असितो देवलश्चैव नारदः पर्वतस्तथा ।
आत्रेयः [2]कुण्डजठरौ द्विजः किरिकटस्तथा ॥ ८
वात्स्यः श्रुतश्रवा वृद्धस् तपस्स्वाध्यायशीलवान् ।
कहोलो देवशर्मा च मौद्गल्यश्शमठो[3]रगः ॥ ९
एते चान्ये च बहवो ब्राह्मणास्संशितव्रताः ।
सदस्याश्चाभवंस्तत्र सत्रे पारीक्षितस्य ह ॥ १०
जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ ।
अहयः प्रापतंस्तत्र सर्वप्राणिभयावहाः ॥ ११
वसामेदोवहाः कुल्या नागानां संप्रवर्तिताः ।
ववौ गन्धस्तु तुमुलो दह्यतामनिशं तदा ॥ १२
पततां चैव नागानां विष्ठितानां तथाम्बरे ।
अश्रूयतानिशं शब्दो दह्यतां चाग्निना भृशम् ॥ १३
तक्षकस्तु स नागेन्द्रः पुरंदरनिवेशनम् ।
गतश्श्रुत्वैव राजानं दीक्षितं जनमेजयम् ॥ १४
यतस्सर्वं यथावृत्तम् आख्याय भुजगोत्तमः ।
अगच्छच्छरणं भी[4]तो नमस्कृत्वा पुरंदरम् ॥ १५

---

1. क-ख-ग—श्शमधरः श्वेतकेतुश्च पञ्चमः ।
2. क-ख-ग—कण्वजठरो द्विजः कटिघटिस्तथा ।
3. क-ख-ग—हरः
4. क-ख-ग—त आगस्कृत्वा

तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक ।
भयं नागेन्द्र तस्माद्वै सर्पसत्रात् कथं चन ॥ १६

प्रसादितो मया पूर्वं तवार्थाय पितामहः ।
तस्मात्तव भयं नास्ति व्येतु ते मानसो ज्वरः ॥ १७

एवमाश्वासितस्तेन ततस्स भुजगोत्तमः ।
उवास भवने तत्र शक्रस्य मुदितस्सुखी ॥ १८

अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः ।
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ॥ १९

कश्मलं प्राविशद्घोरं वासुकिः पन्नगोत्तमः ।
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ॥ २०

वासुकि —

दह्यन्तेऽङ्गानि मे भद्रे दिशो न प्रतिभान्ति च ।
सीदामीव च संमोहाद् घूर्णतीव च मे मनः ॥ २१

दृष्टिर्भ्रमति मेऽतीव हृदयं दीर्यतीव च ।
पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ ॥ २२

पारीक्षितस्य यज्ञोऽसौ वर्ततेऽस्माज्जिघांसया ।
व्यक्तं मयाऽपि गन्तव्यं पितृराजनिवेशनम् ॥ २३

अयं स कालस्संप्राप्तो यदर्थमसि मे स्वसः ।
जरत्कारोः पुरा दत्ता सा त्राह्यस्मान् सबान्धवान् ॥ २४

अस्तीकः किल यज्ञं तं वर्तमानं भुजङ्गमे ।
प्रतिषेत्स्यति मां पूर्वं स्वयमाह पितामहः ॥ २५

तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतम् ।
ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ ५ ॥ आस्तीकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[अस्मिन्नध्याये २६ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

अस्तीकेन वासुकेराश्वासनं सत्रगमनं च ॥ १ ॥ जनमेजययज्ञ-प्रशंसा च ॥ २ ॥

---

सूतः—

तत आहूय पुत्रं स्वं जरत्कारुर्भुजंगमा ।
वासुकेर्नागराजस्य वचनादिदमब्रवीत् ॥ १

जरत्कारुः—

अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः ।
कालस्स चायं संप्राप्तस् तत्कुरुष्व यथातथम् ॥ २

अस्तीकः—

किंनिमित्तं मम पितुर् दत्ता त्वं मातुलेन मे ।

तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्ताऽस्मि तत्तथा ॥ ३

सूतः—

तत आचष्ट सा तस्मै बान्धवानां हितैषिणी ।
भगिनी नागराजस्य जरत्कारुरविक्लबा ॥ ४

जरत्कारुः—

भुजंगानामशेषाणां माता कद्रूरिति स्मृता ।
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ॥ ५

उच्चैःश्रवस्यश्वराजे [1]यन्मिथ्या कुरुते मम ।
विनतानिमित्तं पणिते दासभावाय पुत्रकाः ॥ ६

जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ।
तत्र पञ्चत्वमापन्नाः पितृलोकं गमिष्यथ ॥ ७

तां च शप्तवतीमेवं साक्षाल्लोकपितामहः ।
एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च ॥ ८

वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ।
अमृते मथिते तात देवाञ्छरणमीयिवान् ॥ ९

सिद्धार्थाश्च सुरास्सर्वे प्राप्यामृतमनुत्तमम् ।
भ्रातरं मे पुरस्कृत्य प्रजापतिमुपागमन् ॥ १०
ते तं प्रसादयामासुः देवास्सर्वे पितामहम् ॥ १०॥

---

1. क-ख-ग—यो मे न कुरुते वच ।

राज्ञा वासुकिना सार्धं स शापो न भवेदिति ॥ ११

देवाः—

वासुकिर्नागराजोऽयं दुःखितो ज्ञातिकारणात् ।
अभिशापस्स मात्रास्य भगवन्न भवेत्तदा ॥ १२

ब्रह्मा—

जरत्कारुर्जरत्कारुं यो भार्यां समवाप्स्यति ।
तत्र जातो द्विजः शापाद् भुजगान्मोक्षयिष्यति ॥ १३

जरत्कारु—

एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगेश्वरः ।
प्रादान्मामरप्रख्य तव पित्रे महात्मने ॥ १४

प्रागेवानागते काले तत्र त्वं मय्यजायथाः ।
अयं स कालस्संप्राप्तो भवान्नस्त्रातुमर्हति ॥ १५

भ्रातरं चैव मे तस्मात् त्रातुमर्हसि पातकात् ।
अमोघं नः कृतं तस्यात् यदहं तव दीयते ॥ १६
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ॥ १६॥

सूतः—

एवमुक्तस्तथेत्युक्त्वा सोऽस्तीको मातरं तदा ।
अब्रवीद्दुःखसंतप्तं वासुकिं जीवयन्निव ॥ १७॥

अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम ।
तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते ॥ १८॥

स्वस्थो भव महाभाग न हि ते विद्यते भयम् ।
प्रयतिष्ये तथा सौम्य यथा श्रेयो भविष्यति ॥ १९॥

न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा ।
तं वै नृपवरं गत्वा दीक्षितं जनमेजयम् ॥ २०॥

वाग्भिर्मङ्गलयुक्ताभिस् तोषयिष्येऽद्य मातुल ।
यथा स यज्ञो नृपतेर् न भविष्यति सत्तम ॥ २१॥

[1]संभावय त्वं नागेन्द्र मयि सर्वं महाद्युते ।
न ते मयि मनो जातु मिथ्या भवितुमर्हति ॥ २२॥

वासुकिः—

अस्तीक परिघूर्णामि हृदयं मे विदीर्यते ।
दिशश्च न प्रजानामि ब्रह्मदण्डनिपीडितः ॥ २३॥

अस्तीक —

न सन्तापस्त्वया कार्यः कथंचित्पन्नगोत्तम ।
प्रदीप्ताग्नेः समुत्पन्नं नाशयिष्यामि ते भयम् ॥ २४॥

ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम् ।
नाशयिष्यामि माऽद्य त्वं भयं कार्षीः कथं चन ॥ २५॥

सूतः—

ततस्सवासुकेर्घोरम् अपनीय मनोज्वरम् ।

---

1. क-ख-ग—स संभावय नागेन्द्र मयि सर्वं महामते ।

आ[1]दाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् ॥ २६॥

जनमेजयस्य तं यज्ञं सर्वैस्समुदितं गुणैः ।
मोक्षाय भुजगेन्द्राणाम् अस्तीको द्विजसत्तमः ॥ २७॥

स गत्वाऽपश्यदस्तीको यज्ञायतनमुत्तमम् ।
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः ॥ २८॥

[2]स तत्र वारितो द्वास्थैर् अतिष्ठाद्द्विजसत्तमः २९

अस्तीकः—

सोमस्य यज्ञो वरुणस्य यज्ञः
प्रजापतेर्यज्ञ आसीत्प्रयागे ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३०

शक्रस्य यज्ञश्शतसङ्ख्य उक्तस्
तथा पुरोस्तुल्यसङ्ख्यं शतं वै ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३१

यमस्य यज्ञो हरिमेधसश्च
यथा यज्ञो रन्तिदेवस्य राज्ञः ।

---

1. क-ख-ग—धाय
2. क-ख-ग—अभितुष्टाव तं यज्ञं प्रवेशार्थी द्विजोत्तमः ।
[अधिकः पाठः]

तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३२
गयस्य यज्ञः [1]शतबिन्दोश्च [2]राज्ञो
यज्ञस्तथा वैश्रवणस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३३
नृगस्य यज्ञस्त्वजमीढस्य राज्ञो
यथा यज्ञो दाशरथेश्च राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३४
दिलीपराज्ञो नहुषस्य राज्ञो
नलस्य राज्ञश्शतबिन्दोश्च राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३५
[3]यज्ञश्श्रुतो यो दिवि देववर्यैर्
युधिष्ठिरस्याजमीढस्य राज्ञः ।

---

1. ख-ग—शशबिन्दोश्च 2. क-ख-ग—यज्ञो
3. क-ख-ग—यज्ञश्श्रुतो दिवि देवेषु राज्ञो
यौधिष्ठिरो हरिश्चन्द्रस्य यज्ञः ।
नलस्य यज्ञस्तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥
[अधिकः पाठः]

तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३६

कृष्णस्य यज्ञस्सत्यवत्यास्सुतस्य
[1]स्वयं स्वकर्म प्रचकार यत्र ।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३७

इमे हि ते सूर्यहुताशवर्चसः
समासते वृत्रहणः क्रतौ यथा ।
[2]नैषां ज्ञेयं विद्यतेऽज्ञातमद्य
दत्तं चैषां न प्रणश्येत् कदाचित् ॥ ३८

ऋत्विक्समो नास्ति लोकेषु चैव
द्वैपायनेनेति विनिश्चितं मे ।
अथास्य शिष्या क्षिति[3]मासते ते
य ऋत्विजः कर्मसु स्वेषु दक्षाः ॥ ३९

विभावसुश्चित्रभानुर्महात्मा
हिरण्यरेता विश्वभुक्कृष्णवर्त्मा ।

---

1. क-ख-ग—यथा यज्ञो भारतस्य ययातेः।
2. क-ख-ग—नैषां ज्ञानं विद्यतेऽज्ञातमन्यद्
दत्तं चैभ्यो न प्रणश्येत् कथं चित् ।
3. क-ख-ग—माचरन्ति सर्वर्त्विजः कर्मसु ये सुदक्षाः ॥

प्रदक्षिणावर्तशिखः प्रदीप्तो
　हव्यं तवेदं हुतभुग्भुनक्ति ॥　४०
नेह त्वदन्यो विद्यते जीवलोके
　समो नृपः पालयिता प्रजानाम् ।
धृत्या च ते प्रीतमनास्सदाऽहं
　त्वं वा राजा धर्मराजो यमो वा ॥　४१
शक्रस्साक्षाद्वज्रपाणिर्यथेह
　त्राता लोकेऽस्मिंस्त्वं तथैव प्रजानाम् ।
अतस्त्वं नाथः पुरुषेन्द्रेह लोके
　न च त्वदन्यो गृहपतिरस्ति यज्ञे ॥　४२
खट्वाङ्गनाभागदिलीपकल्प !
　ययातिमान्धातृसमप्रभाव ! ।
आदित्यतेजःप्रतिमानतेजा
　भीष्मो यथा राजसि सुव्रतत्वे ॥　४३
वाल्मीकिवत्ते निभृतं च धैर्यं
　वसिष्ठवत्ते नियतश्च कोपः ।
प्रभुत्वमिन्द्रेण समं मतं मे
　द्युतिश्च नारायणवद्विभाति ॥　४४
यमो यथा धर्मविनिश्चयज्ञः
　कृष्णो यथा सर्वगुणोपपन्नः ।

श्रियो निकेतोऽसि तथा वसूनां
निधानभूतोऽसि तथा क्रतूनाम् ॥ ४५
दम्भोद्भवेनासि समो बलेन
रामो यथा शस्त्रविदस्त्रविच्च ।
[1]रुक्मद्रुमाभ्यामसि तुल्यतेजा
दुष्प्रेक्षणीयोऽसि भगीरथो यथा ॥ ४६

सूतः—
एवं स्तुतास्सर्व एव प्रसन्ना
राजा सदस्या ऋत्विजो हव्यवाहः ।
तेषां दृष्ट्वा भावितानीङ्गितानि
प्रोवाच राजा जनमेजयोऽथ ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ५ ॥ आस्तीकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[अस्मिन्नध्याये ४७ श्लोकाः]

## ॥ षट्चत्वारिंशोऽध्यायः ॥

अस्तीकस्य यज्ञसमाप्तिवरयाचनम् ॥ १ ॥

जनमेजयः—
बालो वाक्यं स्थविर इव प्रभाषते
नायं बालस्स्थविरो धर्मतो मे ।

1. क-ख-ग—और्वाग्निजाभ्या

इच्छाम्यहं वरमस्मै प्रदातुं
तन्मे विप्राः प्रवदध्वं समेताः ॥ १

सभासदः—

बालो विप्रो मान्य एवेह राज्ञा
यश्चाविद्वान् यश्च विद्वान् यथावत् ॥ १॥

प्रसादयैनं त्वमतो नरेन्द्र
द्विजातिवर्यं सकलार्थसिद्धये ।
सर्वान्कामांस्त्वत्त एवार्हतेऽद्य
यथा च नस्तक्षक एति शीघ्रम् ॥ २॥

सूतः—

व्याहर्तुकामे वरदे नृपे द्विजं
वरं वृणीष्वेति तमभ्युवाच ।
होता वाचा नातिहृष्टान्तरात्मा
कर्मण्यस्मिंस्तक्षको नैति तावत् ॥ ३॥

जनमेजयः—

यथा चेदं कर्म समाप्यते मे
यथा च नस्तक्षक एति शीघ्रम् ।
तथा भवन्तः प्रयतन्तु सर्वे
परं शक्त्या स हि मे विद्विषाणः ॥ ४॥

ऋत्विज.—

यथा शास्त्राणि नः प्राहुर् निमित्तानि तथैव च ।
स इन्द्रभवने राजंस् तक्षको भयपीडितः ॥ ५॥

[1]यथा सूतो लोहिताक्षो महात्मा
पौराणिको वेदितवान् पुरस्तात् ।
स राजानं प्राह पृष्टस्तदानीं
यथाहुर्विप्रास्तद्वदेतन्नरेन्द्र ॥ ६॥

सूतः—

[2]पुराणमागम्य ततो ब्रवीम्यहं
दत्तं तस्मै वरमिन्द्रेण राजन् ।
वसेह त्वं मत्सकाशे सुगुप्तो
न पावकस्त्वां प्रदहिष्यतीति ॥ ७॥

सूतः—

एतच्छ्रुत्वा दीक्षितस्तप्यमान
आस्ते होतारं चोदयन् कर्मकाले ।
[3]होता च यत्तस्स जुहाव मन्त्रैर्
यथाऽमरेन्द्रस्स्वयमेवाजगाम ॥ ८॥

---

1. क-ख-ग—आस्ते विषधरो नागो निहन्ता जनकस्य ते ।
[अधिकः पाठः]

2. अ—पौराणमागम्य ततो ब्रवीम

3. क-ख-ग—इन्द्रेण सार्धं तक्षकं पातयध्वं
विभावसोर्न तु मुच्येत नागः । [अधिकः पाठः]

आयातु चेन्द्रोऽपि सतक्षकः पतेद्
विभावसौ नागराजेन तूर्णम् ।
जम्भस्य हन्तेति जुहाव होता
तदा जगामाहिदत्ताभयः प्रभुः ॥ ९॥

विमानमारुह्य महानुभावः
सर्वैर्देवैः परिसंस्तूयमानः ।
बलाहकैश्चाप्यनुगम्यमानो
विद्याधरैरप्सरसां गणैश्च ॥ १०॥

[1]तस्योत्तरीये निहितस्स नागो
भयोद्विग्नश्शर्म नैवाभ्यगच्छत् ।
ततो राजा मन्त्रविदोऽब्रवीत्पुनः
क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन् ॥ ११॥

जनमेजयः—

इन्द्रस्य भवने नागो यदि विप्राः! स तक्षकः ।
तमिन्द्रेणैव सहितं पातयध्वं विभावसौ ॥ १२॥

न त्यजेद्यदिदं चेन्द्रः स नागं तक्षकं तथा ॥ १३

सूतः—

जनमेजयेन राज्ञा तु चोदितस्तक्षकं प्रति ।

---

1. क-ख-ग—नागस्य नाशो मम चैव नाशो
भविष्यतीत्येव विचिन्त्यमानः ।

[अधिकः पाठः]

होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा ॥ १४

हूयमाने तथा चैव तक्षकस्सपुरन्दरः ।
आकाशे ददृशे तत्र क्षणेन व्यथितस्तदा ॥ १५

पुरन्दरस्तु तं यज्ञं दृष्ट्वा तु भयमाविशत् ।
हित्वा तु तक्षकं नागं स्वमेव भवनं ययौ ॥ १६

इन्द्रे गते तु नागेन्द्रस् तक्षको भयमोहितः ।
मन्त्रशक्त्या तु सप्तार्चिस् समीपमवशोऽगमत् ॥ १७
तं दृष्ट्वा ऋत्विजस्तत्र वचनं चेदमब्रुवन् ॥ १७॥

ऋत्विजः—

अयमायाति वै तूर्णं तक्षकस्ते वशं गतः ।
श्रूयतेऽस्य महान्नादो [1]कुर्वतो भैरवं रवम् ॥ १८॥

नूनं मुक्तो वज्रभृता स नागो
[2]ततस्त्रस्तो मन्त्रवित्रस्तगात्रः ।
आघूर्णमानो ह समभ्युपैति
तीव्रान्निश्वासान्निश्वसन्पन्नगेन्द्रः ॥ १९॥

वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो ।
अस्मै च द्विजमुख्याय वरं त्वं दातुमर्हसि ॥ २०॥

---

1 क-ख-ग—रुवतो भैरवं महत् ।

2. क-ख-ग—भ्रष्टश्चांगान्मन्त्रविस्त्रस्तकायः ।

राजा—

बालाभिरूपस्य तवाप्रमेय !
वरं प्रयच्छामि यथानुरूपम् ।
वृणीष्व यत्तेऽभिमतं हृदिस्थं
तत्ते प्रदास्याम्यपि चेददेयम् ॥ २१॥

सूतः—

पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि ।
इदमन्तरमित्येवं तदास्तीकोऽभ्यभाषत ॥ २२॥

अस्तीकः—

वरं ददासि चेन्मह्यं वृणोमि जनमेजय ।
सत्रं ते विरमत्वेतन् न पतेयुरिहोरगाः ॥ २३॥

सूतः—

एवमुक्तस्तदा राजा ब्रह्मन्पारीक्षितस्तदा ।
नातिहृष्टमना वाक्यम् अस्तीकमिदमब्रवीत् ॥ २४॥

सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे द्विज ।
तत्ते दद्यां वरं ब्रह्मन् न निवर्तेत्क्रतुर्मम ॥ २५॥

अस्तीकः—

सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहम् ।
सत्रं ते विरमत्वेतत् स्वस्ति मातुः कुलस्य नः ॥ २६॥

सूतः—

अस्तीकेनैवमुक्तस्तु राजा पारीक्षितस्तदा ।
पुनः पुनरुवाचेदम् अस्तीकं वदतां वरम् ॥ २७॥

अन्यं वरय भद्रं ते वरं द्विजवरोत्तम ।
[1]नायाचदयमप्यन्यद् वरं स भृगुनन्दन ॥ २८॥

ततो वेदविदस्तस्य सदस्यास्सर्वं एव ते ।
राजानमूचुस्सहिता लभतां ब्राह्मणो वरम् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ ५ ॥ आस्तीकपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

[अस्मिन्नध्याये २९॥ श्लोकाः]

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

---

सर्पसत्रे हतानां नागानां नामकथनम् ॥ १ ॥

---

शौनकः—

ये सर्पास्सर्पसत्रेऽस्मिन् पतिता हव्यवाहने ।
तेषां नामानि सर्वेषां श्रोतुमिच्छामि सूतज ॥ १

---

1. क-ख-ग—अयाचत न चाप्यन्यद्वरं स भृगुनन्दन ।

सूतः—

सहस्राणि बहून्यस्मिन् प्रयुतान्यर्बुदानि च ।
न शक्यं परिसंख्यातुं बहुत्वाद्वेदवित्तम ॥ २

यथास्मृति तु नामानि पन्नगानां निबोध मे ।
उच्यमानानि मुख्यानां हुतानां जातवेदसि ॥ ३

वासुकेः कुलजांस्तावत् प्राधान्येन निबोध मे ।
नीला रक्तास्सिता घोरा महाकाया विषोल्बणाः ॥ ४

कोटिको नाम संपूर्णः [1]सदयालोभलीढकः ।
पिच्छपः कौणपश्शङ्कः कोणवेगः प्रकालितः ॥ ५

हिरण्यबाहश्शरणस् तक्षकः कालदन्तकः ।
एते वासुकिजा नागाः प्रविष्टा हव्यवाहनम् ॥ ६

तक्षकस्य कुले तावत् प्रवक्ष्यामि निबोध तान् ।
पुच्छण्वको मण्डलिको पिण्डभेत्ता च हेणकः ॥ ७

[2]उच्छिखस्सुरभारङ्गो वल्लभोऽथाबिराहणः ।
सिलस्थालकणो मूकः सुकुमारः प्रवेपनः ॥ ८

मुद्गरश्शशरोमा च समरो वेगवान् हरः ।
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ॥ ९

---

1. क-ख-ग—सदवालो हलीसकः ।
2. क-ख-ग—उच्छिकस्सुरभो रङ्गो वल्लभोऽथ विराहणः ।

पारावतः पारियात्रः पाण्डरो हरिणः कृशः ।
विहङ्गश्शरभो मोदः प्रमोदस्संहताशनः ॥ १०
ऐरावतकुलादेते पतिता हव्यवाहनम् ।
कौरव्यकुलजान्नागान् श्रृणु मे द्विजसत्तम ॥ ११
जटिलः कुण्डलः कुण्डो वेणिग्रन्थः कुमारकः ।
बाहुकश्शृङ्गयष्टिश्च धूर्तकः पोतपोतकौ ॥ १२
धृतराष्ट्रकुले जातान् श्रृणु नागान् यथातथम् ।
दन्दशूकान् महाकायान् वातवेगान् विषोल्बणान् ॥ १३
शङ्कुकर्णः पिङ्गलकः कुठारमुखसेवकौ ।
पूर्णाङ्गदः पूर्णमुखः प्रहस्तश्शकुनिर्हरिः ॥ १४
अमोथकः कामठकः खनसो मानसो नटः ।
भैरवो मन्त्रवेगश्च पिङ्गलश्चोडुपारगः ॥ १५
ऋषभो वेगवान्नाथः पिण्डारकमहाहनू ।
रक्ताङ्गस्सर्वसारङ्गस् समृद्धपटलाक्षकौ ॥ १६
वलाहको वारणकस् सुमित्रश्चित्रवेदितः ।
पराशकस्तरुणको मणिस्स्कन्धस्तथाऽऽरुणः ॥ १७
इति नागा मया ब्रह्मन् कीर्तिताः कीर्तिवर्धनाः ॥ १७॥
प्राधान्येन बहुत्वात्तु सर्वे ते परिकीर्तिताः ॥ १८
एतेषां पुत्रपौत्राश्च प्रसवस्य च सन्ततिः ।

न शक्याः परिसंख्यातुं ये दीप्तं पावकं गताः ॥ १९

सप्तशीर्षा द्विशीर्षाश्च पञ्चशीर्षास्तथापरे ।
दशशीर्षाश्शतशीर्षास् तथान्ये बहुशीर्षकाः ॥ २०

कालानलविषा घोरा हुताशनसमार्चिषः ।
महाकाया महावीर्याश् शैलशृङ्गसमुच्छ्रयाः ॥ २१

योजनायामविस्तारा द्वियोजनसमायताः ।
कामरूपाः कामबला दीप्तानलविषोल्बणाः ॥ २२

दग्धास्तत्र महासत्रे ब्रह्मदण्डेन पीडिताः ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ ५ ॥ आस्तीकपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[अस्मिन्नध्याये २२॥ श्लोकाः]

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

यज्ञसमाप्तिः ॥ १ ॥ अस्तीकस्य सर्पेभ्यो वरलाभश्च ॥ २ ॥

---

सूतः—

इदमत्यद्भुतं चान्यदस्तीकस्य च शुश्रुमः ।
तथा वरैश्छन्द्यमानो राज्ञा पारीक्षितेन च ॥ १

इन्द्रहस्ताच्च्युतो नागस् स ख एव व्यवस्थितः ।
ततश्चिन्तापरो राजा बभूव जनमेजयः ॥ २

हूयमाने भृशं दीप्ते विधिवत्पावके तदा ।
[1]नष्टसंज्ञोऽभवन्नागस् तक्षको भयपीडितः ॥ ३

शौनक —

किं सूत तेषां विप्राणां मन्त्रग्रामो महात्मनाम् ।
[2]न प्रत्यपद्यताग्नौ यन् न पपात स तक्षकः ॥ ४

सूत —

तमिन्द्रहस्ताद्विस्रस्तं विसंज्ञं पन्नगोत्तमम् ।
अस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत् ॥ ५

वितस्थे सोऽन्तरिक्षे च हृदयेन विदूयता ।
[3]यथा तिष्ठेति वै कश्चिन् नावगच्छेत्तथान्तरम् ॥ ६

ततो राजाऽब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम् ।
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ॥ ७

समाप्यतामिदं कर्म पन्नगास्सन्त्वनामयाः ।
प्रीयतामयमस्तीकस् सत्यं मम वचोऽस्तु तत् ॥ ८

ततो हलहलाशब्दः प्रीतिजस्समवर्धत ।
अस्तीकस्य वरे दत्ते तथैवोपरराम च ॥ ९

---

1. क-ख-ग—न स्म संप्राप तद्वह्नौ तक्षको
2. क-ख-ग—न प्रत्यभाष्यतोऽग्नौ
3. क-ख-ग—यदा तिष्ठेति चैवोक्तं तथा तस्थौ नभोऽन्तरे ।

स यज्ञः पाण्डवेयस्य राज्ञः पारीक्षितस्य ह ॥ ९॥

समापिते ततस्सत्रे विधिवद्विधिदर्शिभिः ।
प्रीतिमानभवद्राजा भारतो जनमेजयः ॥ १०॥
ऋत्विग्भ्यस्स सदस्येभ्यो ये तत्रासन्समागताः ।
तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः ॥ ११॥

लोहिताक्षाय सूताय तथा स्थपतये विभुः ॥ १२

येनोक्तं तत्र सत्राग्रे यज्ञस्य विनिवर्तनम् ।
निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु ॥ १३

ततश्चकारावभृथं विधिदृष्टेन कर्मणा ।
अस्तीकं प्रेषयामास [1]गृहानेव सुसत्कृतम् ॥ १४

राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणम् ॥ १४॥
पुनरागमनं कार्यम् इति चैनं वचोऽब्रवीत् ।
भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ ॥ १५॥

तथेत्युक्त्वा प्रदुद्राव स चास्तीको मुदा युतः ।
कृत्वा स्वकार्यमतुलं तोषयित्वा च पार्थिवम् ॥ १६॥

स गत्वा परमप्रीतो मातरं मातुलं च तम् ।
अभिगम्योपसंगृह्य यथावृत्तं न्यवेदयत् ॥ १७॥

---

1. क-ख-ग—विधाय वसुसत्कृतम्

एतच्छ्रुत्वा प्रीयमाणास्समेता
ये तत्रासन् पन्नगा वीतमोहाः ।
[1]अस्तीकं ते प्रीतिमन्तो बभूवुर्
आहुश्चैनं वरमिष्टं वृणीष्व ॥ १८॥

भूयोभूयस्सर्वतस्तेऽब्रुवंस्तं
किं ते प्रियं करवामाद्य विद्वन् ।
प्रीता वयं मोक्षिताश्चैव सर्वे
कामं किं ते करवामाद्य वत्स ॥ १९॥

अस्तीकः—

सायं प्रातस्सुप्रस[2]न्नात्मरूपो
लोके विप्रो मानवश्चेतरो वा ।
धर्माख्यानं ये वदेयुर्ममेदं
तेषां युष्मन्नैव किंचिद्भयं स्यात् ॥ २०॥

सूतः—

तैश्चाप्युक्तो भागिनेयः प्रसन्नैर्
एतत्सत्यं वचनं ते चराम ।
प्रीत्या युक्ता ईप्सितं सर्वतस्ते
कर्तारस्स्म प्रवणा भागिनेय ॥ २१॥

---

1. क-ख-ग—तेऽस्तीके च
2. क-ख-ग—न्नाः कुरूपाः, लोके विप्रेन्द्रा मानवाश्चेतरे च ।

जरत्कारोर्जरत्कावां समुत्पन्नो महायशाः ।
अस्तीकस्सत्यसन्धो मां पन्नगेभ्योऽभिरक्षतु ॥ २२॥

[1]अस्तीकं चार्तिमन्तं च सुनीथं चापि यस्स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ॥ २३॥

इत्येवं नागराजोऽथ सर्पाणां मध्यगस्तदा ।
उक्त्वा सहैव तैस्सर्पैस् स्वमेव भवनं ययौ ॥ २४॥

मोक्षयित्वा स भगवान् सर्पसत्राद्भुजङ्गमान् ।
जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान् ॥ २५॥

इत्याख्यानं मयाऽऽस्तीकं यथावत्तव कीर्तितम् ।
यत्कीर्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित् ॥ २६॥

श्रुत्वेदं धर्ममाख्यानम् आस्तीकं पुण्यवर्धनम् ।
अस्तीकस्य कवेर्विप्र! श्रीमच्चरितमादितः ॥ २७॥

[2]सर्वपापविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ।
गार्हस्थ्यं धर्ममखिलं प्रयायात् पुत्रपौत्रवान् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ ५ ॥ आस्तीकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

॥ आस्तीकपर्व समाप्तम् ॥

---

1. क-ख-ग—असितं 2. अ—कोशे अयं श्लोको नास्ति

## ॥ एकोनपञ्चाशत्तमोऽध्यायः ॥

( आदिवंशावतारणपर्व ॥ ६ ॥ )



सूतस्य भारतकथाकथनप्रतिज्ञा ॥ १ ॥ व्यासेन वैशंपायनं प्रति भारतकथाकथनचोदना ॥ २ ॥



शौनकः—

भृगुवंशात्प्रभृत्येतत् त्वया मे कथितं महत् ।
आख्यानमखिलं तात भृशं प्रीतोऽस्मि तेन ते ॥ १

प्रवक्ष्यामि च भूयस्त्वां यथावत्सूतनन्दन ।
याः कथा व्याससंप्रोक्तास् ताश्च भूयः प्रचक्ष्व मे ॥ २

तस्मिन्परमदुष्प्रापे सर्पसत्रे महात्मनाम् ।
कर्मान्तरेषु विधिवत् सदस्यानां महाकवे ॥ ३

या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथम् ।
त्वत्त इच्छाम ताश्श्रोतुं सूत त्वं वै विचक्षणः ॥ ५

सूतः—

कर्मान्तरेष्वकथयन् द्विजा वेदाश्रयाः कथाः ।
व्यासस्त्वकथयन्नित्यम् आख्यानं भारतं महत् ॥ ५

शौनकः—

महाभारतमाख्यानं पाण्डवानां यशस्करम् ।

जनमेजयेन यः पृष्टः कृष्णद्वैपायनस्तदा ॥ ६

श्रावयामास विधिवत् तदा कर्मान्तरेषु सः ।
तामहं विधिवत्पुण्यां श्रोतुमिच्छामि वै कथाम् ॥ ७

मनस्सागरसंभूतां महर्षेर्भावितात्मनः ।
कथयस्व सतां श्रेष्ठ परं कौतूहलं हि नः ॥ ८

सूतः—

हन्त तेऽहं प्रवक्ष्यामि महदाख्यानमुत्तमम् ।
कृष्णद्वैपायनमतं महाभारतमादितः ॥ ९

तज्जुषस्वोत्तममते कथ्यमानं मया द्विज ।
शंसितुं तन्मनोहर्षो ममापीह च वर्धते ॥ १०

श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ।
अभ्यागच्छदृषिर्विद्वान् कृष्णद्वैपायनस्तदा ॥ ११

जनयामास यं काली शक्तेः पुत्रात्पराशरात् ।
कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ॥ १२

जातमात्रश्च यस्सद्यो ववृधे वेदवित्तमः ।
वेदांश्चाधिजगे साङ्गान् इतिहासांश्च सर्वशः ॥ १३

यं नाति तपसा कश्चिन् न वेदाध्ययनेन च ।
न व्रतेनोपवासेन न प्रशान्त्या न मन्युना ॥ १४

विव्यासैकं चतुर्धा यो वेदं वेदविदां वरः ।
परावरज्ञो ब्रह्मर्षिः कविस्सत्यव्रतश्शुचिः ॥ १५

यः पाण्डुं धृतराष्ट्रं च विदुरं चाप्यजीजनत् ।
शन्तनोस्संततिं सन्नाम् उद्धरिष्यन् महातपाः ॥ १६

जनमेजयस्य राजर्षेस् तस्मिन्सत्रे महात्मनः ।
विवेश शिष्यैस्सहितो वेदवेदाङ्गपारगैः ॥ १७

तत्र राजानमासीनं ददर्श जनमेजयम् ।
वृतं सदस्यैर्बहुभिर् देवैरिव शतक्रतुम् ॥ १८

तथा मूर्धावसिक्तैश्च नानाजनपदेश्वरैः ।
ऋत्विग्भिर्देवकल्पैश्च कुशलैर्यज्ञसंस्तरे ॥ १९

जनमेजयस्तु राजर्षिर् दृष्ट्वा तमृषिमागतम् ।
सगणोऽभ्युद्यतस्तूर्णं ततो भारतसत्तमः ॥ २०

काञ्चनं विष्टरं तस्मै स एव नृपतिस्स्वयम् ।
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ॥ २१

तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ।
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा ॥ २२

पाद्यमाचमनीयं च अर्घ्यं गां च विधानतः ।
पितामहाय कृष्णाय तदर्हाय न्यवेदयत् ॥ २३

प्रतिगृह्य च तां पूजां पाण्डवाज्जनमेजयात् ।
गां चैव समनुज्ञाय मुनिः प्रीतोऽभवत्तदा ॥ २४

तथा तं पूजयित्वा तु यत्नेन प्रपितामहम् ।
उपोपाविश्य प्रीतात्मा पर्यपृच्छदनामयम् ॥ २५

भगवानपि तं दृष्ट्वा दयालुः प्रतिनन्द्य च ।
सदस्यैः पूजितस्सर्वैस् सदस्यानप्यपूजयत् ॥ २६

तथा तं सत्कृतं सद्भिः कथान्ते जनमेजयः ।
इममर्थं कुरुश्रेष्ठः पर्यपृच्छत्कृताञ्जलिः ॥ २७

जनमेजयः—

कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान् ।
तेषां चरितमिच्छामि कथ्यमानमिह त्वया ॥ २८

कथं च भगवन्भेदस् तेषामासीन्महात्मनाम् ।
तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् ॥ २९

पितामहानां सर्वेषां दैवेनाविष्टचेतसाम् ।
इच्छामि तत्त्वतश्श्रोतुं भगवन्कुशलो ह्यसि ॥ ३०

सूतः—

तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
[1]शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ ३१

कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा ।

---

1. क-ख-ग—उवाच वरदश्शिष्यं वैशम्पायनमन्तिकात् ।

तदस्मै सर्वमाचक्ष्व यन्मत्तश्श्रुतवानसि ॥ ३२

गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततस्सर्वम् इतिहासं पुरातनम् ॥ ३३

राज्ञे तस्मै सदस्येभ्यः क्षत्रियेभ्यश्च सर्वशः ।
भेदं राज्यविनाशं च कुरुपाण्डवयोस्तदा ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

॥ ६ ॥ आदिवंशावतारणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ३४ श्लोकाः]

---

## ॥ पञ्चाशत्तमोऽध्यायः ॥

वैशंपायनेन जनमेजयाय सङ्ग्रहेण भारतकथाकथनम् ॥ १ ॥

---

वैशंपायनः—

शृणु राजन् यथा वीरा भ्रातरः पञ्च पाण्डवाः ।
विरोधमन्वगच्छन्त धार्तराष्ट्रैर्दुरात्मभिः ॥ १

गुरवे प्राङ्नमस्कृत्वा मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान्सर्वास् तथान्यान्विदुषो जनान् ॥ २

महर्षेस्सर्वलोकेषु विश्रुतस्यास्य धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ ३

श्रोतुं पात्रं तु राजंस्त्वं प्राप्येमां भारतीं कथाम् ।
गुरोर्वक्त्रं परिस्पन्दो मुदा प्रोत्सहतीव माम् ॥ ४

शृणु राजन् यथा भेदः कुरुपाण्डवयोरभूत् ।
राज्यार्थे द्यूतसंभूतो वनवासस्तथैव च ॥ ५

यथा च युद्धमभवत् पृथिवीक्षयकारकम् ।
तत्तेऽहं संप्रवक्ष्यामि पृच्छते भरतर्षभ ॥ ६

मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम् ।
नचिरादेव विद्वांसो वेदे धनुषि चाभवन् ॥ ७

तांस्तदा रूपसंपन्नान् [1]वीर्येण परमेण ह ।
नामृष्यन्कुरवो दृष्ट्वा पाण्डवान् धृतराष्ट्रजाः ॥ ८

ततो दुर्योधनः क्रूरः कर्णस्तस्य मते स्थितः ।
पाण्डवान्विविधोपायै राज्यहेतोरपीडयत् ॥ ९

ददावथ विषं पापो भीमाय धृतराष्ट्रजः ।
जरयामास तद्वीरस् त्वन्नेन सह भारत ॥ १०

प्रमाणकोट्यां क्रीडित्वा बद्धा सुप्तमनागसम् ।
तथैव मध्ये गङ्गायाः प्रक्षिप्य पुरमाव्रजत् ॥ ११

यदाऽबुध्यत कौन्तेयस् तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महातेजा भीमसेनो गतव्यथः ॥ १२

---

1. क-ख-ग—वीर्यौजः परिसंमितान् ।

आशीविषैः कृष्णसर्पैस् सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार स शत्रुहा ॥ १३

उपायैर्विविधैः क्षुद्रस् संवृतैर्विवृतैरपि ।
पाण्डवान्पीडयामास न च किञ्चिदसाधयत् ॥ १४

तेषां स विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिघाते च विदुरोऽवहितोऽभवत् ॥ १५

स्वर्गस्थो जीवलोकस्य यथा शक्रस्सुखावहः ।
पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः ॥ १६

यदा तु विविधोपायैस् संवृतैर्विवृतैरपि ।
नाशक्नोद्विनिहन्तुं तान् दैवेनात्यन्तरक्षितान् ॥ १७

[1]ततो दुर्योधनः क्षुद्रः कर्णश्च सहसौबलः ।

---

1. क-ख-ग—सुतप्रियोचितं दृष्ट्वा पाण्डवानम्बिकासुतः ।
ततो विवासयामास राज्यभोगबुभुक्षया ॥
प्रस्थाने चाभवन्मित्रं क्षत्ता तेषां महात्मनाम् ।
ते प्रातिष्ठन्त नगरात् सहिता नागसाह्वयात् ॥
ततस्संप्राप्य कौन्तेयो नगरं वारणावतम् ।
न्यवसन्त महात्मानो मात्रा सह परन्तपाः ॥
आदीप्य जातुषं वेश्म दग्ध्वा तत्र पुरोचनः ।
पाण्डवान् पीडयामास न किञ्चित् समसाधयत् ॥
मार्गभोजीव लोकस्य यथा शुक्रस्सुखावहः ।
पाण्डवानां तथा नित्यं विदुरोऽभूत् सुखावहः ॥
[अधिकः पाठः]

धृतराष्ट्रमनुज्ञाप्य जातुषं चक्रुरालयम् ॥ १८
तत्र तान् वासयामास पाण्डवानमितौजसः ॥ १८॥

अदाहयच्च विस्रब्धान् पावकेन पुनस्तदा ।
विदुरस्यैव वचनात् खनित्री विहिता तदा ॥ १९॥

मोक्षयामास वेगेन ते मुक्ताः प्राद्रवन्भयात् ॥ २०

ततो महावने घोरे हिडिम्बं नाम राक्षसम् ।
भीमसेनोऽवधीत्क्रुद्धो भुवि भीमपराक्रमः ॥ २१

प्राप्ता हिडिम्बी भीमेन यत्र जातो घटोत्कचः ॥ २१॥

अथ संधाय ते वीरा एकचक्रां व्रजंस्तदा ।
ब्रह्मरूपधरा भूत्वा मात्रा सह परंतपाः ॥ २२॥

तत्र ते ब्राह्मणार्थाय बकं हत्वा महाबलम् ।
ब्राह्मणैस्सहिता जग्मुः पाञ्चालानां पुरं ततः ॥ २३॥

तत्र ते द्रौपदीं लब्ध्वा बहून्मासान्सुखोषिताः ।
सहिता हस्तिनपुरं प्रत्याजग्मुररिन्दमाः ॥ २४॥

उक्तास्ते धृतराष्ट्रेण राज्ञा शान्तनवेन च ।
भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति ॥ २५॥

अस्माभिः खाण्डवप्रस्थे युष्मद्वासो विचिन्तितः ॥ २६

पुरं जानपदोपेतं सुविभक्तमहापथम् ।

[1]वासाय खाण्डवप्रस्थं व्रजध्वं गतमन्यवः ॥ २७

तयोस्ते वचनाज्जग्मुस् सह सर्वैस्सुहृज्जनैः ।
नगरं खाण्डवप्रस्थं रत्नमादाय भागशः ॥ २८

तत्र ते न्यवसन् राजन् संवत्सरगणान् बहून् ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान् महीक्षितः ॥ २९

एवं धर्मप्रधानास्ते सत्यव्रतपरायणाः ।
अप्रमत्तास्स्थिताः क्षत्रे प्रतपन्तो हि तांस्तदा ॥ ३०

अजयद्भीमसेनस्तु दिशं प्राचीं महाबलः ।
उदीचीमर्जुनो वीरः प्रतीचीं नकुलस्तथा ॥ ३१

दक्षिणां सहदेवस्तु विजिग्ये परवीरहा ।
एवं चक्रुरिमां सर्वे वशे कृत्स्नां वसुन्धराम् ॥ ३२

पञ्चभिस्सूर्यसङ्काशैस् सूर्येण च वसुन्धराम् ।
षट्सूर्येव च बभ्राजे पाण्डवैस्सत्यविक्रमैः ॥ ३३

ततो निमित्ते कस्मिंश्चिद् धर्मराजो युधिष्ठिरः ।
वनं प्रस्थापयामास भ्रातरं वै धनञ्जयम् ॥ ३४

धैर्यात्सत्याच्च धर्माच्च विजयाच्चाधिकप्रियः ।
अर्जुनो भ्रातरं ज्येष्ठं नात्यवर्तत जातु चित् ॥ ३५

1. क-ख-ग—अस्माभिः खाण्डवप्रस्थे युष्मद्वासो विचिन्तितः ।

स वै संवत्सरं पूर्णं मासं चैव वने वसन् ।
तीर्थयात्रां च कृतवान् नागकन्यामवाप्य च ॥ ३६

पाण्ड्यस्य तनयां लब्ध्वा तत्र ताभ्यां सहोषितः ।
ततोऽगच्छद्धृषीकेशं द्वारवत्यां कदाचन ॥ ३७

तत्र लेभे च बीभत्सुर् भार्यां राजीवलोचनाम् ।
अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् । ३८

सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता ।
सुभद्रा युयुजे प्रीता पाण्डवेनार्जुनेन च ॥ ३९

तत्र सन्तर्पयामास कौन्तेयो हव्यवाहनम् ।
बीभत्सुर्वासुदेवेन सहितः खाण्डवे वने ॥ ४०

नातिभारोऽथ पार्थस्य केशवेनाभवत्सह ।
व्यवसायद्वितीयस्य विष्णोश्शत्रुवधेष्विव ॥ ४१

पार्थायाग्निर्ददौ तत्र गाण्डीवं धनुरुत्तमम् ।
इषुधी चाक्षयौ बाणै रथं च कपिलक्षणम् ॥ ४२

मोचयामास बीभत्सुर् मयं तत्र महासुरम् ।
स चकार सभां दिव्यां सर्वरत्नविभूषिताम् ॥ ४३

तस्यां दुर्योधनः क्षुद्रो लोभं चक्रे सुदुर्मतिः ।
ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम् ॥ ४४

वनं प्रस्थापयामास सप्तवर्षाणि पञ्च च ।
अज्ञातमेकं राष्ट्रे तु ततो वर्षं त्रयोदशम् ॥ ४५

गते त्रयोदशे वर्षे याचमानास्स्वकं वसु ।
नालभन्त महाराज ततो युद्धमवर्तत ॥ ४६

ततस्ते सर्वमुत्साद्य हत्वा दुर्योधनं रणे ।
राज्यं विधूतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः ॥ ४७

इष्ट्वा क्रतूंश्च विविधान् अश्वमेधादिकान् बहून् ।
धृतराष्ट्रे गते स्वर्गं विदुरे पञ्चतां गते ॥ ४८

गमयित्वा स्त्रियस्स्वर्गं राज्ञाममिततेजसाम् ।
[1]वार्ष्णेये निलयं प्राप्ते विष्णुदारान् प्ररक्ष्य च ॥ ४९

महाप्रस्थानिकं गत्वा गतास्स्वर्गमनुत्तमम् ॥ ४९॥

एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम् ।
भेदो राज्यविनाशश्च जयश्च जयतांवर ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

॥ ६ ॥ आदिवंशावतारणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ५०॥ श्लोकाः ।]

---

1. क-ख-ग—स्वं धाम याते वार्ष्णेये कृष्णदारानरक्ष्य च ।

## ॥ एकपञ्चाशत्तमोऽध्यायः ॥

भारतप्रशंसा ॥ १ ॥ तच्छ्रवणादिफलकथनम् ॥ २ ॥

जनमेजयः—

कथितं वै समासेन त्वया सर्वं द्विजोत्तम ।
महाभारतमाख्यानं कुरूणां चरितं महत् ॥ १

कथां तेषां विचित्रार्थाम् इमां कथयति त्वयि ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ २

स भवान्विस्तरेणेमां पुनराख्यातुमर्हति ।
न हि तृप्यामि पूर्वेषां शृण्वन्नाचरितं महत् ॥ ३

न तत्कारणमल्पं हि धर्मज्ञा यत्र पाण्डवाः ।
अवध्यान् सर्वतो जघ्नुः प्रशस्यन्ते च मानवैः ॥ ४

किमर्थं ते नरव्याघ्राश् शान्तास्सन्तोऽप्यनागसः ।
प्रयुज्यमानान् संक्लेशान् क्षान्तवन्तो दुरात्मभिः ॥ ५

कथं नागायुतप्राणो बाहुशाली वृकोदरः ।
परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम ॥ ६

भ्रातॄणां क्लेशमायातं धृतवान् वै परन्तपः ॥ ६॥
कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः ।

शक्ता सती धार्तराष्ट्रान् नादहद्घोरचक्षुषा ॥ ७॥
कथं व्यतिक्रमं द्यूते पार्थौ माद्रीसुतौ तदा ।
अन्वव्रजन्नरव्याघ्रं वञ्च्यमाना दुरात्मभिः ॥ ८॥
कथं धर्मभृतां श्रेष्ठस् सुतो धर्मस्य धर्मवित् ।
अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः ॥ ९॥
कथं च बहुलां सेनां पाण्डवः कृष्णसारथिः ।
अस्यन्नेकोऽनयत्सर्वां पितृलोकं धनंजयः ॥ १०॥
एतदाचक्ष्व मे सर्वं यथावृत्तं तपोधन ।
यद्यच्च कृतवन्तस्ते तत्र तत्र महारथाः ॥ ११॥

वैशंपायनः—

महर्षेस्सर्वलोकस्य पूजितस्य महात्मनः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ १२॥
इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम् ।
उपाख्यानैस्सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥ १३॥
संक्षेपेण तु वक्ष्यामि सर्वमेतन्नराधिप ॥ १४
अध्यायानां सहस्रे द्वे पर्वणां शतमेव च ।
श्लोकानां तु सहस्राणि नवतिश्च दशैव च ॥ १५
ततोऽष्टादशभिः पर्वैस् संगृहीतं महात्मना ॥ १५॥
य इदं श्रावयेद्विद्वान् यश्चेदं शृणुयान्नरः ।

स प्राप्य ब्रह्मणस्स्थानं देवैर्याति च तुल्यताम् ॥ १६॥

इदं हि वेदैस्समितं पवित्रं चोत्तमं महत् ।
श्राव्याणामुत्तमं श्राव्यं पुराणमृषिसंस्कृतम् ॥ १७॥

अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदिश्यते ।
इतिहासे महापुण्ये बुद्धिश्च परमार्पिता ॥ १८॥

अक्षुद्रान् दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वाऽर्थमश्नुते ॥ १९॥

[1]मुच्यते भ्रूणहत्याया यच्चान्यद्वृजिनं भवेत् ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ॥ २०॥

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते सर्वां शत्रूंश्चापि पराजयेत् ॥ २१॥

इदं स्वस्त्ययनं श्रेष्ठम् इदं पुंसवनं महत् ।
[2]महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा ॥ २२॥

अर्थशास्त्रमिदं पुण्यं धर्मशास्त्रमिदं महत् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामिततेजसा ॥ २३॥

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ २४॥

---

1. क-ख-ग—भ्रूणहत्याकृतं चापि पापं जह्यान् न संशयः ।

2. क-ख-ग—महर्षि

इदं हि ब्राह्मणैर्लोके आख्यातं ब्राह्मणेष्विह ॥ २५
संप्रत्याचक्षते चैव कथयिष्यन्ति चापरे ।
पुत्राश्शुश्रूषवस्सन्ति प्रेष्याश्च प्रियवादिनः ॥ २६
भरतानां महज्जन्म शृण्वन्तोह्यनसूयवः ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं पुण्यं तथैव च ॥ २७
शरीरेण कृतं पापं वाचा च मनसैव च ।
सर्वं त्यजति वै क्षिप्रम् इदं शृण्वन्नरस्तदा ॥ २८
कृष्णद्वैपायनेनेदं कृतं धर्मचिकीर्षुणा ।
कीर्तिं प्रथयता लोके पाण्डवानां यशस्विनाम् ॥ २९
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ २९॥
योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः ।
चतुरो वार्षिकान्मासान् सर्वपापैः प्रमुच्यते ॥ ३०॥
विज्ञेयस्सर्ववेदानां पारगो भारतं वदन् ॥ ३१
देवा ब्रह्मर्षयो यत्र पुण्या राजर्षयस्तथा ।
कीर्त्यन्ते हृतपाप्मानः कीर्त्यते केशवस्तथा ॥ ३२
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ।
नित्योत्थितस्सदायोगी महाभारतमादितः ॥ ३३
यश्चेदं पठते विद्वान् सदा पर्वसु पर्वसु ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयं स गच्छति ॥ ३४

यस्तु राजा श्रृणोतीदम् अखिलामश्नुते महीम्।
प्रसूते गर्भिणी पुत्रं कन्या चाशु प्रदीयते ॥ ३५

वणिजस्सिद्धयात्रास्स्युर् वीरा विजयमाप्नुयुः ।
आस्तिकान् श्रावयेन्नित्यं ब्राह्मणाननसूयकान् ॥ ३६

वेदविद्याव्रतस्नातान् क्षत्रियाञ्जयमास्थितान् ।
स्वधर्मनित्यान् वैश्यांश्च [1]श्रावयेत्क्षत्त्रसंश्रितान् ॥ ३७

एष धर्मः पुरा दृष्टः सर्वधर्मेषु भारत ।
ब्राह्मणाच्छ्रवणं राजन् विशेषेण विधीयते ॥ ३८

भूयो वा यः पठेन्नित्यं स गच्छेत्परमां गतिम् ।
श्लोकं वाप्यनुगृह्णीत तथाऽर्धश्लोकमेव वा ॥ ३९

अपि पादं पठेन्नित्यं न च निर्भारतो भवेत् ।
इह नैकाश्रयं जन्म राजर्षीणां महात्मनाम्॥ ४०

इह मन्त्रपदं युक्तं धर्मं चानेकदर्शनम् ।
इह युद्धानि चित्राणि राज्ञां वृद्धिरिहैव च ॥ ४१

ऋषीणां च कथास्तात इह गन्धर्वरक्षसाम् ।
इह तत्तत्समासाद्य विहितो वाक्यविस्तरः ॥ ४२

तीर्थानां नाम पुण्यानां देशानां चेह कीर्तनम् ।
वनानां पर्वतानां च नदीनां सागरस्य च ॥ ४३

---

1. क-ख-ग—शूद्रांश्च द्विजसंश्रितान्

देशानां चैव [1]पुण्यानां पुराणां चैव कीर्तनम् ।
उपचारस्तथैवाग्र्यो वीर्यमप्यतिमानुषम् ॥ ४४
इह सत्कारयोगश्च भारते परमर्षिणा ।
रथाश्वेभनरेन्द्राणां कल्पना युद्धकौशलम् ॥ ४५
वाक्यजातिरनेका च सर्वमस्मिन् समर्पितम् ॥ ४५॥
यथा समुद्रोऽतिमहान् यथा च हिमवान् गिरिः ।
ख्यातौ रत्नाकरं तद्वन् महाभारतमुच्यते ॥ ४६॥
नाप्रीतिरुपपद्येत यथा प्राप्य त्रिविष्टपम् ।
पुण्यं तथेदमाख्यानं श्रुत्वा प्रीतिर्भवत्युत ॥ ४७॥
[2]कुलस्य वृद्धये राजन् आयुषे विजयाय च ॥ ४८
शृणु कीर्तयतः कृत्स्नम् इतिहासं पुरातनम् ॥ ४८॥
यश्चेदं श्रावयेत्पित्र्ये ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं तत् पितॄंस्तस्योपतिष्ठति ॥ ४९॥
प्रातर्यदेनः कुरुते इन्द्रियैर्ब्राह्मणश्चरन् ।
महाभारतमाख्याय पश्चात् संध्यां प्रमुच्यते ॥ ५०॥
रात्रौ यदेनः कुरुते इन्द्रियैर्ब्राह्मणश्चरन् ।

1. क-ख-ग—दिव्यानां पुराणां चैव कीर्तितम् ।
2. क-ख-ग—स्त्रियश्च शूद्राश्च शृणुयुः पुरस्कृत्य द्विजोत्तमान् ।
प्राप्नुवन्ति यथोक्तानि फलान्यविकलानि च ॥
[अधिकः पाठः]

महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥ ५१॥

भारतानां महज्जन्म महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ५२॥

त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ।
नित्योत्थितो महायोगी महाभारतमादितः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

॥ ६ ॥ आदिवंशावतारणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः]

---

## ॥ द्विपञ्चाशत्तमोऽध्यायः ॥

पूरुवंशकथनम् ॥ १ ॥

---

वैशंपायनः—

पूरोर्वंशमहं धन्यं राज्ञाममिततेजसाम् ।
प्रवक्ष्यामि पितॄणां ते तेषां नामानि मे शृणु ॥ १

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिस्संजज्ञे दक्षश्चैव प्रजापतिः ॥ २

अङ्गुष्ठाद्दक्षमसृजच्चक्षुर्भ्यां च मरीचिनम् ।

[1]मरीचेः काश्यपः पुत्रो दक्षस्य दुहिताऽदितिः ॥ ३

अदित्यां काश्यपस्य विवस्वान् । विवस्वतो मनुः।मनोरिला॥

इलायाः पुरूरवाः । पुरूरवस आयुः । आयुषो नहुषः ।
नहुषस्य ययातिः ॥ ५

ययातेर्द्वे भार्ये बभूवतुः । उशनसो दुहिता देवयानी, वृष-
पर्वणश्च दुहिता शर्मिष्ठा नाम ॥ ६

तत्रानुवंशो भवति—

यदुं च तुर्वशुं चोभौ देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ७

तत्र यदोर्यादवाः । पूरोः पौरवाः । पूरोर्भार्या कौसल्या
बभूव । तस्यामस्य जज्ञे जनमेजयः ॥ ८

[2]स त्रीन् हयमेधानाजहार । विश्वजिता चेष्ट्वा वनं प्रविवेश ॥

जनमेजयस्तु खलु सुनन्दां नामोपयेमे । तस्यामस्य जज्ञे
प्राचीन्वान् ॥ १०

यः प्राचीं दिशं जिगाय यावत्सूर्योदयात् । तत्तस्य प्राची-
न्वत्त्वम् ॥ ११

1. क-ख-ग—अङ्गुष्ठाद्दक्षमसृजच्चक्षुर्भ्यां च मरीचिनम् ।
[अधिकः पाठः]

2. क-ख-ग—त्रीन्हयमेधाना

प्राचीन्वांस्तु खल्वाश्मकीमुपयेमे सुषावान्नाम । तस्यामस्य
जज्ञे शय्यातिः ॥ १२

शय्यातिस्तु त्रिशङ्कोर्दुहितरं वराङ्गीं नामोपयेमे। तस्यामस्य
जज्ञेऽहंपातिः ॥ १३

अहंपातिस्तु खलु कृतवीर्यदुहितरं भानुमतीं नामोपयेमे ।
तस्यामस्य जज्ञे सार्वभौमः ॥ १४

सार्वभौमस्तु खलु जित्वाऽऽजहार कैकयीं सुन्दरां नाम ।
तस्यामस्य जज्ञे [1]महाभौमः ॥[2] १५

महाभौमस्तु खलु प्रसेनजिद्दुहितरमुपयेमे सुयज्ञां नाम ।
तस्यामस्य जज्ञे अयुतानायी ॥ १६

यः पुरुषमेधे पुरुषाणामयुतमानयत्तत्स्यायुतानायित्वम् ॥

अयुतानायी तु खलु पृथुश्रवसो दुहितरमुपयेमे भासां नाम ।
अस्यामस्य जज्ञेऽक्रोधनः ॥ १८

अक्रोधनस्तु कालिङ्गीं करण्डुं नामोपयेमे। तस्यामस्य जज्ञे
देवातिथिः ॥ १९

---

1. क-ख-ग—जयत्सेनः

2. क-ख-ग—जयत्सेनस्तु खलु वैदर्भीमुपयेमे सुषावां नाम । तस्यामस्य
जज्ञोऽराचीनः ॥
अराचीनस्तु खलु वैदर्भीमुपयेमे मर्यादां नाम । तस्यामस्य
जज्ञो महाभौमः ॥
[अधिकः पाठः]

देवातिथिस्तु खलु वैदर्भीमुपयेमे मर्यादां नाम । तस्यामस्य जज्ञे ऋचः ॥ २०

ऋचस्तु खलु वामदेव्यामङ्गराजकन्यायामृक्षं पुत्रमजीजनत् ॥ २१

ऋक्षस्तु खलु [1]तक्षकदुहितरं ज्वलतां नामोपयेमे । तस्यामन्तिनारमजीजनत् ॥ २२

अन्तिनारस्तु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार । तमुद्वसाने निर्वृत्ते सरस्वत्यभिगम्य भर्तारं वरयामास । तस्यां पुत्रं जनयामास त्रस्नुं नाम ॥ २३

अत्रानुवंशो भवति ॥

त्रस्नुस्सरस्वतीपुत्र अन्तिनारादजायत ।
इलिलं जनयामास कालिन्द्यां त्रस्नुरात्मजम् ॥ २४

[2]इलिलस्तु रथन्तरायां दुष्यन्तादीन् पञ्च पुत्रानजीजनत् ॥
दुष्यन्तस्तु खलु लक्ष्मणां नाम भागीरथीमुपयेमे । तस्यामस्य जज्ञे जनमेजयः ॥ २६

स एव दुष्यन्तो विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे । तस्यामस्य जज्ञे भरतः ॥ २७

---

1. क-ख-ग—तक्षदुहितरं ललां नाम ।
2. क-ख-ग—इलिलस्तु खलु रथन्तर्यां जनमेजयमुत्पादयामास ॥२५
जनमेजयस्तु खलु कर्श्वीं नाम भागीरथीमुपयेमे । तस्यां
दुष्यन्तादीन्पञ्च पुत्रानजीजनत् ॥ २६
दुष्यन्तस्तु विश्वामित्र दुहितरं—

तत्रेमौ श्लोकौ भवतः—

माता भस्त्रा पितुः पुत्रो यस्माज्जातस्स एव सः ।
भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला ॥ २८

रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ २९

ततोऽस्य भरतत्वम् ॥ ३०

भरतस्तु खलु काशेयीं सार्वसेनीमुपयेमे सुनन्दां नाम ।
तस्यामस्य जज्ञे भुमन्युः ॥ ३१

भुमन्युस्तु दाशार्हीमुपयेमे सुपर्णां नाम । तस्यामस्य
जज्ञे सुहोत्रः ॥ ३२

सुहोत्रस्तु खल्वैक्ष्वाकीमुपयेमे जयन्तीं नाम । तस्यामस्य
जज्ञे हस्ती । य इदं पुरमावासयामास । तस्माद्धस्तिनपुरत्वम्॥

हस्ती तु त्रैगर्तीमुपयेमे यशोधरां नाम । तस्यामस्य जज्ञे
विकुञ्जनः ॥ ३४

विकुञ्जनस्तु दाशार्हीमुपयेमे विन्दां नाम । तस्यामस्य जज्ञेऽ
जमीढः ॥ ३५

अजमीढस्य तु चतुर्विंशतिपुत्रशतं बभूव—कैकय्यां
नागायां गान्धार्यां विमलायामृक्षायामिति । पृथग्वंशकर्तारो
नृपतयः ॥ ३६

अजमीढाद्दक्षायां वंशकरस्संवरणो जज्ञे ॥ ३७

संवरणस्तु खलु वैवस्वतीं तपतीं नामोपयेमे । तस्यामस्य-
जज्ञे कुरुः ॥ ३८

कुरुस्तु दाशार्हीमुपयेमे शुभां नाम । तस्यामस्य जज्ञे
विडूरथः ॥ ३९

विडूरथस्तु खलु मागधीमुपयेमे संप्रियां नाम । तस्यामस्य
जज्ञेऽनश्वान् ॥ ४०

अनश्वांस्तु मागधीमुपयेमे सुवेषां नाम । तस्यामस्य जज्ञे
परीक्षित् ॥ ४१

परीक्षित्तु बाहुकामुपयेमेऽमृतां नाम । तस्यामस्य जज्ञे
भीमसेनः ॥ ४२

भीमसेनस्तु खलु कैकयीमुपयेमे सुकुमारीं नाम । तस्या-
मस्य जज्ञे पर्यश्रवाः । यमाहुः प्रतीप इति ॥ ४३

प्रतीपस्तु शैब्यामुपयेमे सुनन्दां नाम । तस्यां त्रीन् पुत्रानु-
त्पादयामास देवापिं शन्तनुं बाह्लीकं चेति ॥ ४४

देवापिस्तु खलु बाल एवारण्यं प्रविवेश । शन्तनुस्तु मही-
पालोऽभवत् ॥ ४५

तत्र श्लोको भवति—

यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते ।

पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः । तत्तस्य शन्तनुत्वम् ॥

शन्तनुस्तु खलु गङ्गां भागीरथीमुपयेमे । तस्यामस्य जज्ञे
देवव्रतः । यमाहुर्भीष्म इति ॥ ४७

भीष्मस्तु पितुः प्रीतिचिकीर्षया सत्यवतीमानयामास मातरं ।
यामाहुः काळीति ॥ ४८

तस्यां पूर्वं पराशरात्कन्यागर्भो द्वैपायनः । तस्यामेव शन्त-
नोर्द्वौ पुत्रौ बभूवतुः चित्राङ्गदो विचित्रवीर्यश्च ॥ ४९

चित्राङ्गदस्त्वप्राप्तयौवन एव गन्धर्वेण निहतः । ततो
विचित्रवीर्यो राजा बभूव ॥ ५०

विचित्रवीर्यस्तु खलु काशिराजस्य सुते अम्बिकाम्बालिके
उदवहत् । स विचित्रवीर्योऽनुत्पन्नापत्य एव विदेहत्वं प्राप्तः ॥

ततो [1]गन्धवती चिन्तयामास, कथं नु खलु शन्तनोः पिण्ड-
विच्छेदो न स्यादिति ॥ ५२

सा थ द्वैपायनं चिन्तयामास, सोऽग्रतास्स्थितः किं करवा-
णीति । तं सत्यवत्युवाच, भ्राता तेऽनपत्य एव स्वर्गतः, तस्या-
र्थेऽपत्यमुत्पादयेति ॥ ५३

स परमित्युवाच, स तत्र त्रीन्पुत्रानुत्पादयामास—धृतराष्ट्रं
पाण्डुं विदुरं चेति ॥ ५४

---

1. क-ख-ग—सत्यवती

धृतराष्ट्रस्य राज्ञः पुत्राणां शतं बभूव गान्धर्यां वरदानात्
तेषां च धार्तराष्ट्राणां चत्वारः प्रधानाः—दुर्योधनो दुश्शासनो
विकर्णश्चित्रसेनश्चेति ॥ ५५

पाण्डोस्तु कुन्ती माद्रीति स्त्रीरत्ने बभूवतुः । स मृगयां
चरन् मैथुनगतमृषिं मृगचारिणं बाणेनाजघान ॥ ५६

स बाणविद्ध उवाच पाण्डुम् ॥ ५७

अत्र श्लोको भवति—

योऽकृतार्थं हि मां क्रूर बाणेनाघ्ना मृगव्रतम् ।
तवाप्येतादृशो भावः क्षिप्रमेवागमिष्यति ॥ ५८

इति मृगव्रतचारिणा ऋषिणा शप्तः ॥ ५९

स विषण्णरूपः पाण्डुस्तं शापं परिहरन्नोपसर्पति भार्ये ॥

आह च स्वभार्याम् । स्वचापल्यादिदं प्राप्तवानहम् ।
शृणोमि नानपत्यस्य लोकास्सन्तीति । ममार्थे पुत्रानुत्पादयेति
कुन्तीमुवाच ॥ ६१

सा पुत्रानुत्पादयामास धर्माद्युधिष्ठिरं मारुताद्भीमसेनमि-
न्द्रादर्जुनमिति ॥ ६२

स हृष्टरूपः पाण्डुरुवाच—

इयं ते सपत्नी ह्यनपत्या व्रीडिता साध्वी अस्यामपत्य-
मुत्पाद्यतामिति ॥ ६३

तस्यां नकुलसहदेवौ यमावश्विभ्यां जज्ञाते ॥ ६४

माद्रीं तु स्वलङ्कृतां दृष्ट्वा पाण्डुर्भावं चक्रे । स तां प्राप्यैव
विदेहत्वं प्राप्तः ॥ ६५

तत्रैनं चितायामन्वारुरोह माद्री । कुन्तीं चोवाच यमयो-
रार्यया॰ऽप्रमत्तया भवितव्यमिति ॥ ६६

ततः पञ्च पाण्डवान् सह कुन्त्या हास्तिनपुरं नयन्ति स्म
तपस्विनः ॥ ६७

तत्र भीष्माय धृतराष्ट्रविदुरयोः पाण्डोः स्वर्गगमनं याथा-
तथ्यं निवेदयन्ति स्म तपस्विनः ॥ ६८

पाण्डवान् सह कुन्त्या जतुगृहे दाहयितुकामो धृतराष्ट्रात्म-
जोऽभूत् ॥ ६९

तांश्च विदुरो मोक्षयित्वा प्रीतोऽभवत् ॥ ७०

ततो हिडिम्बं हत्वा एकचक्रां जग्मुः कुशलिनः ॥ ७१

पाञ्चालविषयं गत्वा स्वयंवरे द्रौपदीं लब्ध्वाऽर्धराज्यं
प्राप्येन्द्रप्रस्थनिवासिनस्तस्यां पुत्रानुत्पादयामासुर्द्रौपद्याम्—प्रति-
विन्ध्यं युधिष्ठिरः, सुतसोमं वृकोदरः, श्रुतकर्माणमर्जुनः,
शतानीकं नकुलः, श्रुतसेनं सहदेव इति ॥ ७२

शैब्यस्य कन्यां [1]देविकां नामोपयेमे युधिष्ठिरः । तस्यां
पुत्रं जनयामास युधिष्ठिरो यौधेयं नाम ॥ ७३

---

1. क-ख-ग—देवकीं

भीमसेनस्तु खलु वाराणस्यां काशिराजकन्यां बलधरां नामोद्वहत् स्वयंवरस्थां । तस्यामस्य जज्ञे [1]शर्वत्रातः ॥ ७४

भीमसेनस्तु पूर्वमेव हिडिम्बायां राक्षस्यां जनयामास घटोत्कचं नाम ॥ ७५

अर्जुनस्तु खलु द्वारवतीं गत्वा भगवतो वासुदेवस्य भगिनीं सुभद्रां नामोद्वहत् । तस्यामभिमन्युं नाम पुत्रं जनयामास ॥ ७६

अर्जुनस्तु नागकन्यायामुलूप्यामिरावन्तं नाम पुत्रं जनयामास ॥ ७७

ततो मणलूरपतिकन्यायां चित्राङ्गदायामर्जुनः पुत्रमुत्पादयामास बभ्रुवाहनं नाम ॥ ७८

नकुलस्तु खलु चैद्यां रेणुमतीं नामो[2]पयेमे । तस्यां पुत्रं जनयामास निरमित्रं नाम ॥ ७९

सहदेवस्तु खलु माद्रीमेव स्वयंवरे विजयां नामोद्वहद्भार्याम् । तस्यां पुत्रं जनयामास सुहोत्रं नाम ॥ ८०

एते त्रयोदश पुत्राः पाण्डवानाम् ॥ ८१

विराटस्य दुहितरमुत्तरां नामाभिमन्युरुपयेमे । तस्यामस्य परासुर्गर्भोऽजायत ॥ ८२

तमुत्सङ्गे प्रतिजग्राह पृथिवी नियोगात्पुरुषोत्तमस्य ॥ ८३

---

1. क-ख-ग—सर्वत्रातः 2. क-ख-ग--द्वहत्

[1]सौभद्रस्य षाण्मासिकं गर्भमहं जीवयामि पादस्पर्शादिति
वासुदेव उवाच ॥ ८४

अहं जीवयामि कुमारमनन्तवीर्यं जात एवायमनुजातः ।
अभिमन्योस्सत्येन चेयं पृथिवी धारयत्विति वासुदेवस्य पाद-
स्पर्शात्सजीवोऽजायत ॥ ८५

नाम तस्याकरोत्सुभद्रा—
परिक्षीणे कुले जात उत्तरायां परंतपः ।
परीक्षिद्भवत्तस्मात् सौभद्रात्तु यशस्विनः ॥ ८६

[2]परीक्षित्तु खलु भद्रवतीं नामोपयेमे । तस्यां तव भवाञ्ज-
नमेजयः ॥ ८७

जनमेजयात्तु भवतः खलु वपुष्टमायां पुत्रौ द्वौ शतानीकः
[3]शङ्कश्च ॥ ८८

शतानीकस्तु खलु [4]वैदर्भीमुपयेमे । तस्यामस्य जज्ञे पुत्रोऽ-
श्वमेधदत्तः ॥ ८९

इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ९०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥
॥ ६ ॥ आदिवंशावतारणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ११ श्लोकाः ७९ वाक्यानि च]

---

क-ख-ग— { 1.—सुभद्रायाः 2. भुद्रवतीं
3. शङ्कुश्च 4. वैदेही

## ॥ त्रिपञ्चाशत्तमोऽध्यायः ॥

उपरिचरोपाख्यानम् ॥ १ ॥ तस्य गिरिकया विवाहः ॥ २ ॥ दाश-
कन्योत्पत्तिः ॥ ३ ॥ तस्यां पराशराद्व्यासोत्पत्तिः ॥ ४ ॥

वैशंपायनः—

राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
बभूव मृगयाशीलः शश्वत्स्वाध्यायवाञ्छुचिः ॥ १

स चेदिविषयं रम्यं वसुः पौरवनन्दनः ।
इन्द्रोपदेशाज्जग्राह स्पृहणीयं महीपतिः ॥ २

तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोरतिम् ।
देवराड्जसहित उपतस्थे मरुद्गणैः ॥ ३

इन्द्रोऽहमिति धैर्येण तपसा चेत्यमन्यत ।
त्वं नो गतिर्महाराजन् इति वज्र्यवदन्मुहुः ॥ ४
तं वै देवपतिस्साक्षात् तपसस्स न्यवर्तत ॥ ४॥

इन्द्रः—

न संकीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते ।
तं पाहि धर्मो हि धृतः कृत्स्नं पालयते जगत् ॥ ५॥

देवानहं पालयिता पालय त्वं हि मानुषान् ।
लौक्यं धर्मं पालय त्वं नित्ययुक्तस्समाहितः ॥ ६॥

धर्मयुक्तस्ततो लोकान् पुण्यांल्लप्स्यसि शाश्वतान् ॥ ७
दिविष्ठस्य भुविष्ठस्त्वं सखा भूत्वा मम प्रियः ।
ऊधः पृथिव्या यो देशस् तमावस नराधिप ॥ ८
पशव्यश्चैव पुण्यश्च संस्थिरो धनधान्यवान् ।
सुरक्ष्यश्चैव धन्यश्च भाग्यैर्भूरिगुणैर्युतः ॥ ९
अनन्य एष देशो हि धनरत्नादिभिर्युतः ।
वसो रक्षस्व वसुधां वस चेदिषु चेदिप ॥ १०
धर्मशीला जनपदास् ससंतोषाश्च साधवः ।
न च मिथ्या प्रलापोऽत्र स्वैरेष्वपि ततोऽन्यथा ॥ ११
न च पित्रा विभज्यन्ते नरा गुरुहिते रताः ।
युञ्जन्ति धुरि नो गाश्च कृशान् संधुक्षयन्ति च ॥ १२
सर्वे वर्णास्स्वधर्मस्थास् सदा चेदिषु मानवाः ।
न तेऽस्त्यविदितं किंचित् त्रिषु लोकेषु यद्भवेत् ॥ १३
देवोपभोग्यं दिव्यं च विमानं स्फाटिकं महत् ।
आकाशगं त्विदं दत्तं विमानमुपलप्स्यते । १४
त्वमेकस्सर्वमर्त्येषु विमानवरमास्थितः ।
चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव ॥ १५
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ।
धारयिष्यसि सङ्ग्रामे यां च शस्त्रैरविक्षतः ॥ १६

लाञ्छनं चैतदेवेह भविता ते नराधिप ।
इन्द्रमालेति विख्यातां धन्यामप्रतिमां वह ॥ १७

वैशम्पायनः—

यष्टिं च वैष्णवीं तस्मै ददौ वृत्रनिषूदनः ।
[1]शत्रूणामपि संहर्त्रीं शिष्टानां परिपालिनीम् ॥ १८
एवं संसान्त्व्य नृपतिं तपसस्संन्यवर्तयत् ।
प्रययौ दैवतैस्सार्धं कृत्वा कार्यं दिवौकसाम् ॥ १९
ततस्तु राजा चेदीनाम् इन्द्राभरणभूषितः ।
इन्द्रदत्तं विमानं तद् आस्थाय प्रययौ पुरीम् ॥ २०
[2]स तु शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास सर्वोत्सववरं तदा ॥ २१
मार्गशीर्षे महाराज पूर्वपक्षे महामखम् ॥ २१॥
तदा प्रभृति चाद्यापि यष्ट्याः क्षितिपसत्तमैः ।
प्रवेशः क्रियते राजन् यथा तेन प्रवर्तितः ॥ २२॥
अपरेद्युस्ततश्चास्याः कुर्वन्त्येते ध्वजोच्छ्रयम् ।
अलङ्कृतायाः पुलकैर् गन्धमाल्यैश्च भूषणैः ॥ २३॥
माल्यदामपरिक्षिप्तां द्वात्रिंशत्किष्कुसंमिताम् ॥ २४
चतुर्विंशत्यङ्गुलात्मा हस्तः किष्कुरिति स्मृतः ।

1. क-ख-ग—इष्टप्रदानमुद्दिश्य 2. क-ख-ग—तस्याः

उद्धृत्य पीठके चापि द्वादशारत्निकोच्छ्रिते ॥ २५
महाराजतवासोभिः परिक्षिप्य ध्वजोत्तमम् ।
वासोभिरन्नपानैश्च पूजितैर्ब्राह्मणर्षभैः ॥ २६
पुण्याहवाचनं कृत्वा ध्वज उच्छ्रियते तदा ।
शङ्खभेरीमृदङ्गैश्च संनादं चक्रिरे ततः ॥ २७
भगवान्पूज्यते चात्र यष्टिरूपेण वासवः ।
माणिभद्रादयो यक्षाः पूज्यन्ते दैवतैस्सह ॥ २८
नानाविधानि दानानि दत्त्वार्थिभ्यस्सुहृज्जनैः ।
अलङ्कृत्वा माल्यदामैर् वस्त्रैर्नानाविधैस्तथा ॥ २९
दृतिभिस्सजलैस्सर्वे क्रीडित्वा नृपशासनात् ।
सभाजयित्वा राजानं कृत्वा नर्माश्रयाः कथाः ॥ ३०
रमन्ते नागरास्सर्वे तथा जानपदैस्सह ।
सूताश्च मागधाश्चैव रमन्ते नटनर्तकाः ॥ ३१
प्रीत्या तु नृपशार्दूल सर्वे चक्रुर्महोत्सवम् ।
सान्तःपुरस्सहामात्यस् सर्वाभरणभूषितः ॥ ३२
महाराजतवासांसि वसित्वा चेदिराट् तदा ।
रेजे चेदिपतिस्तत्र दिवि देवपतिर्यथा ॥ ३३
जातिभिस्तूलिकेनाक्तस् तदा स मुमुदे सदा ।
एवं जानपदास्सर्वे चक्रुरिन्द्रमखं तथा ॥ ३४

यथा चेदिपतिः प्रीतश् चकारेन्द्रमखं वसुः ॥ ३५

एतां पूजां महेन्द्रस्तु दृष्ट्वा वसुकृतां शुभाम् ।
हरिभिर्वाजिभिर्युक्तम् अन्तरिक्षगतं रथम् ॥ ३६

आस्थाय सह शच्या च वृतो ह्यप्सरसां गणैः ।
वसुना राजमुख्येन समागम्याब्रवीद्वचः ॥ ३७

इन्द्रः—

ये पूजयिष्यन्ति नरा राजानश्च मखं मम ।
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृप ॥ ३८

तेषां श्रीर्विभवश्चैव स्वराष्ट्राणां भविष्यति ।
तस्येप्सितो जनपदो मुदितश्च भविष्यति ॥ ३९

निरीतिकानि सस्यानि भवन्ति बहुधा नृप ।
राक्षसाश्च पिशाचाश्च न लुम्पन्ते कथंचन ॥ ४०

वैशंपायनः—

एवं महात्मना तेन महेन्द्रेण नराधिप ।
वसुः प्रीत्या मघवता महारा[1]जेति सत्कृतः ॥ ४१
एवं कृत्वा महेन्द्रस्तु जगाम स्वं निवेशनम् ॥ ४१॥

उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।
भूमिदानादिभिर्दानैर् यथायुक्ता भवन्ति वै ॥ ४२॥
[2]वरदानाल्लभन्ते च तथा शक्रोत्सवेन ते ॥ ४३

---

1. क-ख-ग—जोऽभिषेचित 2. क-ख-ग—वरदानं महायज्ञैः

इन्द्रप्रीत्या भूमिपतिश् चकारेन्द्रमखं वसुः ॥ ४३॥
संपूजितो मघवता वसुश्चेदिपतिस्तथा ।
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ॥ ४४॥
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः ।
नानाराष्ट्रेषु च सुतान् स सम्राडभ्यषेचयत् ॥ ४५॥
महारथो मगधराड् विश्रुतो यो बृहद्रथः ।
प्रत्यग्रश्च कुशाम्बश्च यमाहुर्मणिवाहनम् ॥ ४६॥
[1]माच्छिल्लश्च यदुश्चैव राजन्यश्चापराजितः ।
एते पञ्च सुतास्तस्य राजर्षेर्भूरितेजसः ॥ ४७॥
न्यवेशयन्नामभिस्स्वैर् देशांश्चैव पुराणि च ।
वासवाश्चैव राजानस् सर्वे वंशकराः पृथक् ॥ ४८॥
वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके रथे ।
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ॥ ४९॥
राजोपरिचरेत्येवम् अवोचन्पार्थिवा नृपम् ॥ ५०
पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः ।
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ॥ ५१
गिरिं कोलाहलं तं तु पदा वसुरताडयत् ।
निश्चक्राम नदी तस्य प्रहारविवरेण सा ॥ ५२

1. क-ग—मच्चेल्लश्च ; ख—मच्चिल्लश्च

तस्यां नद्यामजनयन्मिथुनं पर्वतस्स्वयम ।
तस्माद्धि मोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ॥ ५३

महिषी भविता कन्या पौष्यस्सेनापतिर्भवेत् ॥ ५३॥

शुक्तिमत्या वचश्श्रुत्वा दृष्ट्वा तौ राजसत्तमः ॥ ५४

यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ।
वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमम् ॥ ५५

चकार पत्नीं कन्यां तां दयितां गिरिकां नृपः ।
वसोः पत्नी तु गिरिका कामात् काले न्यवेदयत् ॥ ५६

ऋतुकालमनुप्राप्ता काले पुंसवने शुचिः ।
तदहः पितरश्चैनम् ऊचुर्जहि मृगानिति ॥ ५७

श्रुत्वा पितृवचः प्रीतस् तदा मतिमतां वरः ।
स पितॄणां नियोगं तम् अनतिक्रम्य पार्थिवः ॥ ५८

चचार मृगयां कामी गिरिकामेव संस्मरन् ॥ ५८॥

अशोकैश्चम्पकैश्चूतैस् तिलकैरतिमुक्तकैः ।
पुन्नागैः कर्णिकारैश्च वकुलैर्दिव्यपादपैः ॥ ५९॥

पनसैर्नारिकेलैश्च चन्दनैश्चार्जुनैस्तथा ।
एतैरन्यैर्महावृक्षैः पुण्यैस्स्वादुफलैर्युतम् ॥ ६०॥

कोकिलाकुलसन्नादं मत्तभ्रमरनादितम् ।

वसन्तकाले तत्पश्यन् वनं चैत्ररथोपमम् ॥ ६१॥
मन्मथाभिपरीतात्मा नापश्यद्गिरिकां तदा ॥ ६२
अपश्यन्कामसंतप्तश् चरमाणो यदृच्छया ।
पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितम् ॥ ६३
अशोकस्तबकैश्छन्नं रमणीयं तदा नृपः ।
तरोरधस्ताच्छाखायां सुखासीनो नराधिपः ॥ ६४
मधुगन्धैश्च संपृक्तं पुष्पगन्धं मनोरमम् ।
वायुना प्रेर्यमाणं तम् आघ्राय मुदमन्वगात् ॥ ६५
चचार मृगयां कामी गिरिकामेव संस्मरन् ।
अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ॥ ६६
[1]तस्य रेतः प्रचस्कन्द चरतो रुचिरे वने ॥ ६६॥
स्कन्नमात्रेण तद्रेतो वृक्षपर्णेन भूमिपः ।
प्रतिजग्राह मिथ्या मे न स्कन्देद्रेत इत्युत ॥ ६७॥
ऋतुश्च तस्याः पत्न्या मे न मोघस्यादिति प्रभुः ।
संचिन्त्यैव तदा राजा विचार्य च पुनः पुनः ॥ ६८॥
अमोघत्वं च विज्ञाय तेजसो राजसत्तमः ।
शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य च ॥ ६९॥
अभिमन्त्र्याशु तच्छुक्रम् आरात्तिष्ठन्तमाशुगम्

1. क-ख-ग-भार्यां चिन्तयमानस्य मन्मथाग्निरवर्धत। [अधिकः पाठः]

सूक्ष्मधर्मार्थतत्त्वज्ञो ज्ञात्वा श्येनं ततोऽब्रवीत् ॥ ७०॥
मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ।
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य मे ॥ ७१॥

गृहीत्वा तत्तदा श्येनस् तूर्णमुत्पत्य वेगवान् ।
वेगं परममास्थाय प्रदुद्राव विहंगमः ॥ ७२॥

तमपश्यदथायान्तं श्येनं श्येनस्तथाऽपरः ।
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ॥ ७३॥

तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः ।
युद्ध्यतोरपतद्रेतस् तच्चापि यमुनाम्भसि ॥ ७४॥

तत्राद्रिकेत्यभिख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता बभूव यमुनाचरी ॥ ७५॥

श्येनपादात् परिभ्रष्टं तद्वीर्यमथ वासवम् ।
जग्राह तरसोत्पत्य साऽद्रिका मत्स्यरूपिणी ॥ ७६॥

कदाचिदथ मत्स्यां तां बबन्धुर्मत्स्यघातिनः ॥ ७७

मासे च दशमे प्राप्ते तदा भारतसत्तम ।
उज्जह्रुरुदरात्तस्याः स्त्रीपुमांसौ च मानुषौ ॥ ७८

आश्चर्यभूतं मत्वा तत् राज्ञस्ते प्रत्यवेदयन् ।
कायान्मात्स्यादिमौ राजन् संभूतौ मानुषाविति ॥ ७९

तयोः पुमांसं जग्राह राजोपरिचरस्तदा ।
स मात्स्यो नाम राजाऽऽसीद् धार्मिकस्सत्यसङ्गरः ॥ ८०

साऽप्सरा मुक्तशापा च क्षणेन समपद्यत ॥ ८०॥

पुरोक्ता सा भगवता तिर्यग्योनिगताऽऽशु वै ।
मानुषौ जनयित्वा तु मुक्तशापा भविष्यसि ॥ ८१॥

सुतौ संजनयित्वा सा विशस्ता मत्स्यघातिभिः ॥ ८२

संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ।
सिद्धर्षिचारणपथं जगामाथ वराप्सराः ॥ ८३

या कन्या दुहिता मत्स्या सा चासीन्मत्स्यगन्धिनी ।
राज्ञा दत्ता च दाशाय सुतेयं ते भवत्विति ॥ ८४

सा तु रूपसमायुक्ता सर्वैस्समुदिता गुणैः ॥ ८४॥

या तु सत्यवती नाम मत्स्यगात्राभिसंश्रयात् ।
आसीत्सा मत्स्यगन्धैव कंचित्कालं शुचिस्मिता ॥ ८५॥

शुश्रूषार्थं पितुर्नावं तां तु वाहयतीं जले ।
तीर्थयात्रां परिक्रामन् अपश्यद्वै पराशरः ॥ ८६॥

अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम् ।
दृष्ट्वैव स च तां धीमांश् चकमे चारुदर्शनाम् ॥ ८७॥

विद्वांस्तां वासवीं कन्यां कार्यवान् मुनिपुङ्गवः ।

संभवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ॥ ८८॥

क कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ॥ ८९

मत्स्यगन्धा

अनपत्यस्य दाशस्य सुता तत्प्रियकाम्यया ।
सहस्रजनसंपूर्णा नौर्मया वाह्यते द्विज ॥ ९०

पराशरः—

शोभनं वासवि शुभे किंचिन्नयासि वाह्यताम् ।
कलशं भविता भद्रे सहस्रार्धेन संमितम् ॥ ९१
अहं शेषो भविष्यामि नीयतामाचिरेण नौः ॥ ९१॥

वैशंपायनः—

मत्स्यगन्धा तथेत्युक्त्वा नावं वाहयती जले ।
वीक्षमाणं मुनिं दृष्ट्वा प्रोवाचेदं वचस्तदा ॥ ९२॥

मत्स्यगन्धा—

मत्स्यगन्धेति मामाहुर् दाशराजसुतां जनाः ।
जन्म शोकाभितप्तायाः कथं ज्ञास्यसि कथ्यताम् ॥ ९३॥

पराशरः—

दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः ।
प्रणयोपबृंहणार्थाय वक्ष्ये वासवि तच्छृणु ॥ ९४॥
बर्हि[1]ष इति विख्याताः पितरस्सोमपास्तु ते ।

---

1. क-ख-ग—षद इति विख्याताः

तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता ॥ ९५॥

अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ॥ ९६

[1]त्वया न दृष्टपूर्वास्तु पितरस्ते कदाचन ।
संभूता मनसा तेषां पितॄन् स्वान्नाभिजानती ॥ ९७

सा त्वन्यं पितरं वव्रे स्वानतिक्रम्य तान्पितॄन् ।
नाम्ना वसुरिति ख्यातं मनुपुत्रं महीश्वरम् ॥ ९८

अद्रिकाऽप्सरसा युक्तं विमाने दिवि विष्ठितम् ।
सा तेन व्यभिचारेण मनसा कामचारिणी ॥ ९९

पितरं प्रार्थयित्वाऽन्यं योगाद्भ्रष्टा पपात ह ।
अपश्यत्पतमाना सा विमानत्रयमन्तिकात् ॥ १००

त्रसरेणुप्रमाणांस्तांस् तत्रापश्यत् स्वकान् पितॄन् ।
सुसूक्ष्मानपरिव्यक्तान् अङ्गैरङ्गेष्विवाहितान् ॥ १०१

तातेति तानुवाचार्ता पतन्ती सा ह्यधोमुखी ।
तैरुक्ता सा तु माभैषीस् तेन सा संस्थिता दिवि ॥ १०२

ततः प्रसादयामास स्वान्पितॄन्दीनया गिरा ।
त ऊचुः पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् ॥ १०३

---

1. क-ख-ग—भगवान्पूज्यते यत्र हररूपेण शङ्करः ।
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ॥
[अधिकः पाठः]

भ्रष्टैश्वर्या स्वदोषेण तप्यसे त्वं शुचिस्मिते ॥ १०३॥
यैरारभन्ते कर्माणि शरीरैरिह देवताः ।
तैरेव तत्कर्मफलं प्राप्नुवन्ति स्म देवताः ॥ १०४॥
मनुष्यास्त्वन्यदेहेन शुभाशुभमिति स्थितिः ॥ १०५
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ॥ १०५॥
तस्मात्त्वं पतसे पुत्रि प्रेत्य त्वं प्राप्स्यसे फलम् ॥ १०६
पितृहीना तु कन्या त्वं वसोर्हि त्वं सुता मता ।
मत्स्ययोनौ समुत्पन्ना सुता राज्ञो भविष्यसि ॥ १०७
अद्रिका मत्स्यरूपाऽभूद् गङ्गायमुनसङ्गमे ।
पराशरस्य दायादं त्वं पुत्रं जनयिष्यसि ॥ १०८
स वेदमेकं ब्रह्मर्षिश् चतुर्धा विभजिष्यति ।
[1]महाभिषक्सुतस्यैव शन्तनोः कीर्तिवर्धनम् ॥ १०९
ज्येष्ठं चित्राङ्गदं वीरं चित्रवीर्यं च विश्रुतम् ।
एतानुत्पाद्य पुत्रांस्त्वं पुनरेवागमिष्यसि ॥ ११०
व्यतिक्रमात्पितॄणां च प्राप्स्यसे जन्म कुत्सितम् ।
अस्यैव राज्ञस्त्वं कन्या ह्यद्रिकायां भविष्यसि ॥ १११
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ॥ १११॥
एवमुक्ता पुरा तैस्त्वं जाता सत्यवती शुभा ॥ ११२

---

1. क-ख-ग—महाराज्याभिषिक्तस्य

अद्रिकेत्यभिविख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता त्वां जनित्वा गता दिवम् ॥ ११३

तस्यां जातासि सा कन्या राज्ञो वीर्येण चैव हि ।
तस्माद्वासवि भद्रं ते याचे वंशकरं सुतम् ॥ ११४

वैशम्पायनः—
विस्मयाविष्टसर्वाङ्गी जातिस्मरणतां गता ।
साऽब्रवीत्पश्य भगवन् परे पारे स्थितानृषीन् ॥ ११५

आवयोश्च कथं ब्रह्मन् भविष्यति समागमः ।
एवं तयोक्ते भगवान् नीहारमसृजद्विभुः ॥ ११६

येन देशस्स सर्वस्तु तमोवृत इवाभवत् ॥ ११६॥

दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ।
विस्मिता[1]भूत्ततः कन्या व्रीडिता त्विदमब्रवीत् ॥ ११७॥

विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ।
त्वत्संयोगाच्च दुष्येत कन्याभावो ममाऽनघ ॥ ११८॥

कन्यात्वे दूषिते चाहं कथं शक्ष्ये द्विजोत्तम ॥ ११९

गन्तुं गृहे गृहं चापि अहं नास्थातुमुत्सहे ।
एतत्संचिन्त्य भगवन् विधत्स्व यदनन्तरम् ॥ १२०

एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः ।

---

1. क-ख-ग—साब्रवीत्कन्या व्रीडिता च मनस्विनी ।

उवाच मत्प्रियं कृत्वा पुनः कन्या भविष्यसि ॥ १२१
वृणीष्व च वरं भद्रे यं त्वमिच्छसि भामिनि ।
वृथा हि न प्रसादो मे भूतपूर्वश्शुचिस्मिते ॥ १२२
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ।
स चास्यै वरदः प्रादाद् भगवान् काङ्क्षितं प्रभुः ॥ १२३
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता ।
[1]जगाम सह संसर्गम् ऋषिणाऽद्भुतकर्मणा ॥ १२४
तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि ।
तस्यास्तु योजनाद्गन्धम् आजिघ्रन्ति नरा भुवि ॥ १२५
ततो योजनगन्धेति तस्या नाम परिश्रुतम् ॥ १२५॥

[2]वैशंपायनः—

एवं सत्यवती हृष्टा पूजां लब्ध्वा यथेप्सतः ।
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ॥ १२६॥
जज्ञे च यमुनाद्वीपे पाराशर्यस्स वीर्यवान् । १२७
जातमात्रस्स ववृधे सप्तवर्षोऽभवत्तदा ।
स्नात्वाभिवाद्य पितरं तस्थौ व्यासस्समाहितः ॥ १२८
स्वस्तीति वचनं चोक्त्वा ददौ कलशमुत्तमम् ।
गृहीत्वा कलशं पार्श्वे तस्थौ व्यासो महामुनिः ॥ १२९

---

1. क-ख-ग—लज्जानतमुखी भूत्वा मुनेरभ्याशमागता ॥
[अधिक पाठः]

2. क-ख-ग—ततो रम्ये वनोद्देशे दिव्यास्तरणसंवृतम् ।
वीरासनमपास्थाय योगी ध्यानपरोऽभवत् ।

श्वेतपट्टगृहे रम्ये पर्यङ्के सोत्तरच्छदे ।
तूष्णींभूतां तदा कन्यां ज्वलन्तीं योगतेजसा ॥
दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः ।
स चिन्तयामास मुनिः किं कृतं सुकृतं भवेत् ॥
शिष्टानां तु समाचार शिष्टाचार इति स्मृतः ।
श्रुतिस्मृतिविदो विप्राः धर्मज्ञा ज्ञानिनस्स्मृताः ॥
धर्मज्ञैर्विहितो धर्मः श्रौतस्स्मार्तो द्विधा द्विजैः ।
दानाग्निहोत्रमिज्या च श्रौतस्यैव हि लक्षणम् ॥
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
धर्मंतु धारणे धातुर्महत्त्वे चैव पठ्यते ॥
ततेष्टफलभाग्धर्मा आचार्यैरुपदिश्यते ।
अनिष्टफलभाक् चेति तैरधर्मो भविष्यति ॥
तस्मादिष्टफलार्थाय धर्ममेव समाचरेत् ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यश्च धार्मिकः ॥
विवाहो ब्राह्मणानां तु गान्धर्वो नैव धार्मिकः ।
त्रिवर्णेतरजातीनां गान्धर्वासुरराक्षसाः ॥
पैशाचो न च कर्तव्यः पिशाचश्चाष्टमोऽधमः ।
समार्षां विक्रितां कन्यां मातुश्च कुलजां तथा ॥
वृद्धां प्रव्राजितां वन्ध्यां पतितां च रजस्वलाम् ।
अपस्मारकुले जातां पिङ्गलां कुष्ठिनीं व्रणीम् ॥
न चास्नातां स्त्रियं गच्छेद् इति धर्मानुशासनम् ।
पिता पितामहो भ्राता माता मातुल एव च ॥
उपाध्यायर्त्विजश्चैव कन्यादाने प्रभूत्तमाः ।
एतै र्दत्तां निषेवेत नादत्तामाददीत च ॥
इत्येव ऋषयः प्राहुर् विवाहे धर्मवित्तमाः ।
अस्या नास्ति पिता भ्राता माता मातुल एव च ॥
गान्धर्वेण विवाहेन न स्पृशामि यदृच्छया ।
क्रियाहीनं तु गान्धर्वं न कर्तव्यमनापदि ॥

यदस्यां जायते पुत्रो वेदव्यासो भवेदृषिः ।
क्रियाहीन कथं विप्रो भवेदृषिरुदारधीः ॥

वैशम्पायनः—

एवं चिन्तयतो भावैर् महर्षेर्भावितात्मनः ।
ज्ञात्वा चैवाभ्यवर्तन्त पितरो बर्हिषस्तदा ॥
तस्मिन् क्षणे ब्रह्मपुत्रो वसिष्ठोऽपि समेयिवान् ।
पूर्वं स्वागतमित्युक्त्वा वसिष्ठः प्रत्यभाषत ॥

पितृगणाः—

अस्माकं मानसीं कन्याम् अस्मच्छापेन वासवीम् ।
यदि चेच्छसि पुत्रार्थं कन्यां गृह्णीष्व मा चिरम् ॥
पितॄणां वचनं श्रुत्वा वसिष्ठ प्रत्यभाषत ।
महर्षीणां वचस्सत्यं पुराणेऽपि मया श्रुतम् ॥
पराशरो ब्रह्मचारी प्रजार्थी मम वंशधृत् ।
एवं संभाषमाणे तु वसिष्ठे पितृभिस्सह ॥
ऋषयोऽभ्यागमंस्तत्र नैमिशारण्यवासिनः ।
विवाहं द्रष्टुमिच्छन्त शक्तिपुत्रस्य धीमतः ॥
अरुन्धती महाभागा अदृश्यन्त्या सहैव सा ।
विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा ॥
वैवाहिकांस्तु संभारान् संकल्प्य च यथाक्रमम् ।
अरुन्धती सत्यवतीं वधूं संगृह्य पाणिना ॥
भद्रासने प्रतिष्ठाप्य इन्द्राणीं समकारयत् ।
आपूर्यमाणपक्षे तु वैशाख्यां सोमदैवते ॥
शुभग्रहे त्रयोदश्यां मुहूर्ते मैत्र आगते ।
विवाहकाल इत्युक्त्वा वसिष्ठो मुनिभिस्सह ॥
यमुनाद्वीपमासाद्य शिष्यैश्च मुनिपत्निभिः ।
स्थण्डिलं चतुरश्रंच गोमयेनोपलिप्य च ॥
अक्षतैः फलपुष्पैश्च स्वस्तिकै राम्रपल्लवैः ।
जलपूर्णघटैश्चैव सर्वतः परिशोभितम् ॥
तस्य मध्ये प्रतिष्ठाप्य बृस्यां मुनिवरं तदा ।

सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि ॥
कृत्वार्जुनानि वस्त्राणि परिधाप्य महामुनिम् ।
वाचयित्वा तु पुण्याहम् अक्षतैस्तु समर्चितः ॥
गन्धानुलिप्तस्स्रग्वी च सव्रतोऽथो वधूगृहे ।
अपदातिस्ततो गत्वा वधूज्ञातिभिरर्चितः ॥
स्नातामहतसंवीतां गन्धलिप्तां स्रगुज्ज्वलाम् ।
वधूं मङ्गलसंयुक्ताम् इपुहस्तां समीक्ष्य च ॥
उवाच वचनं काले कालज्ञस्सर्वधर्मवित् ।

वसिष्ठः—

प्रतिग्रहो दातृवशः श्रुतमेवं मया पुरा ॥
यथा वक्ष्यन्ति पितरस् तत्करिष्यामहे वयम् ।

वैशम्पायनः—

तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः ॥
श्रुत्वा तु पितरस्सर्वे निस्सङ्गा निष्परिग्रहाः ।
वसुं परमधर्मिष्ठम् आनीयेदं वचोऽब्रुवन् ॥
मत्स्ययोनौ समुत्पन्ना तव पुत्री विशेषतः ।
पराशराय मुनये दातुमर्हसि धर्मतः ॥

वसुः—

सत्यं मम सुता सा हि दाशराजेन पालिता ।
अहं प्रभुः प्रदाने तु प्रजापालः प्रजार्थिनाम् ॥

पितरः—

निराशिषो वयं सर्वे निस्सङ्गा निष्परिग्रहाः ।
कन्यादानेन संबन्धो दक्षिणाबन्ध उच्यते ॥
कर्मभूमिस्तु मानुष्यं भोगभूमिस्त्रिविष्टपम् ।
इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः ॥
इह लोके निष्कृतिनो नरकं यान्ति निर्घृणाः ।
दक्षिणाबन्ध इत्युक्ते उभे सुकृतदुष्कृते ॥
दक्षिणाबन्धसंयुक्ता योगिनः प्रपतन्ति ते ।

ततो दाशभयात्पत्नी स्नात्वा कन्या बभूव सा ।
अभिवाद्य मुनेः पादौ पुत्रं जग्राह पाणिना ॥ १३०
स्पृष्टमात्रे स निर्भर्त्स्य मातरं वाक्यमब्रवीत् ।
मम पित्रा तु संस्पर्शान्मातस्त्वमभवश्शुचिः ॥ १३१
अद्य दाशसुता कन्या न स्पृशेर्मामनिन्दिते ॥ १३२॥

वैशंपायनः—

व्यासस्य वचनं श्रुत्वा बाष्पपूर्णमुखी तदा ।

---

पूर्वतोऽनुवृत्तम्—

तस्मान्नो मानसीं कन्यां योगाकृष्टां विशां पते ॥
सुतात्वं तव संप्राप्तां सतीं भिक्षां ददस्व वै ।
इत्युक्त्वा पितरस्सर्वे क्षणादन्तर्हितास्तदा ॥

वैशम्पायनः—

याज्ञवल्क्यं समाहूय विवाहाचार्यमित्युत ।
वसुं चापि समाहूय वसिष्ठो मुनिभिस्सह ॥
विवाहं कारयामास श्रुतिदृष्टेन कर्मणा ।

वसुः—

पराशर महाप्राज्ञ तव दास्याम्यहं सुताम् ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥

वैशम्पायनः—

वसोस्तु वचनं श्रुत्वा याज्ञवल्क्यमते स्थितः ।
कृतकौतुकमङ्गल्यः पाणिना पाणिमस्पृशत् ॥
प्रभूताज्येन हविषा हुत्वा मन्त्रैर्हुताशनम् ।
त्रिरग्निं तु परिक्रम्य समभ्यर्च्य हुताशनम् ॥
महर्षीन् याज्ञवल्क्यादीन् दक्षिणाभिः प्रतर्प्य च ।
लब्धानुज्ञोऽभिवाद्याशु प्रदक्षिणमथाकरोत् ॥
पराशरे कृतोद्वाहे देवास्सर्षिगणास्तदा ।
हृष्टा जग्मुः क्षणादेव वेदव्यासो भवत्विति ॥

मनुष्यभावात्सा योषित् पतिता मुनिपादयोः ॥ १३२॥
ततः प्रसन्नो भगवान् पुत्रं प्रोवाच धर्मवित् ॥ १३३

पराशरः—

मा त्वमेवंविधं कार्षीर् नैतद्धर्म्यं मतं हि नः ।
दूष्यौ न मातापितरौ तथा पूर्वोपकारिणौ ॥ १३४
धारणाद्दुःखसहनात् तयोर्माता गरीयसी ॥ १३४॥
बीजक्षेत्रसमा[1]योगाद् यथा सस्यं प्रजायते ।
जायते च सुतस्तद्वत् पुरुषस्त्रीसमागमे ॥ १३५॥
मृगीणां पक्षिणां चैव अप्सराणां तथैव च ।
शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः ॥ १३६॥
ऋष्यशृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा ।
अगस्त्यश्च वसिष्ठश्च ऊर्वश्यां जनितावुभौ ॥ १३७॥
सोमश्रवास्तु सर्प्यां तु अश्विनावश्वसंभवौ ।
स्कन्दस्स्कन्नेन शुक्लेन जातश्शरवणे पुरा ॥ १३८॥
एवमेव च देवानाम् ऋषीणां चैव संभवः ।
लोकवादप्रवृत्तिर्हि न मीमांस्या बुधैस्सदा ॥ १३९॥
वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा ।
धर्मनेता महर्षीणां मनुष्याणां त्वमेव च ॥ १४०॥

---

1. क-ख-ग—योगे सस्यं जायति लौकिकम्

तस्मात्पुत्र न दूष्येत वासवी योगचारिणी ।
मत्प्रीत्यर्थं महाप्राज्ञ सस्नेहं वक्तुमर्हसि ॥ १४१॥

प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः ।
तस्मात्स्वमातरं स्नेहात् प्रब्रवीहि तपोधन ॥ १४२॥

वैशंपायनः—

गुरोर्वचनमाज्ञाय व्यासः प्रीतोऽभवत्तदा ।
चिन्तयित्वा लोकवृत्तं मातुरङ्कमथाविशत् ॥ १४३॥

पुत्रस्पर्शात्तु लोकेषु नान्यत्सुखमतीव हि ।
व्यासं कमलपत्राक्षी परिष्वज्याश्रु वर्तयत् ॥ १४४॥

स्तन्यासारैः क्लिद्यमाना पुत्रमाघ्राय मूर्धनि ॥ १४५

वासवी—

पुत्रलाभात्परं लोके नास्तीह प्रसवार्थिनाम् ।
दुर्लभं चेति मन्येऽहं मया प्राप्तं महत्तपः ॥ १४६

महता तपसा तात महायोगबलेन च ।
मया त्वं हि महाप्राज्ञ लब्धोऽमृतमिवामरैः ॥ १४७

तस्मात्त्वं मामृषेः पुत्र त्यक्तुं नार्हसि सांप्रतम् ॥ १४७॥

वैशंपायनः—

एवमुक्तस्ततस्स्नेहाद् व्यासो मातरमब्रवीत् ॥ १४८

त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रायितो मुहुः ।

एतावन्मात्रया प्रीता भविष्येथा नृपात्मजे ॥ १४९
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥ १४९॥
स मातरमनुज्ञाप्य तपस्येव मनो दधे ॥ १५०
ततः कन्यामनुज्ञाय पुनः कन्या भवत्विति ।
पराशरोऽपि भगवान् पुत्रेण सहितो ययौ ॥ १५१
गत्वाश्रमपदं पुण्यम् अदृश्यन्त्याः पराशरः ।
जातकर्मादिसंस्कारं कारयामास धर्मतः ॥ १५२
कृतोपनयनो व्यासो याज्ञवल्क्येन भारत ।
वेदानधिजगौ साङ्गान् ओङ्कारेण त्रिमात्रया ॥ १५३
गुरवे दक्षिणां दत्त्वा तपः कर्तुं प्रचक्रमे ।
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ॥ १५४
द्वीपे न्यस्तस्स यद्बालस् तस्माद्द्वैपायनोऽभवत् ॥ १५४॥
पादापसारिणं धर्मं विद्वान् स तु युगे युगे ।
आयुश्शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च ॥ १५५॥
ब्रह्मर्षिब्राह्मणानां च तथाऽनुग्रहकाम्यया ।
विव्यास वेदान् यस्माच्च तस्माद्व्यास इति स्मृतः ॥ १५६॥
ततस्स महर्षिर्विद्वान् शिष्यानाहूय धर्मवित् ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥ १५७॥
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।

वेदानध्यापयामास महाभारतपञ्चमान् ॥ १५८॥
[1]संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिताः ॥ १५९
ततस्सत्यवती हृष्टा जगाम स्वं निवेशनम् ।
तस्यास्त्वायोजनाद्गन्धम् आजिघ्रन्ति नरा भुवि ॥ १६०
दाशराजस्तु तद्गन्धम् आजिघ्रन्प्रीतिमावहत् । १६०॥

दाशः—

त्वामाहुर्मत्स्यगन्धेति कथं बाले सुगन्धता ।
अपास्य मत्स्यगन्धत्वं केन दत्ता सुगन्धता ॥ १६१॥

सत्यवती—

शक्तेः पुत्रो महाप्राज्ञः पराशर इति स्मृतः ॥ १६२
नावं वाहयमानाया मम दृष्ट्वा सुगर्हितम् ।
अपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां ददौ ॥ १६३
ऋषेः प्रसादं दृष्ट्वा तु जनाः प्रीतिमुपागमन् ।
एवं लब्धो मया गन्धो न रोषं कर्तुमर्हसि ॥ १६४

वैशंपायनः—

दाशराजस्तु तद्वाक्यं प्रशशंस ननन्द च ।
एतत्पवित्रं पुण्यं च व्याससंभवमुत्तमम् ॥ १६५
इतिहासमिमं श्रुत्वा प्रजावन्तो भवन्ति वै ॥ १६५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥
॥ ६ ॥ आदिवंशावतारणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये १६५॥ श्लोकाः]

---

क-ख-ग—समाहितैः पृथक्त्वेन भारतं च प्रकीर्तितम् ।
वैशम्पायनः—

## ॥ चतुःपञ्चाशत्तमोऽध्यायः ॥

भीष्मादीनां पाण्डवादीनां च सङ्ग्रहेण जन्मकथनम् ॥ १ ॥

वैशंपायनः—

तथा भीष्मश्शान्तनवो गङ्गायाममितद्युतिः ।
वसुवीर्यात् समभवन्महावीर्यो महायशाः ॥ १
शूले प्रोतः पुराणर्षिर् अचोरश्चोरशङ्कया ।
आणिमाण्डव्य इति वै विख्यातस्सुमहायशाः ॥ २
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ।
इषीकया मया बाल्याद् एका विद्धा शकुन्तिका ॥ ३
किल्बिषं तद्भवेद्धर्म नान्यत्पापमहं स्मरे ।
तन्मे सहस्व समितं कस्मान्नेहाजयत्तपः ॥ ४
गरीयान्ब्राह्मणवधस् सर्वभूतवधाद्यतः ।
तस्मात्त्वं किल्बिषादस्माच् छूद्रयोनौ भविष्यसि ॥ ५
तेन [1]शापेन धर्मोऽपि शूद्रयोनावजायत ।
विद्वान् बिदुररूपेण धार्मिकः किल्बिषात्ततः ॥ ६
संजयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् ।
सूर्याच्च कुन्त्यां कन्यायां जज्ञे कर्णो महारथः ॥ ७

1. क-ख-ग—पापेन

सहजं कवचं बिभ्रत् कुण्डलद्योतिताननः ॥ ७॥
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥ ८॥
अनादिनिधनो देवस् साक्षाल्लोकेश्वरः प्रभुः ॥ ९
आदेरादिस्समस्तानां स कर्ता नकृतः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं निर्गुणात्मकम् ॥ १०
आत्मानमव्ययं चैव प्रकृतेः प्रभवं परम् ।
पुरुषं विश्वकर्माणं सत्ययोगं ध्रुवाक्षरम् ॥ ११
[1]अनन्तमचलं मेरुं हंसं नारायणं प्रभुम् ।
धातारमजरं नित्यं यमाहुः परमव्ययम् ॥ १२
पुरुषस्स विभुः कर्ता सर्वभूतापितामहः ।
धर्मसंस्थापनार्थाय संजज्ञेऽन्धकवृष्णिषु ॥ १३
अस्त्रज्ञौ तु महावीर्यौ सर्वशास्त्रविशारदौ ।
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ ॥ १४
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ॥ १४॥
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत ।
महर्षेरुग्रतपसस् तस्माद्द्रोणो व्यजायत ॥ १५॥
गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ॥ १६

---

1. क-ख-ग—अनन्ततल्पं तं मेरुं

अश्वत्थाम्नश्च जननी कृपश्चैव महारथः ॥ १६॥

अश्वत्थामा ततो जज्ञे द्रोणादस्त्रभृतां वरः ।
धृष्टद्युम्नविनाशाय सृष्टो धात्रा महात्मना ॥ १७॥
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः ।
वैताने कर्मणि ततः पावकात्समजायत ॥ १८॥
वीरो द्रोणविनाशाय धनुषा सह वीर्यवान् ॥ १९

तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ॥ २०

प्रह्लादशिष्यो नग्नजित् सुबलश्चाभवत्तदा ।
तस्य प्रजा धर्मधात्री जज्ञे देवप्रकोपनात् ॥ २१

गान्धारराजात्सुबलाच्च् शकुनिस्सौबलस्तथा ।
दुर्योधनस्य माता च जज्ञातेऽर्थविदावुभौ ॥ २२

कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः ।
क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ॥ २३

पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् ।
द्वयोस्स्त्रियोर्गुणज्येष्ठस् तेषामासीद्युधिष्ठिरः ॥ २४

धर्माद्युधिष्ठिरो जज्ञे मारुतात्तु वृकोदरः ।
इन्द्राद्धनंजयो जज्ञे सर्वशस्त्रविशारदः ॥ २५

जज्ञाते रूपसंपन्नावश्विभ्यां तु यमावपि ।
नकुलस्सहदेवश्च गुरुशुश्रूषणे रतौ ॥ २६

तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुचरमास्तथा ॥ २७

अभिमन्युस्सुभद्रायाम् अर्जुनादभ्यजायत ।
स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥ २८

पाण्डवेभ्यो हि पञ्चभ्यः कृष्णायां पञ्च जज्ञिरे ।
कुमारा रूपसंपन्नास् सर्वशस्त्रविशारदाः ॥ २९

प्रतिविन्ध्यो युधिष्ठिरात् सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ३०

तथैव सहदेवाच्च श्रुतसेनः प्रतापवान् ।
हिडिम्बायां तु भीमस्य वने जज्ञे घटोत्कचः ॥ ३१

शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता ।
यां यक्षः पुरुषं चक्रे स्थाणुप्रियचिकीर्षया ॥ ३२

कुरूणां विग्रहे तस्मिन् समाजग्मुर्बहून्यथ ।
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे ॥ ३३

तेषामपरिमेयानि नामधेयानि सर्वशः ।

न शक्यं परिसंख्यातुं वर्षाणामयुतैरपि ॥ ३४

एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् । ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥
॥ ६ ॥ आदिवंशावतारणपर्वणि [1]षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः ।]

---

## ॥ पञ्चपञ्चाशत्तमोऽध्यायः ॥

भूभारहरणायेन्द्रेणावतारार्थं नारायणप्रार्थना ॥ १ ॥

जनमेजयः—

य एते कीर्तिता ब्रह्मन् ये चान्ये नानुकीर्तिताः ।
सम्यक् तान् ज्ञातुमिच्छामि राज्ञश्चान्यान् सुवर्चसः ॥ १

यदर्थमिह संभूता देवकल्पा महारथाः ।
भुवि तान् मे महाभाग सम्यगाख्यातुमर्हसि ॥ २

वैशम्पायनः—

रहस्यं यदिदं राजन् देवानामृषितश्श्रुतम् ।
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ॥ ३

त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा ।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ ४

---

1. क-ख-ग—कोशेषु अत्रैव पंचमाध्यायसमाप्तिः—

तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान्क्षत्रिया राजन् गर्भार्थिन्योऽभिचक्रमुः ॥ ५
ताभिस्सह समापेतुर् ब्राह्मणास्संशितव्रताः ।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ६
तेभ्यस्तु लेभिरे गर्भान् क्षत्रियास्तास्सहस्रशः ।
ततस्सुषुविरे राजन् क्षत्रियान् वीरसत्तमान् ॥ ७
कुमारांश्च कुमारीश्च पुनः क्षात्रियवृद्धये ॥ ७॥
एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ।
जातमृध्यत धर्मेण सुदीर्घेणायुषान्वितम् ॥ ८॥
चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तमाः ॥ ९
अभ्यगच्छंस्ततो नारीं नाकामान्नानृतौ तथा ॥ ९॥
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि ।
ऋतौ हि दारान् गच्छन्ति सर्वाणि भरतर्षभ ॥ १०॥
ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः ॥ ११
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः ।
आधिभिर्व्याधिभिश्चैव विमुक्ता[1]स्सुखमाप्नुयुः ॥ १२
अथेमां [2]सागरापाङ्गां नरेन्द्रेन्द्र धरां किल ।
अध्यतिष्ठत् पुनः क्षत्रं सशैलवनकाननाम् ॥ १३

1. क-ख-ग—शतशो नराः 2. क-ख-ग—सागरोपान्तां

प्रशासति पुनः क्षत्रे धर्मेणेमां वसुन्धराम् ।
ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमाम् ॥ १४

कामक्रोधोद्भवान्दोषान् निरस्य च नराधिपाः ।
धर्मेण दण्डं दण्ड्येषु दण्डयन्तोऽन्वपालयन् ॥ १५

तथा धर्मपरे क्षत्रे सहस्राक्षश्शतक्रतुः ।
स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः ॥ १६

न बाल एव म्रियते तदा कश्चिन्नराधिप ।
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः ॥ १७

एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ ।
इयं सागरपर्यन्ता समापूर्यत मेदिनी ॥ १८

ईजिरे च महायज्ञैः क्षत्रिया भूरिदक्षिणैः ।
साङ्गोपनिषदान्वेदान् विप्राश्चाधीयिरे तदा ॥ १९

न च विक्रीणते ब्रह्म ब्राह्मणाश्च तदा नृप ।
न च शूद्रसमभ्याशे वेदानुच्चारयन्त्युत ॥ २०

कारयन्तः कृषिं गोभिस् तथा वैश्याः क्षिताविह ।
परामयुञ्जन्त धुरि कृशाङ्गां चाप्यजीवयन् ॥ २१

फेनपांश्च तथा वत्सान् न दुहन्ति स्म मानवाः ।
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥ २२

कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः ।
धर्ममेवानुपश्यन्तश्च चक्रुर्धर्मपरायणाः ॥ २३
स्वकर्मनिरताश्चासन् सर्वे वर्णा नराधिप ।
धर्ममेवानुवर्तन्ते न पश्यन्ति स्म किल्बिषम् ॥ २४
बभूवुः कर्मसु स्वेषु सम्यक् सर्वाः प्रजास्स्थिताः ।
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् ॥ २५
काले [1]गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।
फलन्त्यृतुषु वृक्षाश्च पुष्पाणि च फलानि च ॥ २६
एवं कृतयुगे सम्यग् वर्तमाने तदा नृप ।
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥ २७
ततः[2]समुदिते लोके मानुषैर्भरतर्षभ ।
असुरा जज्ञिरे क्षेत्रे राज्ञां मनुजपुङ्गव ॥ २८
आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि ।
ऐश्वर्याद्भ्रंशिताश्चैव संबभूवुः क्षिताविह ॥ २९
इह देवत्वमिच्छन्तो मानुषेषु [3]तपस्विनः ।
जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ ३०
गोष्वश्वेषु च राजेन्द्र खरोष्ट्र[4]महिषेषु च ।
क्रव्यादेषु च भूतेषु गजेषु च मृगेषु च ॥ ३१

---

1. क-ख-ग—नैव
2. क-ख-ग—प्रमुदिते लोके मानुषे
3. क-ख-ग—मन
4. क-ख-ग—मानुषेषु च

जातैरिह महीपाल जायमानैश्च तैर्मही ।
न शशाकात्मनात्मानम् इयं धारयितुं तदा ॥ ३२
अथ जाता महीपालाः केचिन्मदबलान्विताः ।
दितेः पुत्रा दनोश्चैव देवलोकादिह च्युताः ॥ ३३
वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् ।
इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥ ३४
ब्राह्मणान्क्षत्रियान्वैश्यांस् तथा [1]शूद्रानपीडयन् ।
अन्यानि चैव भूतानि पीडयामासुरोजसा ॥ ३५
त्रासयन्तो विनिघ्नन्तस् तांस्तान् भूतगणांश्च ते ।
विचेरुस्सर्वतो राजन् महीं शतसहस्रशः ॥ ३६
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।
अब्रह्मण्या वीर्यमदा मत्ता मद[2]बलेन च ॥ ३७
एवं वीर्य[3]बलोत्सिक्तैर् भूरियं तैर्महासुरैः ।
पीड्यमाना महीपाल ब्रह्माणमुपचक्रमे ॥ ३८
[4]न हीमां सवनां राजन् नानाकाननगां महीम् ।
तदा धारयितुं शे[5]कुराक्रान्तां दानवैर्बलात् ॥ ३९
ततो मही महीपाल भारार्ता भयपीडिता ।

---

क-ख-ग— { 1. शूद्रांश्चैव प्रपीडयन् 2. बलान्विताः 3. मदोन्मत्तैः
4. न हीमान्सवना राजन् नानारूपान्मही तदा ।

5. ख-ग—शोके आक्रान्ता

जगाम शरणं देवं सर्व[1]लोकपितामहम्॥ ४०

सा सं[2]युतं महाभागैर् देवद्विजमहर्षिभिः ।
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ॥ ४१

गन्धर्वैरप्सरोभिश्च वन्दिकर्मसु निष्ठितैः ।
वन्द्यमानं मुदोपेतैर् ववन्दे चैनमेत्य सा ॥ ४२

अथ विज्ञापयामास भूमिस्तं शरणैषिणी ।
सन्निधौ लोकपालानां सर्वेषामेव भारत ॥ ४३

[3]तत्प्रयाणात्पुरा तस्या भूमेः कृत्यं स्वयंभुवः ।
पूर्वमेवाभवद्राजन् विदितं परमेष्ठिना ॥ ४४

स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत ।
सुरासुराणां [4]सर्वेषां मानुषाणां मनोगतम् ॥ ४५

तामुवाच महा[5]तेजा भूमिं भूमिपतिर्विभुः ।
प्रभवस्सर्वभूतानाम् ईशश्शंभुः प्रजापतिः ॥ ४६

यदर्थमसि संप्राप्ता मत्सकाशं वसुन्धरे ।
तदर्थं सन्नियोक्ष्यामि सर्वानेव दिवौकसः ॥ ४७

उत्तिष्ठ गच्छ वसुधे स्वस्थानमिति साऽगमत् ।
इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च ॥ ४८

---

क-ख-ग— { 1. भूत 2. वृ 3. तत्प्रमादादृते 4. लोकानामशेषाणां
5. राज

आदिदेश तदा सर्वान् विबुधान्भूतकृत्स्वयम् ॥ ४८॥
अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक् ।
अस्यामेव प्रसूयध्वं तिरोधायेति चाब्रवीत् ॥ ४९॥
तथैव च समानीय गन्धर्वाप्सरसां गणान् ।
उवाच भगवान्सर्वान् इदं वचनमुत्तरम् ॥ ५०॥
स्वैस्स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेष्विति ॥ ५१
अथ शक्रादयस्सर्वे श्रुत्वा सुरगुरोर्वचः ।
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ॥ ५२
अथ ते सर्वशोंशैस्स्वैर् गन्तुं भूमिं कृतक्षणाः ।
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ ५३
[1]यस्स चक्रगदापाणिः पीतवासास्सितप्रभः ।
पद्मनाभस्सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ॥ ५४
तं भुवश्शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरस्वेति तथेत्याह च तं हरिः ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥
॥ ६ ॥ आदिवंशावतारणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ५५ श्लोकाः ।]
॥ आदिवंशावतारणपर्व समाप्तम् ॥

---

1. क-ख-ग—शङ्ख

## ॥ षट्पञ्चाशत्तमोऽध्यायः ॥

(अथ संभवपर्व)



अदित्यादिदक्षकन्यावंशकथनम् ॥ १ ॥



वैशंपायनः--

अथ नारायणेनेन्द्रश्च चकार सह संविदम् ।
अवतर्तुं महीं स्वर्गाद् भागशस्सहितस्सुरैः ॥ १

आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः ।
निर्जगाम पुनस्तस्मात् साक्षान्नारायणस्य ह ॥ २

ते सुरारिविनाशाय सर्वलोकहिताय च ।
अवतेरुः क्रमेणेयं महीं स्वर्गाद्दिवौकसः ॥ ३

ततो ब्रह्मर्षिवंशेषु राजर्षीणां कुलेषु च ।
जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ॥ ४

[1]दानवान् राक्षसांश्चैव गन्धर्वान् पन्नगांस्तथा ।
पुरुषादान्यनेकानि जघ्नुस्सत्वान्यनेकशः ॥ ५

दानवानां च ये मुख्यास् तथा भुजगरक्षसाम् ।
ये तान् बलस्थान् बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ६

1. क-ख-ग—दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा ।

जनमेजयः—

देवदानवसङ्घानां गन्धर्वाप्सरसां तथा ।
[1]मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ॥ ७

श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः ।
प्राणिनां चैव सर्वेषां सर्वशस्सर्वविद्ध्यसि ॥ ८

वैशंपायनः—

हन्त ते कथयिष्यामि नमस्कृत्य स्वयंभुवे ।
सुरादीनामहं सम्यक्[2]संभवं कृत्स्नमादितः ॥ ९

ब्रह्मणो मानसाः पुत्रा विदिताष्षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ १०

मरीचेः काश्यपः पुत्रः काश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥ ११

अदितिर्दितिर्दनुः काला अनायुस्सिंहिका मुनिः ।
क्रोधा प्रवाह्यरिष्टा च विनता कपिला तथा ॥ १२

कद्रूश्च पुरुषव्याघ्र दक्षकन्याश्च भारत ।
एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् ॥ १३

अदित्यां द्वादशादित्यास् संभूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत ॥ १४

---

1. क-ख-ग—मानुषेषु च सर्वेषां तथाहं
2. क-ख-ग—लोकानां प्रभवाप्ययौ ।

धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान् पूषा च सविता दशमस्तथा ॥ १५
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ॥ १५॥
जघन्यजश्च सर्वेषाम् आदित्यानां गुणाधिकः ॥ १६
एक एव दितेः पुत्रो हिरण्यकशिपुस्स्मृतः ।
नाम्ना ख्यातास्तु तस्यैते पञ्च पुत्रा महात्मनः ॥ १७
प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम् ।
अनुह्लादस्तृतीयोऽभूत् तस्माच्च शिबिबाष्कलौ ॥ १८
प्रह्लादस्य त्रयः पुत्राः ख्यातास्सर्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति विश्रुताः ॥ १९
विरोचनस्य पुत्रोऽभूद् बलिरेकः प्रतापवान् ।
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः ॥ २०
चत्वारिंशद्दनोः पुत्राः ख्यातास्सर्वत्र भारत ।
तेषां प्रथमजो राजन् विप्रचित्तिर्महायशाः ॥ २१
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुताः ।
असिलोमा च केशी च दुर्जयश्चैव दानवः ॥ २२
अयश्शिरा अश्वशिरा अयश्शङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवान् केतुमांश्च यः ॥ २३
स्वर्भानुरश्वोऽश्वपतिर् वृषपर्वाऽजकस्तथा ॥ २३॥

अश्वग्रीवश्च सूक्ष्मश्च गुल्गुण्डश्च महाबलः ।
खस्रवश्चैकवित्तश्च विरूपाक्षो महासुरः ॥ २४॥
निचन्द्रश्च निकुम्भश्च कुपथः कापथस्तथा ॥ २५
शारदश्शरभश्चैव सूर्याचन्द्रमसौ तथा ।
इत्याख्याता दनोर्वंशे दानवाः परिकीर्तिताः ॥ २६
अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ तथा ॥ २६॥
इमे च वंशाः प्रथितास् सत्यवन्तो महाबलाः ।
दनोः पुत्रान्वये जाता दश दानवपुङ्गवाः ॥ २७॥
एकाक्षो मृतपो वीरः प्रलम्बनरकावपि ।
वातापिश्शत्रुसहनस् सदश्चैव महासुरः ॥ २८॥
गविष्ठश्च दनायुश्च दीर्घजिह्वश्च दानवः ।
असङ्ख्येयास्स्मृतास्तेषां पुत्रपौत्राश्च भारत ॥ २९॥
सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कसूदनम् ।
सुचन्द्रं चन्द्रहर्तारं तथा चन्द्रविमर्दनम् ॥ ३०॥
क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम् ।
गणः क्रोधवशो नाम क्रूरकर्माऽरिमर्दनः ॥ ३१॥
अनायुषः पुनः पुत्राश् चत्वारोऽसुरसंमताः ।
विक्षरश्च प्रवीरश्च पुत्रश्चैव महासुरः ॥ ३२॥
कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ।
भुवि ख्याता महावीर्या दानवेषु परन्तप ॥ ३३॥

विनाशनश्च क्रोधश्च क्रोधहन्ता च वीर्यवान् ।
विवर्धनश्च क्रोधश्च कालकेया महासुराः ॥ ३४॥

असुराणामुपाध्यायश् शुक्रो भृगुसुतोऽभवत् ।
ख्याताश्चोशनसः पुत्राश् चत्वारोऽसुरयाजकाः ॥ ३५॥

त्वष्टा परस्तथात्रिश्च द्वावन्यौ भद्रकार्मिणौ ।
तेजसा सूर्यसंकाशा ब्रह्मलोकप्रभावनाः ॥ ३६॥

इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ।
असुराणां सुराणां च पुराणे संश्रुतो मया ॥ ३७॥

एतेषां यदपत्यं तु न शक्यं तदशेषतः ।
प्रसंख्यातुं महीपाल गणभूतमनन्तकम् ॥ ३८॥

तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेया इति स्मृताः ॥ ३९॥

शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
कूर्मश्च कुललश्चैव काद्रवेया महाबलाः ॥ ४०॥

भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥ ४१॥

पुत्रवानर्कवर्णश्च पृथुगश्चापि विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातस्सर्वविद्वशी ॥ ४२॥

---

1. अ – इशुक्रपुत्रास्स्वकैरृषिः ।

तथा गाधिशिरा राजन् धृष्टद्युम्नश्चतुर्दशः ।
कलः पञ्चदशश्चैव नारदश्चैव षोडशः ॥ ४३॥
इत्येते देवगन्धर्वा मुनयः परिकीर्तिताः ॥ ४४
ततस्तु भूतान्यन्यानि कीर्तयिष्यामि भारत ॥ ४४॥
अनवद्यानुपगमां मदिरां मार्गणप्रियाम् ।
अनलां सुभगां भासाम् इति प्रावा व्यजायत ॥ ४५॥
सिद्धिः पूर्णश्च बर्ह्वी च पूर्णाशश्च महायशाः ।
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ॥ ४६॥
विश्वावसुश्च भानुश्च सुभद्रो दशमस्तथा ।
इत्येते देवगन्धर्वाः प्रावेयाः परिकीर्तिताः ॥ ४७॥
इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ॥ ४८
अरिष्टा सुमहाभागा देवी देवर्षितः पुरा ।
अलम्बुसा मिश्रकेशी विद्युद्वर्णा दुलानघा ॥ ४९
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ।
असिता च सुबाहुश्च सुव्रता सुभुजा तथा ॥ ५०
[1]हंसो ज्येष्ठस्त्वरिष्टाया विख्यातश्च महाहनुः ।
हाहा हूहूस्तुम्बुरुश्च चत्वारो ग (न्ध)र्वसत्तमाः ॥ ५१

---

1. क-ख-ग—जानी बाहुश्च विख्याता हाहा हूहूः पुनस्तथा ।
तुम्बुरुश्चैव चत्वारस् स्मृता गन्धर्वसत्तमाः ॥

अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा ।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ॥ ५२

इति ते सर्वदेवानां संभवः कथितो मया ।
यथावत्संपरिख्यातो गन्धर्वाप्सरसां तथा ॥ ५३

भुजंगानां सुपर्णानाम् असुराणां तथैवच ।
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम् ॥ ५४

आयुष्यं चैव पुण्यं च धन्यं श्रुतिसुखावहम् ।
श्रोतव्यं चैव सततं श्राव्यं चैवानसूयता ॥ ५५

इमं तु वंशं नियमेन यः पठन्
महात्मनां ब्राह्मणवर्यसन्निधौ ।
अपत्यलाभं लभते च पुष्कलं
श्रियं यशः प्रेत्य च शोभनां गतिम् ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

॥ ७ ॥ संभवपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ५६ श्लोकाः]

---

*

## ॥ सप्तपञ्चाशत्तमोऽध्यायः ॥

ऋष्यादिवंशकथनम् ॥ १ ॥

वैशंपायनः—

ब्रह्मणो मानसाः पुत्रा विदिताष्षण्महर्षयः ।
एकादश तथा रुद्राः स्थाणोश्चैवेति मानसाः ॥ १

मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ॥ २

भवनश्चेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भवश्च भगवान् रुद्रा एकादश स्मृताः ॥ ३

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥ ४

त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।
बृहस्पतिरुचथ्यश्च संवर्तश्च दृढव्रताः ॥ ५

अत्रेस्तु बहवः पुत्राश् श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदस्सिद्धाश् शान्तात्मानो महर्षयः ॥ ६

राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा ।
पुलहस्य मृगास्सिंहाः व्याघ्रा यक्षा महामृगाः ॥ ७

क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ ८
अङ्गुष्ठाद्दक्षिणाद्दक्ष उत्पन्नो भगवानृषिः ।
ब्रह्मणः पृथिवीपाल पुत्रः पुत्रवतां वरः ॥ ९
महर्षेस्तस्य भार्या तु वामाङ्गुष्ठादजायत ।
तस्यां पञ्चाशतं कन्यास् स एवाजनयत्प्रभुः ॥ १०
तास्सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः ।
पुत्रिकास्स्थापयामास स्रष्टुः पुत्रः प्रजापतिः ॥ ११
ददौ स दश धर्माय सप्तविंशतिमिन्दवे ।
दिव्येन विधिना राजन् कश्यपाय त्रयोदश ॥ १२
नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिश्श्रद्धा क्रिया तथा ॥ १३
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ।
भार्या ह्येताश्च धर्मस्य विहिताश्च स्वयंभुवा ॥ १४
सप्तविंशतिस्सोमस्य पत्न्यो लोकपरिश्रुताः ।
कालस्य नयने युक्ता धर्मपत्न्यश्शुचिव्रताः ॥ १५
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधौ स्थिताः ॥ १५॥
पितामहान्मुनिर्देवस् तस्य पुत्रः प्रजापतिः ।
तस्याष्टौ वसवः पुत्रास् तेषां वक्ष्यामि विस्तरम् ॥ १६॥

धरो ध्रुवश्चन्द्रमाश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥ १७॥

धूम्रायाश्च धरः पुत्रो ब्रह्मविद्यासुतो ध्रुवः ।
चन्द्रमाश्च मनस्विन्याः श्वसायाः श्वसनस्तथा ॥ १८॥

रसायाश्च रसः पुत्रश् शाण्डिल्याया हुताशनः ।
प्रत्यूषश्च प्रभासश्च प्रभासायास्सुतौ स्मृतौ ॥ १९॥

धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
आपस्य पुत्रो [1]वा तस्य श्रुतश्शान्तो मुनिस्तथा ॥ २०॥
ध्रुवस्य पुत्रो भगवान् [2]कालो लोकप्रकाशनः ॥ २१

सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते ।
मनोहरायाश्शिशिरः प्राणोऽथ रमणस्तथा ॥ २२

अग्नेस्स्मृतस्सुतो ज्योतिश् श्रुतश्शान्तस्तथा मुनिः ।
अग्नेः पुत्रः कुमारस्तु श्रीमाञ्छरवणालयः ॥ २३

तस्य शाखो विशाखश्च नैगमेषश्च पृष्ठतः ।
कृत्तिकास्तन्यपानैश्च कार्तिकेय इति स्मृतः ॥ २४

अनिलस्य शिवा भार्या तस्याः पुत्रः पुरोजयः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ २५

---

1. क-ग—वातण्ड्यः श्रम श्श्रान्तो
2 क-ख-ग—लोकालोकप्रकाशनः

प्रत्यूषसो विदुः पुत्र ऋषिर्नाम्ना तु देवलः ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ २६

बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्सर्वम् असक्ता विचरत्युत ॥ २७

प्रभासस्य तु भार्या सा वसूनामष्टमस्य च ।
प्रासूत विश्वकर्माणं सर्वशिल्पवतां वरम् ॥ २८

विश्वकर्मा महाभागो जज्ञे शिल्पी प्रजापतिः ।
कर्ता शिल्पिसहस्राणां त्रिदशानां च वर्धकी ॥ २९

भूषणानां च सर्वेषां कर्ता सर्वविदां वरः ।
यो दिव्यानि विमानानि देवतानां चकार ह ॥ ३०

मनुष्याश्चोपजीवन्ति तस्य शिल्पं महात्मनः ।
पूजयन्ति च तं नित्यं विश्वकर्माणमव्ययम् ॥ ३१

स्तनं तु दक्षिणं भित्त्वा ब्रह्मणः परमेष्ठिनः ।
निस्सृतो भगवान्धर्मस् सर्वलोकसुखावहः ॥ ३२

त्रयस्तस्य वराः पुत्रास् सर्वभूतमनोरमाः ।
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ३३

कामस्य तु रतिर्भार्या शमस्य प्रीतिरङ्गना ।
नन्दी तु भार्या हर्षस्य यत्र लोकाः प्रतिष्ठिताः ॥ ३४

मरीचेः काश्यपः पुत्रः काश्यपस्य सुरासुराः ।

जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ३५

त्वाष्ट्री तु सवितुर्भार्या बडबारूपधारिणी ।
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ ३६

द्वादशैवादितेः पुत्राश् शक्रमुख्या नराधिप ।
तेषामवरजो विष्णुर् यत्र लोकाः प्रतिष्ठिताः ॥ ३७

त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव ।
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ ३८

रुद्राणामपरः पक्षः साध्यानां मरुतां तथा ।
वसूनां भार्गवं विद्याद् विश्वान्देवांस्तथैव च ॥ ३९

वैनतेयस्तु गरुडो बलवानरुणस्तथा ।
बृहस्पतिश्च भगवान् आदित्येष्वेव गण्यते ॥ ४०

अश्विनौ गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।
एष देवगणो राजन् कीर्तितस्तेऽनुपूर्वशः ॥ ४१

यत्कीर्तयित्वा मनुजः [1]सर्वपापैः प्रमुच्यते ॥ ४१॥

ब्रह्मणो हृदयं भित्त्वा निर्गतो भगवान्भृगुः ॥ ४२

भृगोः पुत्रः कविर्विप्रश् शुक्रः कविसुतस्स्मृतः ॥ ४२॥

त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे नयानये ।
स्वयंभुवा नियुक्तस्सन् भुवनं परिधावति ॥ ४३॥

1. क-ख-ग—प्रजामिष्टामवाप्नुयात् ।

योगाचार्यो महाविद्यो दैत्यानामभवद्गुरुः ।
सुराणामहिते युक्तो ब्रह्मचारी यतव्रतः ॥ ४४॥
तस्मिन्नियुक्ते विभुना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ ४५॥
च्यवनं दीप्ततपसं धर्मात्मानं यतव्रतम् ।
यस्स रोषाच्च्युतो गर्भो मातुः क्षेमाय भारत ॥ ४६॥
[1]मानुषी तु पुरा याऽऽसीत् तस्य पत्नी मनीषिणः ।
और्वस्तस्या ऋषिः पुत्र ऊरुं भित्त्वा विनिर्गतः ॥ ४७॥
महाबलो महातेजा बाल एव गुणैर्युतः ।
ऋचीकस्तस्य पुत्रस्तु जमदग्निरथोऽभवत् ॥ ४८॥
जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ।
रामस्तेषां जघन्योऽभूद् अजघन्यैर्गुणैर्वृतः ॥ ४९॥
सर्वशस्त्रास्त्रकुशलः क्षत्रियान्तकरो वशी ॥ ५०
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भुवि विस्तराः ॥ ५१
[2]द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति वै जगत् ।
लोके धाता विधाता च चरतो मनुना सह ॥ ५२
तयोस्तु भगिनी ज्येष्ठा लक्ष्मीः पद्मगृहा शुभा ॥ ५३॥

1. क-ख-ग—मारीषा तु मनोः कन्या 2. यौ पुत्रौ तु भृगोस्त्वन्यौ

तस्यास्तु मानसाः पुत्रा वचसा व्योमचारिणः ॥ ५३

वरुणस्य भार्या ज्येष्ठाऽभूच्छुक्राद्देवी व्यजायत ।
तस्याः पुत्रशतं विद्धि सुरां च सुरनन्दिनीम् ॥ ५४

प्रजानामन्नकामानाम् अन्योन्यपरिभक्षणात् ।
अधर्मस्तत्र संजातस् सर्वभूतविनाशनः ॥ ५५

तस्यापि निर्ऋतिर्भार्या नैर्ऋता ये तु राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरतास्सदा ॥ ५६

भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ॥ ५६॥

श्येनां क्रौञ्चीं च भासीं च धृतराष्ट्रीं तथा शुकीम् ॥ ५७

ताम्राऽपि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ॥ ५७॥

[1]द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ॥ ५८

भार्यारुणस्य श्येनी तु वीर्यवन्तौ महाबलौ ।
सम्पातिं जनयामास तथैव च जटायुषम् ॥ ५९

भार्या गरुत्मतश्चैव भासी क्रौञ्ची तथा शुकी ।
चतुर्थी धृतराष्ट्री च तास्वपत्यं निबोध मे ॥ ६०

क्रौञ्ची तु सुषुवे क्रौञ्चान् भासी भासान् व्यजायत ॥ ६०॥

---

1. क-ख-ग—उलूकान्सुषुवे क्रौञ्ची भासी भासान्व्यजायत ॥
श्येनी श्येनांश्च गृध्रांश्च जनयामास तेजसा ॥
[अधिकः पाठः]

धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रं ते विजज्ञे भरतर्षभ ॥ ६१॥
शुकी विजज्ञे धर्मज्ञ शुकानेव यशस्विनी ।
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ॥ ६२॥
ततः क्रोधवशा नाम विजज्ञे भरतर्षभ ।
मृगीं च मृगमन्दां च हरीं भद्रमदामपि ॥ ६३॥
मातङ्गीं त्वथ शार्दूलीं श्वेतां सुरभिमेव च ।
सर्वलक्षणसंपन्नां सुरसां च यशस्विनीम् ॥ ६४॥
अपत्यं तु मृगास्सर्वे मृग्या नरवरात्मज ।
ऋक्षाश्च मृगमन्दायास् सृमराश्चमरा अपि ॥ ६५॥
ततस्त्वैरावतं नागं जज्ञे भद्रमदा सुतम् ।
ऐरावतस्सुतस्तस्या देवनागो महागजः ॥ ६६॥
हर्याश्च हरयोऽपत्यं वानराश्च मनास्विनः ।
गोलाङ्गूलाश्च भद्रं ते विज्ञातव्या हरीसुताः ॥ ६७॥
प्रजज्ञे त्वथ शार्दूली सिंहान् व्याघ्रांश्च भारत ।
द्वीपिनश्च सुतास्तस्याः सर्वे चैव महाबलाः ॥ ६८॥
मातङ्गास्त्वथ मातङ्ग्या अपत्यानि नराधिप ।
दिशागजं तु श्वेताक्षं श्वेताऽजनयदाशुगम् ॥ ६९॥
तथा दुहितरौ राजन् सुरभिर्वै व्यजायत ।

रोहिणीं चैव भद्रं ते गन्धर्वीं तु यशस्विनीम् ॥ ७०॥
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनस्सुताः ॥ ७१
सुरसाऽजनयत्सर्पान् [1]छतमेकशिरोधरान् ।
[2]सुरसा कन्यका जातास् तिस्रः कमललोचनाः ॥ ७२
वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः ।
[3]अनला रुहा च द्वे प्रोक्ते वीरुधां चैव तास्स्मृताः ॥ ७३
गृह्णन्ति ये विना पुष्पं फलानि तरवः पृथक् ।
[4]अनलासुतास्ते विज्ञेयास् तानेवाहुर्वनस्पतीन् ॥ ७४
पुष्पैः फलग्रहान्वृक्षान् रुहायाः प्रसवान्विभो ॥ ७४॥
लतागुल्मानि वल्लयश्च त्वक्सारतृणजातयः ।
वीरुधायाः प्रजास्तास्स्युर् अत्र वंशस्समाप्यते ॥ ७५॥
सर्वपुण्यफलान् वृक्षान् अनलापि व्यजायत ।
अनला तु शुकीपुत्री कद्रुवा सुरसा सुता ॥ ७६॥
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ।
सम्पातिं जनयामास तथैव च जटायुषम् ॥ ७७॥
द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ॥ ७८
इत्येष सर्वभूतानां महतां मनुजाधिप ।
संभवः कीर्तितस्सम्यक् पूतो भवति पापतः ॥ ७९

---

क-ख-ग— 1. कद्रू राजंस्तु पन्नगान् । 2. इरायाः
3. लतारुहे 4. लता

यं श्रुत्वा पुरुषस्सम्यक् सर्वपापात्प्रमुच्यते ।
सर्वज्ञतां च लभते रतिमग्र्यां च विन्दति ॥ ८०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥
॥ ७ ॥ संभवपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ८० श्लोका.]

---

## ॥ अष्टपञ्चाशत्तमोऽध्यायः ॥

देवानां दानवानां च भूमावंशावतारकथनम् ॥ १ ॥

---

जनमेजयः—

[1]देवानां दानवानां च यक्षाणामथ रक्षसाम् ।
सिंहव्याघ्रमृगाणां च पन्नगानां पतत्रिणाम् ॥ १

अन्येषां चैव भूतानां सर्वेषां भगवन्नहम् ।
श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् ॥ २
जन्म कर्म च भूतानां सर्वेषामनु पूर्वशः ॥ २॥

वैशंपायनः—

मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः ।
नामतो बलतश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ ३॥

प्रथमं दानवांश्चैतांस् तेऽद्य वक्ष्यामि सर्वशः ॥ ४

---

1. क-ख-ग—सुराणामसुराणां च

विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातस् स आसीन्मनुजर्षभः ॥ ५

दितेः पुत्रस्तु यो राजन् हिरण्यकशिपुः पुरा ।
स जज्ञे मानुषे लोके शिशुपालो नरर्षभ ॥ ६

संह्लादस्तु महावीर्यः प्रह्लादस्यानुजस्तु यः ।
स शल्य इति विख्यातो जज्ञे बाह्लीकपुङ्गवः ॥ ७

अनुह्लादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः ।
[1]धृष्टकेतुरिति ख्यातस् स बभूव नरेश्वर ॥ ८

यस्तु राजञ्शिबिर्नाम दैतेयः परिकीर्तितः ।
द्रुम इत्यभिविख्या[2]तस् स आसीन्मनुजेश्वरः ॥ ९

बाष्कलो नाम यस्तेषाम् आसीदसुरपुङ्गवः ।
भगदत्त इति ख्यातस् स आसीन्मनुजेश्वरः ॥ १०

अयश्शिरा अश्वशिरा अयश्शङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवांश्चैव पञ्चमः ॥ ११

पञ्चैते जज्ञिरे राजन् वीर्यवन्तो महासुराः ।
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ॥ १२

केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् ।
अमितौजा इति ख्यातस् स जज्ञे मनुजर्षभ ॥ १३

---

1. अ. धृत । 2. क-ख-ग—तो जज्ञे वीरस्स पार्थिवः ।

स्वर्भानुरिति विख्यातश् श्रीमान् यस्तु महासुरः ।
उग्रसेन इति ख्यातस् सोग्रकर्मा नराधिप ॥ १४

यस्त्वश्व इति विख्यातस् स च शस्त्रभृतां वरः ।
अशोको नाम राजासीन्महावीर्यपराक्रमः ॥ १५

तस्मादवरजो यस्तु राजन् अश्वपतिस्स्मृतः ।
हैतेयस्सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ॥ १६

वृषपर्वेति विख्यात आसीद्यस्तु महासुरः ।
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १७

अगजस्त्वनुजो राजन् य आसीद्वृषपर्वणः ।
स मल्ल इति विख्यातः पृथिव्यामभवन्नृपः ॥ १८

अश्वग्रीव इति ख्यातस् सत्यवाक्यो महासुरः ।
रोचमान इति ख्यातः पृथिव्यामभवन्नृपः ॥ १९

सूक्ष्मस्तु सुमती राजन् कीर्तिमान् यः प्रकीर्तितः ।
बृहन्त इति विख्यातः क्षितावासीत् स पार्थिवः ॥ २०

[1]हुतण्ड इति विख्यातो य आसीदसुरोत्तमः ।
सेना[2]बन्धुरिति ख्यातस् स बभूव नराधिपः ॥ २१

खस्रवो नाम यस्तेषाम् असुराणां पुरोगमः ।

---

1. क-ख-ग—कुम्भाण्ड 2. क-ख-ग—बिन्दु

रिपुजिन्नाम राजर्षिर् बभूव भुवि विश्रुतः ॥ २२
एकचक्र इति ख्यातो य आसीत्तु महासुरः ।
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ ॥ २३
विरूपाक्षस्तु दैतेयश् चित्रयोधी महासुरः ।
चित्रवर्मेति विख्यातः क्षितावासीत्स पार्थिवः ॥ २४
हरस्त्वतिरथो राजन् आसीद्यो दानवर्षभः ।
सुबाहुरिति विख्यातस् स जज्ञे मनुजर्षभः ॥ २५
[1]अहरस्तु महातेजाश् शत्रुपक्षभयंकरः ।
बाह्लिको नाम राजाऽऽसीद् बभूव प्रथितः क्षितौ ॥ २६
निचन्द्रश्चातिवक्त्रस्तु य आसीद्दानवोत्तमः ।
सुचन्द्र इति विख्यातो भूमावासीत् स पार्थिवः ॥ २७
निकुम्भस्त्वजितस्संख्ये महा[2]नसुरसत्तमः ।
भूमौ भूमिपतिश्रेष्ठो देवाधिक इति श्रुतः ॥ २८
शरभो नाम यस्तेषां दैतेयानां महासुरः ।
पौरवो नाम राजर्षिस् स बभूव नरेष्विह ॥ २९
कापथस्तु महावीरो बभूव किल योऽसुरः ।
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः । ३०

---

1. क-ख-ग—चित्रयोधी महाराजन् आसीद्यो दानवर्षभः ॥
[अधिकः पाठः]

2. क-ख—मतिरजायत

[1]क्रथस्तु राजन्राजर्षिः क्षितौ जज्ञे महासुरः ।
पार्वतेय इति ख्यातः काञ्चनाचलसन्निभः ॥ ३१

द्वितीयश्शरभस्तेषाम् असुराणां बभूव यः ।
प्रह्लादो नाम बाह्लीको जज्ञे भूपः परन्तप ॥ ३२

चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपो मतः ।
चन्द्रवर्मेति विख्यातः काम्भोजानां नराधिपः ॥ ३३

अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः ।
[2]इर्षीको नाम राजाऽऽसीद् बभूव ऋषिसत्तमः ॥ ३४

[3]मृतपा इति विख्यातो य आसीदसुरोत्तमः ।
[4]पश्चिनामपकं विद्धि तं नृपं नृपसत्तम ॥ ३५

गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः ।
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ३६

मयूर इति विख्यातश् श्रीमान् यस्तु महासुरः ।
स विश्व इति विख्यातो बभूव पृथिवीपतिः ॥ ३७

दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ।
काशिराज इति ख्यातः पृथिव्यां प्रथितो नृपः ॥ ३८

---

1. क-ख-ग—क्रुद्धस्तु

2. क-ख—ऋषिको नाम राजर्षिः (ग)-ऋषीको नाम

3. क-ग—प्रतापा-ख—प्रतपा 4. क-ख—पश्चिमानूपकं

सिंहिका सुषुवे यं तु ग्रहं चन्द्रार्कमर्दनम् ।
[1]क्रथ इत्यभिविख्यातस् स बभूव नराधिपः ॥ ३९

सुपर्ण इति विख्यातस् तस्मादवरजस्तु यः ।
क्रोधकीर्तिरिति ख्यातः पृथिव्यां प्रथितो नृपः ॥ ४०

चन्द्रहर्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः ।
[2]नरको नाम राजर्षिः पृथिव्यां सोऽभवन्नृपः ॥ ४१

[3]विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः ।
[4]जनको नाम राजर्षिस् स बभूव महीपतिः ॥ ४२

अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम [5]राजर्षिर् वसुमित्रोऽभवन्नृपः ॥ ४३

द्वितीयो विक्षरो यस्तु नराधिप महासुरः ।
[6]वरस्सुराष्ट्राधिपतिर् विश्रुतस्सोऽभवन्नृपः ॥ ४४

प्रवीर इति विख्यातो यस्त्वासीदसुरोत्तमः ।
पौण्ड्रको [7]मेरुसङ्काशो बभूव स नराधिपः ॥ ४५

वृत्र इत्यभिविख्यातो यस्तु राजन् महासुरः ।
मणिमान्नाम राजर्षिस् स बभूव नराधिपः ॥ ४६

---

1. क-ख-ग—क्रुद्ध 2. क-ख—शुनको
3. क-ख - विशासनस्तु 4. क-ख-ग—जानकिर्नाम
5. क-ख-ग—तेजस्वी 6. क-ख-ग—पां·सुराष्ट्राधिप इति
7. क-ख-ग—नाम इत्येव संबभूव

क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः ।
दण्ड इत्यभिविख्यातस् स बभूव नराधिपः ॥ ४७

क्रोधवर्धन इत्येव यस्त्वन्यः परिकीर्तितः ।
दण्डधार इति ख्यातस् सोऽभवन्मनुजेश्वरः ॥ ४८

[1]कालकेयास्तु ये पुत्रास् तेषामष्टौ नराधिपाः ।
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ४९

मागधेषु जयत्सेनश् श्रीमानासीत्स पार्थिवः ।
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ॥ ५०

द्वितीयस्तु ततस्तेषां श्रीमान् हरिहयोपमः ।
अपराजित इत्येव स बभूव नराधिपः ॥ ५१

तृतीयस्तु महाराज महाबाहुर्महासुरः ।
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ॥ ५२

तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः ।
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ॥ ५३

पञ्चमस्तु बभूवैषां प्रवरो यो महासुरः ।
[2]महीजात इति ख्यातो बभूव हि परन्तपः ॥ ५४

षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः ।
अभिरूप इति ख्यातः क्षितौ राजर्षिसत्तमः ॥ ५५

---

1. क-ख-ग—कालेयानां तु 2. क-ख—महीज इति विख्यातो बभूवेह

सप्तमस्तु बभूवैषां प्रवरो यो महासुरः ।
समुद्रसेनस्तु नृपः[1]ख्यातो नाम्ना महाबलः ॥ ५६
विश्रुतस्सागरान्तायां क्षितौ धमार्थतत्त्ववित् ॥ ५६॥
बृहन्नामाष्टमस्तेषां कालेयानां महासुरः ।
बभूव राजा धर्मात्मा सर्वभूतहिते रतः ॥ ५७॥
गणः क्रोधवशो नाम यस्तु राजन् प्रकीर्तितः ।
ततस्संजज्ञिरे वीराः क्षिताविह नराधिपाः ॥ ५८॥
नन्दिकः कर्णवेष्टश्च सिद्धार्थः क्रीडकस्तथा ।
सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ॥ ५९॥
क्रोधो बिचित्रः सुरसश् श्रीमान्नीलश्च भूमिपः ।
वीरधामा च कौरव्य भूरिवालश्च नामतः ॥ ६०॥
दन्तवक्रश्च नामासीद् दुर्जयश्चैव नामतः ।
रुक्मी च नरशार्दूल राजा च जनमेजयः ॥ ६१॥
आषाढो वायुवेगश्च भूरितेजास्तथैव च ।
एकलव्यस्सुमित्रस्तु वाटयानोऽथ गोमुखः ॥ ६२॥
करूशकाश्च राजानः क्षेमधूर्तिस्तथैव च ।
श्रुतायुर्धर्मपश्चैव बृहत्सेनस्तथैव च ॥ ६३॥
क्षेमोग्रतीर्थः कुहकः कलिङ्गेषु नराधिपः ।

1. क-ख-ग—तेषामेवाभवद्गणात् ।

मतिमांश्च मनुष्याणाम् ईश्वरश्चातिविक्रमः ॥ ६४॥

गणात्क्रोधवशादेव राजपूगः क्षिताविह ।
जातः पुरा महाराज महाकीर्तिर्महाबलः ॥ ६५॥

कालनेमिरिति ख्यातो योऽसावसुरसत्तमः ।
स कंस इति विख्यात उग्रसेनसुतो बली ॥ ६६॥

यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।
स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिप ॥ ६७॥

बृहस्पतेर्बृहत्कीर्तिर् देवर्षेर्विद्धि भारत ।
अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ ६८॥

धन्विनां नृपशार्दूल यस्स सर्वास्त्रवित्तमः ॥ ६९
बृहत्कीर्तिर्महातेजास् स जज्ञे मनुजेष्विह ॥ ६९॥

धनुर्वेदे च वेदे च यं तं वेदविदो विदुः ।
वरिष्ठमिष्टकर्माणं द्रोणं स्वकुलवर्धनम् ॥ ७०॥

महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत ।
एकत्वमुपपद्यादौ जज्ञे वै मानुषेष्विह ॥ ७१॥

अश्वत्थामा महावीर्यश् शत्रुपक्षभयंकरः ।
वीरः कमलपत्राक्षः क्षितावासीन्नराधिप ॥ ७२॥

जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोस्सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ७३॥

तेषामवरजो भीष्मः कुरूणामभयङ्करः ।
मतिमान्वेदविद्वांश्च सर्वभूतभयङ्करः ॥ ७४॥
जामदग्न्येन रामेण [1]सर्वशस्त्रभृतां वरः ।
अयुध्यत महातेजा भार्गवेण महात्मना ॥ ७५॥
यस्तु राजन् कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां गणतो विद्धि संभूतममितौजसम् ॥ ७६॥
शकुनिर्नाम यस्त्वासीद् राजा लोके महारथः ।
द्वापरं विद्धि तं राजन् संभूतमरिमर्दनम् ॥ ७७॥
सात्यकिस्सत्यसन्धस्तु योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥ ७८॥
द्रुपदश्चापि राजर्षिस् तत एवाभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन् सर्वशस्त्रभृतां वरः ॥ ७९॥
ततश्च कृतवर्माणं विद्धि राजन्[2]मरुद्गणात् ।
जातमभ्यधिकर्माणं क्षत्रियर्षभसत्तमम् ॥ ८०॥
मरुतां तु गणाद्विद्धि स जज्ञे रिपुमर्दनः ।
विराटो नाम राजर्षिः परराष्ट्रविमर्दनः ॥ ८१॥
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥ ८२॥

1. क-ख-ग—यस्स धर्मभृतां वरः 2. क-ख-ग—न्नराधिपम्

धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनादपि ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥ ८३॥
मातुर्दोषेणैव चर्षेर् अन्ध एव व्यजायत ॥ ८४
धर्मात्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि लोकेऽस्मिन् जातं धर्मभृतां वर॥ ८५
मरुतां तु गणाद्विद्धि सर्वशस्त्रभृतांवरः ।
पाण्डुर्जज्ञे महाभागस् तव पूर्वपितामहः ॥ ८६
कलेरंशात्तु संजज्ञे भुवि दुर्योधनो नृपः ।
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥ ८७
जगतो यश्च सर्वस्य विद्वेषकरपूरुषः ।
यस्सर्वान् घातयामास पृथिव्यां पुरुषाधमः ॥ ८८
येन युद्धं समुद्दिष्टं भूतान्तकरणं महत् ॥ ८८॥
पौलस्त्यभ्रातरस्सर्वे जज्ञिरे मनुजेष्विह ।
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ॥ ८९॥
दुर्मुखो दुःसहश्चैव ये चान्ये नानुकीर्तिताः ।
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ॥ ९०॥
धर्मस्यांशात्तु राजानं विद्धि राजन् युधिष्ठिरम् ।
भीमसेनं च वातस्य देवराजस्य चार्जुनम् ॥ ९१॥
अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि ।

नकुलं सहदेवं च सर्वभूतमनोहरौ ॥ ९२॥

यस्सुवर्चा इति ख्यातस् सोमपुत्रः प्रतापवान् ।
अभिमन्युर्बृहत्कीर्तिर् अर्जुनस्य सुतोऽभवत् ॥ ९३॥

अग्नेरंशात्तु विद्धि त्वं धृष्टद्युम्नं महारथम् ।
शिखण्डिनमथो राजं स्त्रीपुंसं विद्धि गुह्यकम् ॥ ९४॥

द्रौपदेयास्तु ये पञ्च बभूवुर्भरतर्षभ ।
विश्वान् देवगणान्विद्धि तान्राजन् भरतर्षभ ॥ ९५॥

आमुक्तकवचः कर्णो यस्तु जज्ञे महारथः ।
दिवाकरस्य तं विद्धि देवर्षेरंशमुत्तमम् ॥ ९६॥

यस्तु नारायणो देवो देवदेवस्सनातनः ।
तस्यांशो मानुषेष्वासीद् वासुदेवः प्रतापवान् ॥ ९७॥

शेषस्यांशस्तु नागस्य बलदेवो महाबलः ।
सनत्कुमारं प्रद्युम्नं विद्धि राजन् महौजसम् ॥ ९८॥

एवमन्ये मनुष्येन्द्र बहवोंशा दिवौकसाम् ।
जज्ञिरे वसुदेवस्य कुले कुलविवर्धन ॥ ९९॥

गणस्त्वप्सरसां यो वै महाराज प्रकीर्तितः ।
तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च ॥ १००॥

तानि षोडशदेवीनां सहस्राणि नराधिप ।

बभूवुर्मानुषे लोके नारायणपरिग्रहाः ॥ १०१॥

श्रियस्तु भागस्संजज्ञे रत्यर्थं पृथिवीतले ॥ १०२
द्रुपदस्य कुले कन्या वेदिम[1]ध्यादनिन्दिता ॥ १०२॥

नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ।
पद्मायताक्षी सुश्रोणी स्वञ्चितायतमूर्धजा ॥ १०३॥

सर्वलक्षणसंपन्ना वैदूर्यमणिसंनिभा ।
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ॥ १०४॥

सिद्धिस्स्मृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते ।
कुन्ती माद्री च जज्ञाते [2]माद्री तु सुबलात्मजा ॥ १०५॥

इति देवासुराणां ते गन्धर्वाप्सरसां तथा ।
अंशावतरणं राजन् राक्षसानां च कीर्तितम् ॥ १०६॥

ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः ।
महात्मनां यदूनां च ये जाता विपुले कुले ॥ १०७॥

एते तु मुख्याः कथिता मया ते राजसत्तम ।
धन्यं यशस्यमायुष्यं पुण्यं च विजयावहम् ॥ १०८॥

इदमंशावतरणं श्रोतव्यमनसूयया ॥ १०९

---

1. क-ख-ग—त्समुत्थिता
2. अ—मुनिस्तु

अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ।
प्रभवाप्ययवित् प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ ११०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

॥ ७ ॥ संभवपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ११० श्लोकाः]

---

## ॥ एकोनषष्टितमोऽध्यायः ॥

कुरुवंशकथनम् ॥ १ ॥ संक्षेपेण ययात्युपाख्यानम् ॥ २ ॥

---

1जनमेजयः—

त्वत्तश्श्रुतमिदं सर्वं देवदानवरक्षसाम् ।
अंशावतरणं सम्यग् गन्धर्वाप्सरसां तथा ॥ १

---

1. क-ख-ग—जनमेजयः—

पुत्रं ययातेः प्रब्रूहि पूरुं धर्मभृतां वरम् ।
आनुपूर्व्येण ये चान्ये पूरुवंशविवर्धनाः ॥ १
विस्तरेण पुनर्ब्रूहि दौष्यन्तिं जनमेजयम् ।
संबभूव यथा राजा भरतो द्विजसत्तम ॥ २

वैशम्पायनः—

पूरुर्नृपतिशार्दूल यथैवास्य पिता नृप ।
धर्मनित्यस्थितो राज्ये शक्रवीर्यपराक्रमः ॥ ३
प्रवीरश्शतगर्ज्यौ च त्रयः पुत्रा महाबलाः ।
पूरोः पौष्यामजायन्त प्रवीरस्तस्य वंशभाक् ॥ ४

नमस्युरभवत्तस्माच् छूरश्शैब्यसुतस्ततः ।
पृथिव्यां सागरान्तायां राजा राजीवलोचनः ॥ ५
सुभ्रूश्चाभयदो वाजी सौवीरतनयास्त्रयः ।
नमस्योरभवन् पुत्राश् शश्वत्सर्वे महाबलाः ॥ ६
असुन्तं वसुनाभं च गर्भौ रम्यौ यशस्विनौ ।
शूरानभयदो राजा जनयामास वीर्यवान् ॥ ७
वीर्यवान्मन्वतेः पुत्रो रथन्तर्यामजायत ।
शूरश्च दृढधन्वाच वपुष्मांश्च नरोत्तमः ॥ ८
रुद्राश्वं पृषदश्वं च रथदश्वं गयं मनुम् ।
यवीयाञ्जनयामास गन्धर्वान्भूरिविक्रमान् ॥ ९
रुद्राश्वस्य महाबाहो दशाप्सरसि सूनवः ।
यज्वानो जज्ञिरे पुत्राः प्रजावन्तो यशस्विनः ॥ १०
ऋतेपुरथ कक्षेपुः कृपणेपुश्च वीर्यवान् ।
स्थण्डिलेपु र्वनेपुश्च स्थलेपुश्च महाबलः ॥ ११
तेजोदुर्बलवान्धीमान् रथेपुश्चेन्द्रविक्रमः ।
धर्मेपुस्सन्ततेपुश्च दशमो देवविक्रमः ॥ १२
अनावृष्ट्या सुतास्तात राजसूयाश्वमेधिनः ।
अन्तिनारस्ततो राजन् विद्वांश्च प्रथितोऽभवत् ॥ १३
त्रस्नुं मोघं प्रतिरथं द्रुमञ्चातिरथं युधि ।
एतान्वै सुषुवे साध्वी अन्तिनाराद्यशस्विनी ॥ १४
तेषां त्रस्नुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुन्धराम् ॥ १५
इलिलं सुषुवे त्रस्नो र्यमुना च यशस्विनी ।
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वर ॥ १६
अथ तस्यामृषीन्पञ्च पञ्चभूतोपमांस्तथा ।
इलिलो जनयामास दुष्यन्तप्रमुखान् सुतान् ॥ १७
दुष्यन्तमनघं शूरं प्रशूरं चाथ पञ्चमम् ।
तेषां ज्येष्ठो महाराज दुष्यन्तो दुर्जयो युधि ॥ १८
दुष्यन्ताल्लक्षणायां तु जज्ञे वै जनमेजयः ।

इमं तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया ब्रह्मन् विप्रर्षिगणसन्निधौ ॥ २

वैशंपायनः—

धर्मार्थकामसहितं राजर्षीणां प्रकीर्तितम् ।
पवित्रं कीर्त्यमानं मे निबोधेमं मनीषिणाम् ॥ ३
प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च ।
भरतस्य कुरोः पूरोराजमीढस्य चान्वये ॥ ४
यादवानामिमं वंशं पौरवाणां च सर्वशः ।
तथैव भारतानां च पुण्यं स्वस्त्ययनं महत् ॥ ५
धन्यं यशस्यमायुष्यं कीर्तयिष्यामि तेऽनघ ॥ ५॥
तेजोभिरुदितास्सर्वे महर्षिसमतेजसः ॥ ६
दश प्रचेतसः पुत्रास् सन्तः पूर्वजनास्स्मृताः ।
मूर्धजेनाग्निना ह्येते पूर्वं दग्धा महौजसः ॥ ७
तेभ्यः प्रचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः ।
संभूताः पुरुषव्याघ्र स हि लोकपितामहः ॥ ८
वैरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥ ९

---

पूर्वतोऽनुवृत्तम्—

शकुन्तलायां भरतो दौष्यन्तिरभवत्सुतः ॥ १९
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ १९॥
॥ इति संभवपर्वणि चतुर्थोऽध्यायः ॥

[अधिकः पाठः]

सहस्रसङ्ख्यान्सहितान् दक्षपुत्रांश्च नारदः ।
मोक्षमध्यापयामास [1]येन स्युरजरामराः ॥ १०

ततः पञ्चाशतं कन्याः पुत्रिकास्समजीजनत् ।
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥ ११

ददौ दश स धर्माय काश्यपाय त्रयोदश ।
कालस्य नयने युक्तास् सप्तविंशतिमिन्दवे ॥ १२

त्रयोदशानां पत्नीनां या तु दाक्षायणी शुभा ।
मारीचः काश्यपस्त्वस्याम् अदित्यां समजीजनत् ॥ १३

इन्द्रादीन् वीर्यसंपन्नान् विवस्वन्तमथापि च ।
विवस्वतस्सुतो जज्ञे यमो वैवस्वतः प्रभुः ॥ १४

मार्ताण्डस्य यमी चापि सुता राजन् व्यजायत ।
मार्ताण्डस्य मनुर्धीमान् अजायत सुतः प्रभुः ॥ १५

मनोर्वंशो मानवानां तथाऽयं प्रथितोऽभवत् ।
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ॥ १६

ततोऽभवत्तदा राजन् ब्रह्म क्षत्रेण संहितम् ।
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन् ॥ १७

वेनं त्रस्नुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ।
करूशमथ शर्यातिं तथैवात्राष्टमीमिळाम् ॥ १८

1. क-ख-ग—साङ्ख्यज्ञानमनुत्तमम् ।

[1]वृषस्त्रं नवमं प्राहुः क्षत्त्रधर्मपरायणान् ।
तथैवारिष्टदशमान् मनोः पुत्रान्महाबलान् ॥ १९
पञ्चाशत्तु मनोः पुत्रास् तथाचान्येऽभवन्क्षितौ ॥ १९॥
अन्योन्यभेदात्ते सर्वे विनेशुरिति नश्श्रुतम् ॥ २०
पुरूरवास्ततो विद्वान् इलायां समपद्यत ।
सैव तस्याभवन्माता पिता चेति हि नश्श्रुतम् ॥ २१
अष्टादश सहस्राणि द्वीपानश्नन् पुरूरवाः ।
अमानुषैर्वृतान्सर्वान् उषसस्स महायशाः ॥ २२
विप्रैस्स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ।
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ॥ २३
सनत्कुमारस्तं राजन् ब्रह्मलोकादुपेत्य ह ।
अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ॥ २४
ततस्स ऋषिभिः क्रुद्धः सद्यश्शप्तो ह्यनश्यत ॥ २४॥
लोभान्वितो बलमदान्नष्टसंज्ञो नराधिपः ।
स च गन्धर्वलोकस्थ उर्वश्या सहितो विराट् ॥ २५॥
आनिनाय क्रियार्थेऽग्निम् एकं वै येन च त्रिधा ॥ २६
षट् [2]सुता जज्ञिरे चैलाद् आयुर्धीमान्नरस्तथा ।

1. क-ख-ग—पृषद्ध्रं
2. क-ख-ग—पुत्रा जज्ञिरेऽथैलादायुर्धीमानमावसुः ।

महायुश्च शतायुश्च [1]सुतायुश्चोर्वशीसुताः ॥ २७
नहुषं वृद्धशर्माणम् अजरायुमनेनसम् ।
स्वर्भानवीसुतानेतान् आयोः पुत्रान्प्रचक्षते ॥ २८
आयुषो नहुषः पुत्रो धीमान् सत्यपराक्रमः ।
राज्यं शशास सुमहद् धर्मेण पृथिवीपतिः ॥ २९
पितॄन्देवानृषीन्विप्रान् गन्धर्वोरगराक्षसान् ।
नहुषः पालयामास ब्रह्मक्षत्रमथो विशः ॥ ३०
स हत्वा शत्रुसंघातान् ऋषीन् करमदापयत् ।
पशुवच्चैव तान् पृष्ठे वाहयामास वीर्यवान् ॥ ३१
कारयामास चेन्द्रत्वम् अभिभूय दिवौकसः ॥ ३१॥
तेजसा तपसा चैव विक्रमेणौजसा तथा ।
विश्लिष्टो नहुषश्शप्तस् सद्यो ह्यजगरोऽभवत् ॥ ३२॥
यतिं ययातिं संयातिम् आयातिं यातिमुद्धवम् ।
नहुषो जनयामास षट् सुतान् प्रियवासवः ॥ ३३॥
ययातिर्नाहुषस्सम्राड् आसीत्सत्यपराक्रमः ।
स पालयामास महीम् ईजे बहुविधैस्सवैः ॥ ३४॥
अतिशक्त्या पितॄनर्चन् देवांश्च प्रयतस्सदा ।
अन्वगृह्णात्प्रजास्सर्वा ययातिरपराजितः ॥ ३५॥

1. क-ख-ग—श्रु

तस्य पुत्रा महेष्वासास् सर्वैस्समुदिता गुणैः ।
देवयान्यां महाराज शर्मिष्ठायां च जज्ञिरे ॥ ३६॥

देवयान्यां व्यजायेतां यदुस्तुर्वशुरेव च ।
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां प्रजज्ञिरे ॥ ३७॥

स शाश्वतीस्समा राजन् प्रजा धर्मेण पालयत् ॥ ३८

जरां गच्छन्महाघोरां नाहुषो रूपनाशिनीम् ।
जरा[1]भिदूषितः पुत्रान् राजा वचनमब्रवीत् ॥ ३९

यदुं पूरुं तुर्वशुं च द्रुह्युं चानुं च भारत ॥ ३९॥

यौवनेनाचरन्कामान् युवा युवतिभिस्सह ।
विहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ॥ ४०॥

तं पुत्रो दैवयानेयः पूर्वजो यदुरब्रवीत् ।
किमत्र भवता कार्यम् अस्माभिर्यौवनेन च ॥ ४१॥

ययातिरब्रवीत्तं च जरा मे प्रतिगृह्यताम् ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ४२॥

यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।
कामार्थः परिहीनो वै तप्येऽहं तेन पुत्रकाः ॥ ४३॥

मामकेन शरीरेण राज्यमेकः प्रशास्तु वः ।

---

1. क-ख-ग—भिभूतःपुत्रान् स

[1]अहं त्वभिनववयोयुक्तः काममवाप्नुयाम् ॥ ४४॥
न ते तस्य प्रत्यगृह्णन् यदुप्रभृतयो जराम् ।
तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः ॥ ४५॥
राजंश्चराभिनववयाः कामान्यौवनगोचरान् ।
अहं जरां समास्थाय राज्ये स्थास्यामि तेज्ञया ॥ ४६॥
एवमुक्तस्स राजर्षिस् तपोवीर्यसमाश्रयात् ।
संचारयामास जरां तदा पुत्रे महात्मनि ॥ ४७॥
पौरवेणाथ वयसा राजा यौवनमास्थितः ।
यायातेनापि वयसा राज्यं पूरुरकारयत् ॥ ४८॥
ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च ।
विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने ॥ ४९॥
नाभ्यगच्छत्तदा तृप्तिं कामानां स महायशाः ।
अवेक्ष्य मनसा तथ्याम् इमां गाथां ततो जगौ ॥ ५०॥
न जातु कामः कामानाम् उपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ५१॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः ।
नालमेकस्य तत्सर्वम् इति मत्वा शमं व्रजेत् ॥ ५२॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।

1. क-ख-ग—अहं तन्वाऽभिनववया युवा

कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५३॥
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ५४॥
इत्यवेक्ष्य महाराजः कामानां फल्गुतां नृप ॥ ५५
ततो वर्षसहस्रान्ते ययातिरपराजितः ।
अतृप्त एव कामानां पूरुं पुत्रमुवाच ह ॥ ५६
त्वया दायादवानस्मि त्वं मे वंशकरस्सुतः ।
पौरवोऽयं वंश इति ख्यातिं लोके गमिष्यति ॥ ५७
ततस्स नृपशार्दूल पूरुं राज्येऽभिषिच्य च ।
कालेन महता पश्चात् कालधर्ममुपेयिवान् ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

॥ ७ ॥ संभवपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ५८ श्लोकाः]

---

## ॥ अथ षष्टितमोऽध्यायः ॥

ययातिचरित्रोपक्रमः ॥ १ ॥ कचेन शुक्रात्सञ्जीविनीविद्याप्राप्तिः॥२॥ शुक्रेण सुरापाननिषेधः ॥ ३ ॥

---

जनमेजयः—
ययातिः पूर्वजोऽस्माकं दशमो यः प्रजापतेः ।
कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ १

एतदिच्छाम्यहं श्रोतुं [1]वदतो द्विजसत्तम ।
आनुपूर्व्येण ये चान्ये राजानो वंशधारिणः ॥ २

वैशंपायनः—

ययातिर्नाहुषो राजा देवराजसमः क्षितौ ।
तं शुक्रवृषपर्वाणौ वव्राते वरमुत्तमम् ॥ ३

तत्तेऽहं संप्रवक्ष्यामि पृच्छते जनमेजय ।
देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ॥ ४

सुराणामसुराणां च भेदो वै समजायत ।
ऐश्वर्यं प्रति संघर्षात् त्रैलोक्यस्य च कारणात् ॥ ५

देवा दैत्यैर्योत्स्यमाना वव्रिरेऽङ्गिरसं मुनिम् ।
पौरोहित्येन राज्यार्थं काव्यमौशनसं परे ॥ ६

ब्राह्मणौ तावुभौ नित्यम् अन्योन्यस्पर्धिनौ भृशम् ॥ ६॥
तत्र देवा निजघ्नुर्यान् दानवान् युधि संगतान् ।
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात् ॥ ७॥
ततस्ते पुनरुत्थाय योधयांचक्रिरे सुरान् ॥ ८

असुरास्तु निजघ्नुर्यान् सुरान्समरमूर्धनि ।
तांश्चैवं जीवयामास बृहस्पतिरुदारधीः ॥ ९

न हि वेद स तां विद्यां यां काव्यो वेत्ति वीर्यवान् ।

---

1. अ—व्यासतो

सञ्जीविनीं ततो देवा विषादमगमन् परम् ॥ १०
ते देवास्तु भयोद्विग्नाः काव्यादौशनसात्तदा ।
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ॥ ११
भजमानान्भजस्वास्मान् कुरु साह्यमनुत्तमम् ॥ ११॥
या वै विद्या निवसति ब्राह्मणेऽमिततेजसि ।
शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ॥ १२॥
वृषपर्वसमीपे तु शक्यो द्रष्टुं त्वया द्विजः ॥ १३
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् ।
तमाराधयितुं शक्तो भवान्पूर्ववया मुनिः ॥ १४
देवयानीमौशनसीं भक्त्याऽऽराधय सुव्रत ॥
त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते ॥ १५
शीलदाक्षिण्यमाधुर्यैर् आचारैश्च दमेन च ।
देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम् ॥ १६
तथेत्युक्त्वा कचः प्रायान्मुहूर्ते लघुमात्रके ।
तदा हि पूजितो देवैस् समीपं वृषपर्वणः ॥ १७
स गत्वा त्वरितो राजन् देवैस्संप्रेषितः कचः ।
असुरेन्द्रपुरे शुक्रम् अभिवाद्येदमब्रवीत् ॥ १८
ऋषेरङ्गिरसः पौत्रः पुत्रश्चाहं बृहस्पतेः ।
नाम्ना कच इति ख्यातं शिष्यं गृह्णातु मां भवान् ॥ १९

ब्रह्मचर्यं चरिष्यामि त्वत्समीपे यदात्थ माम् ।
अनुमन्यस्व मां ब्रह्मन् सहस्रं परिवत्सरम् ॥ २०

शुक्रः—

कच स्वागतमद्याहम् अभिगृह्णामि ते वचः ।
अर्चयिष्येऽहमर्च्यं त्वाम् आर्चितोऽस्तु बृहस्पतिः ॥ २१

वैशंपायनः—

कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम् ।
आदिष्टं भृगुपुत्रेण शुक्रेणोशनसा स्वयम् ॥ २२

व्रतं तु व्रतकाले स यथोक्तं स गृहीतवान् ।
आराधयन्नुपाध्यायं देवयानीं च भारत ॥ २३

नित्यमाराधयिष्यंस्तां युवा यौवनगां मुनिः ॥ २३॥

[1]संप्रीणयन्देवयानीं कन्यां संप्राप्तयौवनाम् ।
पुष्पैः फलैः प्रेषणैश्च तोषयामास भार्गवीम् ॥ २४॥

तत्सहस्रं गुरुगवां रक्षित्वा वन्यमाहरत् ।
गायन्नृत्यंश्च बहुशो देवयानीमतोषयत् ॥ २५॥

देवयान्यपि तं विप्रं नियतव्रतचारिणम् ।
अनुगायमाना ललना रहः पर्यचरत्तथा ॥ २६॥

गाय[2]कं चैव नृत्यन्तं दातारं प्रियवादिनम् ।

---

1. क-ख-ग—स शीलयन्
2. क-ख-ग—न्तं चैव शुल्कं च (श्लक्ष्णं च)

नार्यो नरं कामयन्ते रूपिणं स्रग्विणं तथा ॥ २७॥

पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम् ।
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम् ॥ २८॥

ततस्ते गास्तु रक्षन्तं दानवास्संशितव्रतम् ।
जघ्नुर्बृहस्पते रोषाद् विद्यारक्षार्थमेव च ॥ २९॥

हत्वा सालावृकेभ्यस्तं प्रायच्छंस्तिलशः कृतम् ॥ ३०
ततो गावो निवृत्तास्ता अगोपास्स्वं निवेशनम् ॥ ३०॥

सा दृष्ट्वा रहिता गास्तु कचेनाभ्यागता वनात् ।
उवाच वचनं काले देवयान्यथ भारत ॥ ३१॥

देवयानी—

आहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो ।
अगोपाश्चागता गावः कचस्तात न दृश्यते ॥ ३२॥

व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते॥ ३३॥

शुक्रः—

अमुमेहीति शब्देन कचं संजीवयाम्यहम् ॥ ३४

वैशंपायनः—

ततस्संजीविनीं विद्यां प्रयुज्य कचमाह्वयत् ॥ ३४॥
भित्त्वा भित्त्वा शरीराणि वृकाणां स विनिष्पतत् ॥ ३५

आहूतः प्रादुरभवत् कचो हृष्टोऽथ विद्यया ।
हतोऽहमिति चाचष्ट पृष्टो भार्गवकन्यया ॥ ३६

कचः—

समित्पुष्पकुशादीनि काष्ठभारं च भामिनि ।
गृहीत्वा श्रमभारार्तो वटवृक्षं समाश्रितः ॥ ३७

गावश्च सहितास्सर्वा वृक्षच्छायामुपाश्रिताः ।
असुरास्तत्र मां दृष्ट्वा कस्त्वमित्यभ्यचोदयन् ॥ ३८

बृहस्पतिसुतश्चाहं कच इत्यभिविश्रुतः ।
इत्युक्तमात्रे मां [1]जघ्नुश् शतशश्च समन्ततः ॥ ३९

दत्त्वा सालावृकेभ्यस्ते सुखं जग्मुस्स्वमालयं ।
आहूतो विद्यया भद्रे भार्गवेण महात्मना ॥ ४०

त्वत्समीपमिहायातः कथंचिद्धृतजीवितः ॥ ४०॥

स पुनर्देवयान्योक्तः पुष्पाण्याहर मे द्विज ॥ ४१

तथा सोऽपि गतः [2]केचिद् दानवास्तं ददर्शिरे ॥ ४१॥

पुनस्तं [3]बाधयित्वाऽऽशु समुद्रेऽम्भस्यमज्जयन् ॥ ४२

गते पुनः कचे कन्या पित्रे तं संन्यवेदयत् ॥ ४२॥

विप्रेण पुनराहूतो विद्यया ब्राह्मणेन सः ।

---

1. क-ख-ग—हत्वा पेषीकृत्वा च दानवाः ॥
2. क-ख-ग—काले दानवा ददृशुर्वने ।
3. क-ख-ग—पेषयित्वा तु समुद्रेऽम्भस्यमिश्रयन् ।

पुनरागम्य तद्वृत्तं न्यवेदयत तत्तथा ॥ ४३॥

देवयानी पुनस्तं तु कदाचिद्वन्यमाहर ।
उक्तोऽगच्छद्वनं तत्र ददृशुर्दानवाः पुनः ॥ ४४॥

ततस्तृतीये हत्वा तं दग्ध्वा पिष्ट्वा च चूर्णशः ।
प्रायच्छन् ब्राह्मणायैव सुरापायासुरास्तथा ॥ ४५॥

[1]देवयानी शङ्कमाना दृष्ट्वा पितरमब्रवीत् ।
पुष्पाहारः प्रेषणकृत् कचस्तात न दृश्यते ॥ ४६॥

व्यक्तं हतो मृतो वापि कचस्तात महातपाः ॥ ४७

[2]शुक्रः—

विद्ययोत्थाप्यमानोऽपि नाभ्येति करवाणि किम् ।

बृहस्पतेस्सुतः पुत्रि कचः प्रेतगतिं गतः ॥ ४८
विद्यया जीवितो ह्येष नागतः करवाणि किम् ॥ ४८॥

तन्मा शुचो मा रुदो देवयानि
न त्वादृशी मर्त्यमनुप्रशोचेत् ।

---

1. क-ख-ग—अपिबत्सुरया सार्धं कचभस्म भृगूद्वहः ।
सा सायन्तनवेलायाम् अगोपा गास्समागताः ॥
[अधिकः पाठः]

2. ख—श्रुत्वा पुत्रीवचः काव्यो मन्त्रेणाहूतवान्कचम् ।
ज्ञात्वा बहिष्ठमज्ञात्वा स्वकुक्षिस्थं कचं नृप ॥
[अधिकः पाठः]

सुराश्च विश्वे च जगच्च सर्वम्
उपस्थितां वैकृतिमामनन्ति ॥ ४९॥

देवयानी—

यस्याङ्गिरा वृद्धतमः पितामहो
बृहस्पतिश्चापि पिता महर्षिः ।
ऋषेः पुत्रं तव शिष्यं कथं तु
पितर्न शोचामि कथं न रुद्याम् ॥ ५०॥

स ब्रह्मचारी च तपोधनश्च
नित्योत्थितः कर्मसु चैव दक्षः ।
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये
प्रियो हि मे तात कचोऽभिरूपः ॥ ५१॥

शुक्रः—

असंशयं मामसुरा द्विषन्ति
ये शिष्यं मेऽनागसं सूदयन्ति ॥ ५२
अब्राह्मणं लोकमिच्छन्ति पापा
रौद्रा यथा वा प्रस्तुतान्दानवैर्हि ।
अप्यस्य पापस्य भवेदिहान्तः
कं ब्रह्महत्या न दहे[1]द्धि तूर्णम् ॥ ५३

वैशंपायनः—

संचोदितो देवयान्या महर्षिः पुनराह्वयत् ।

1. क-ख-ग—दपीन्द्रम् ।

संरम्भेणैव काव्यो हि बृहस्पतिसुतं कचम् ॥ ५४

कचोऽपि राजन् स महानुभावो
विद्याबलाल्लब्धमतिर्महात्मा ।
गुरोर्हितो विद्यया चोपहूतश्
शनैर्वाक्यं जठरे व्याजहार ॥ ५५

कचः—

प्रसीद भगवन्मह्यं कचोऽहमभिवादये ।
यथा बहुमतः पुत्रस् तथा मन्यतु मां भवान् ॥ ५६

वैशंपायनः—

तमब्रवीत्केन पथोपनीतो
ममोदरे तिष्ठसि ब्रूहि विप्र ।
अस्मिन्मुहूर्ते ह्यसुरान्विनाश्य
गच्छामि देवानहमद्य विप्र ॥ ५७

कचः—

तव प्रसादान्न जहाति मां स्मृतिः
[1]स्मरे च सर्वं यथावद्वेद्मि वृत्तम् ।
नत्वेव तु स्यात्तपसो व्ययो मे
ततः क्लेशं घोरमिमं सहामि ॥ ५८

असुरैस्सुरायां भवतोऽस्मि दत्तो
हत्वा दग्ध्वा चूर्णयित्वा च काव्य ।

1. क-ख-ग—सर्वैस्सर्वं वेद्मि यथा च वृत्तम् ।

ब्राह्मीं मायामासुरीं त्वद्य माया
त्वयि स्थिते कथमेवातिवर्तेत् ॥ ५९

शुक्रः—

किं ते प्रियं करवाण्यद्य वत्से
वधेन मे जीवितं स्यात्कचस्य ।
नान्यत्र कुक्षेर्मम भेदाद्विदृश्येत्
कन्ये कचो मद्गतो देवयानि ॥ ६०

देवयानी—

द्वौ मे शोकावग्निकल्पौ दहेतां
कचस्य नाशस्तव चैवोपघातः ।
कचस्य नाशे मम शर्म नास्ति
तवोपघाते जीवितुं नास्मि शक्ता ॥ ६१

शुक्रः—

संसिद्धिरूपोहि बृहस्पतेस्सुतस्
स त्वां भक्तो भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीविनीं त्वं
न चेदिन्द्रः कचरूपी त्वमद्य ॥ ६२

न निवर्तेत्पुनर्जीवन् कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैव तस्माद्विद्यामवाप्नुहि ॥ ६३

पुत्रो भूत्वा भावय भावितो माम्
अस्मच्छरीरादुपनिष्क्रम्य तात ।
समीक्षेथा धर्मवतीमवेक्षां
गुरोस्सकाशात्प्राप्य विद्यां सविद्यः ॥ ६४

वैशंपायनः—

गुरोस्सकाशात्समवाप्य विद्यां
भित्त्वा पार्श्वं निर्विचक्राम विप्रः ।
कचोऽभिरूपो दक्षिणं ब्राह्मणस्य
शुक्लात्यये पौर्णमास्यामिवेन्दुः ॥ ६५

दृष्ट्वा शयानं ब्राह्मणं ब्रह्मराशिम्
उत्थापयामास मृतं कचोऽपि ।
विद्यां सिद्धां तामवाप्याभिवाद्य
ततः कचस्तं गुरुमित्युवाच ॥ ६६

कचः—

यः श्रोत्रयोरमृतं सन्निषिञ्चेद्
विद्यामविद्यस्य यथा मम त्वम् ।
तं मन्येऽहं पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ६७

ऋतस्य दातारमनुत्तमस्य
निधिं निधीनां चतुरन्वयानाम् ।

ये नाद्रियन्ते गुरुमर्चनीयं
पापांल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः ॥ ६८

वैशंपायनः—

शृण्वत्सु भूतेष्विदमाह काव्यः
समुत्थितो ब्रह्मराशिः पुराणः ।
सुरापानाद्वञ्चनां प्राप्य तीव्रां
संज्ञानाशं च ययौ नृशंसम् ॥ ६९

दृष्ट्वा कचं चापि तथा सजीवितं
पीत्वा सुरां सुरया मोहितस्सन् ।
समन्युरुत्थाय महानुभावस्
तदोशना विप्रहितं चिकीर्षुः ॥ ७०

काव्यस्स्वयं वाक्यमिदं जगाद
सुरापानं वै प्रतिशङ्कमानः ॥ ७०॥

यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-
न्मोहात्सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मो ब्रह्महा चैव स स्याद्
अस्मिँल्लोके गर्हितस्स्यात्परे च ॥ ७१॥

मया चेमां विप्रधर्मोक्तसीमां
मर्यादां वै स्थापितां सर्वलोके ।

सन्तो विप्राश्शुश्रुवांसो गुरूणां
देवा लोकाश्चापि शृण्वन्तु सर्वे ॥ ७२॥

इतीदमुक्त्वा तु महानुभावस्
तपोनिधीनां निधिरप्रमेयः ।
तान्दानवान्देवविमूढबुद्धीन्
इदं समाहूय ततोऽभ्युवाच ॥ ७३॥

आचक्षे वो दानवा बालिशास्थ
सिद्धः कचो यास्यति मत्सकाशे ।
सञ्जीविनीं प्राप्य विद्यां महार्थां
तुल्यप्रभावो ब्रह्मणा ब्रह्मभूतः ॥ ७४॥

योऽकार्षीद्दुष्करं कर्म देवानां कारणात्कचः ।
न च कीर्तिर्जरां गच्छेद् याज्ञीयश्च भविष्यति ॥ ७५॥

गुरोरुष्य सकाशे तु दश वर्षशतानि च ।
अनुज्ञातः कचो गन्तुम् इयेष त्रिदशालयम् ॥ ७६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

॥ ७ ॥ संभवपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ७६॥ श्लोकाः ।]

---

## ॥ एकषष्टितमोऽध्यायः ॥

कचदेवयान्योः परस्परशापप्रदानम् ॥ १ ॥

वैशंपायनः—

समावृत्तव्रतं तं तु विसृष्टं गुरुणा कचम् ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ १

ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च [1]दमेन च ॥ २

ऋषिर्यथाङ्गिरा मान्यः पितुस्तव महातपाः ।
तथा मान्यश्च पूज्यश्च तव भूयो बृहस्पतिः ॥ ३

एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥ ४

स समावृत्तविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥ ५

कचः—

पूज्यो मान्यश्च भगवान् यथा तव पिता मम ।
तथा त्वमनवद्याङ्गि पूजनीयतमा मम ॥ ६

आत्मप्राणैः प्रिय[2]तमा भार्गवस्य शुचिस्मिते ।

1. अ—श्रुतेन च

2. क-ख-ग—तरा भार्गवस्य महात्मनः ।

त्वं भद्रे [1]धर्मतः पूज्या गुरुपुत्री मता मम ॥ ७
गुरोर्गरीयसी विद्या तस्माद्गुरुतरा मम ।
न मामर्हसि कल्याणि वक्तुमेवं शुचिस्मिते ॥ ८
यथा मम गुरुर्नित्यं मान्यश्शुक्रः पिता तव ।
देवयानि तथा त्वं हि नैवं वक्तुमिहार्हसि ॥ ९

देवयानी—

गुरुपुत्रस्य पुत्रो हि ननु त्वमसि मे पितुः ।
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ॥ १०
असुरैर्हन्यमाने च कच त्वयि पुनः पुनः ।
तदाप्रभृति या प्रीतिस् तां त्वं मा विस्मरस्व मे ॥ ११
सौहृदेनानुरक्तां च भक्तां भजितुमर्हसि ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनाथवत् ॥ १२

कचः—

अनियोज्ये नियोक्तुं मां देवयानि न चार्हसि ।
प्रसीद मह्यं सुभ्रु त्वं गुरोर्गुरुतरा शुभे ॥ १३
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥ १४
मम त्वं भगिनी भद्रे मैवं वोचश्शुभानने ।
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम ॥ १५

1. क-ख-ग--सर्वतः पूज्या गुरुपुत्रि सदा मम ।

आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽहं कथान्तरे ॥ १६
अप्रमत्तोत्थिता नित्यम् आराधय गुरुं मम ॥ १६॥

देवयानी—
[1]धर्मकार्ये तु युञ्जाना कन्या संप्राप्तयौवना ।
धर्ममेव प्रयुञ्जाना प्रत्याख्याता त्वयानघ ॥ १७॥
तस्मात् कच न ते विद्या सिद्धिमेषा गमिष्यति ॥ १८

कचः—
गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः ।
गुरुणा चाननुज्ञातो धर्मतः प्रब्रवीम्यहम् ॥ १९
आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तोऽ[2]स्म्यनर्हश्शापस्य कामतोऽस्मि न धर्मतः ॥ २०
तस्माद्भवत्या यः कामो न तथा स भविष्यति ।
ऋषिपुत्रो न ते कश्चिद् द्विजः पाणिं ग्रहीष्यति ॥ २१
फलिष्यति च वै विद्या नेति यच्चात्थ मामिह ।
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति ॥ २२

वैशंपायनः—
एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा ।

---

1. क-ख-ग—यदि मां धर्मकामार्थं त्वं प्रत्याख्यास्यसि चेदिह ।
[अधिकः पाठः]

2. क-ख-ग—ह्यनर्थः पापस्य कामतोऽद्य

त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः ॥ २३

तमागतमभिप्रेत्य देवा इन्द्रपुरोगमाः ।
[1]बार्हस्पत्यं सभाज्येदं कचमाहुर्मुदान्विताः ॥ २४

देवाः—

यत्त्वमस्माद्धितं कर्म कृतवान् परमाद्भुतम् ।
न ते यशो जरां गन्ता भागभाक्त्वं भविष्यसि ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ ७ ॥ संभवपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ द्विषष्टितमोऽध्यायः ॥

वस्त्रमिश्रणेन शर्मिष्ठादेवयान्योर्विवादः ॥ १ ॥ शर्मिष्ठया देवयान्याः कूपे पातनम् ॥ २ ॥ ययातिना कूपादुद्धरणं देवयान्याः ॥ ३॥

---

वैशंपायनः—

कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः ।
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ ॥ १

ततो देवास्समागम्य शतक्रतुमथाब्रुवन् ।
कालस्ते विक्रमस्या[2]यं यथा श्रेष्ठो भविष्यसि ॥ २

---

1. क-ख-ग—बृहस्पतिं 2. क-ख-ग—य जहि शत्रून् पुरन्दर ।

एवमुक्तस्तु [1]भगवान् सह तैस्त्रिदिवेश्वरः ।
तथेत्युक्त्वापचक्राम सोऽपश्यत वने स्त्रियः ॥ ३

क्रीडन्तीनां तु कन्यानाम् आरामे नन्दनोपमे ।
वायुभूतस्स वस्त्राणि सर्वाण्येव व्यमिश्रयत् ॥ ४

ततो जलात्समुत्तीर्य कन्यास्तास्सहितास्तदा ।
वस्त्राणि जगृहुस्तानि यथाऽऽसन्नान्यनेकशः ॥ ५

तत्र वासो देवयान्याश् शर्मिष्ठा जगृहे तदा ।
[2]मतिभ्रमादजानन्ती दुहिता वृषपर्वणः ॥ ६

ततस्तयोर्मिथस्तत्र विरोधस्समजायत ।
देवयान्याश्च राजेन्द्र शर्मिष्ठायाश्च तत्कृते ॥ ७

देवयानी—

कस्माद्गृह्णासि मे वस्त्रं शिष्यभूता ममासुरि ।
[3]संमताचारहीनाया न ते श्रेयो भविष्यति ॥ ८

शर्मिष्ठा—

आसीनं च शयानं च पिता ते पितरं मम ।
स्तौति वन्दति चाभीक्ष्णं नीचैस्स्थित्वा विनीतवत् ॥ ९

स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ १०

---

1. क-ख-ग —सहितस्त्रिदशैर्मघवांस्तदा ।
2. क-ख-ग—व्यतिक्रमम 3. क-ख-ग—समुदा

आधून्वस्व विधून्वस्व द्रुह्य कुप्य च या किल।
अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकी ॥ ११
लप्स्यसे प्रतियोद्धारं न च त्वां गणयाम्यहम्।
प्रतिकूलं वदसि चेद् इतःप्रभृति याचकि ॥ १२
आकृष्य मम दासीभिः प्रस्थाप्यसि बहिर्बहिः ॥ १२॥

वैशंपायनः—

तां मूर्च्छितां देवयानीं हृत्वा हृत्वा च वाससी।
शर्मिष्ठा प्राक्षिपत् कूपे ततस्स्वंपुरमाविशत् ॥ १३॥
हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया।
अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा ॥ १४॥
प्रविश्य स्वगृहं स्वस्था धर्ममासुरमास्थिता ॥ १५
अथ तं देशमागच्छद् ययातिर्नहुषात्मजः।
श्रान्तयुग्यहयश्श्रीमान् मृगलिप्सुः पिपासितः ॥ १६
स नाहुषः प्रेक्षमाण उदपानं गतोदकम्।
ददर्श कन्यां रूपेण दीप्तामग्निशिखामिव ॥ १७
तां दृष्ट्वा रूपसम्पन्नां सर्वालङ्कारभूषिताम्।
सर्वलक्षणसम्पन्नाम् अपृच्छत्स नराधिपः ॥ १८
तामपृच्छत्स दृष्ट्वैव कन्याममरवर्चसम्।
सान्त्वयित्वा नरश्रेष्ठ उवाच परवल्गुना ॥ १९

ययातिः—

का त्वं ताम्रनखा श्यामा सुमृष्टमणिकुण्डला ।

दीर्घं ध्यायसि चात्यर्थं कस्माच्छ्वसिषि चातुरा ॥ २०

कथं च पतिताह्यस्मिन् कूपे वीरुत्तृणावृते ।

शुभे सुता वै कस्य त्वं वद सर्वं सुमध्यमे ॥ २१

देवयानी—

यो देवैर्निहतान् दैत्यान् उत्थापयति विद्यया ।

तस्य शुक्रस्य कन्याऽहम् इदमासादितं मया ॥ २२

पृच्छसे मां कस्त्वमसि रूपवीर्यबलान्वितः ।

ब्रूह्यत्रागमनं किं वा श्रोतुमिच्छामि तत्त्वतः ॥ २३

ययातिः—

अहं ययातिर्नाहुषश् श्रान्तोऽद्य मृगलिप्सया ।

कूपे तृणावृते भद्रे दृष्टवानस्मि त्वामिह ॥ २४

देवयानी—

एष मे दक्षिणो राजन् पाणिस्ताम्रनखाङ्गुलिः ।

समुद्धर गृहीत्वा तं कुलीनस्त्वं हि मे मतः ॥ २५

भूयोऽपि त्वामुपागम्य वीर्यवन्तं मनस्विनम् ।

अस्मान्मां संशयाद्राजन् मोक्षयाशु विशांपते ॥ २६

वैशंपायनः—

स्त्री चैषा ब्राह्मणी चेति विज्ञायैनां स नाहुषः ।

गृहीत्वा दक्षिणं पाणिम् उज्जहार ततोऽवटात् ॥ २७
उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ।
गच्छ भद्रे यथाकामं न भयं विद्यते तव ॥ २८
इत्युच्यमाना नृपतिं देवयानी तमुत्तरम् ।
उवाच मां त्वमादाय गच्छ शीघ्रं प्रियो हि मे ॥ २९
गृहीताहं त्वया पाणौ तस्माद्भर्ता भविष्यसि ॥ २९॥
इत्येवमुक्तो नृपतिर् आह क्षत्रकुलोद्भवः ।
त्वं भद्रे ब्राह्मणी तस्मान्मया नार्हसि सङ्गमम् ॥ ३०॥
सर्वलोकगुरुः काव्यस् त्वं तस्य दुहिताऽसि वै ।
तस्मादपि भयं मेऽद्य तस्मात्कल्याणि नार्हसि ॥ ३१॥

देवयानी—

यदि मद्वचनादद्य मां नेच्छसि नराधिप ।
त्वामेव वरये पित्रा पश्चाज्ज्ञास्यसि गच्छसि ॥ ३२॥

वैशंपायनः—

अमन्त्रयित्वा सुश्रोणीं ययातिस्स्वपुरं ययौ ॥ ३३
नृपे तु गतमात्रे सा देवयानी शुचिस्मिता ।
क्वचिदार्ता च रुदती वृक्षमाश्रित्य तिष्ठति ॥ ३४
[1]चिरायितायां दुहितरि भगवानाह भार्गवः ।
धात्रि त्वमानय क्षिप्रं देवयानीं शुचिस्मिताम् ॥ ३५

---

1. क-ख-ग—ततश्चिरायमाणां तु दुहितारं द्विजोत्तम ।

इत्युक्तमात्रे सा धात्री त्वरिता ह्वयितुं गता ॥ ३५॥
यत्र यत्र सखीभिस्सा गता पद्ममार्गत ॥ ३६
सा ददर्श तथा दीनां श्रमार्तां रुदतीं स्थिताम् ॥ ३६॥

धात्री—

वृत्तं ते किमिदं भद्रे शीघ्रं वद पिताऽऽह्वयत् ।
धात्रीमाह समाहूय शर्मिष्ठा वृजिनं कृतम ॥ ३७॥

देवयानी—

त्वरितं चूर्णिके गच्छ सर्वमाचक्ष्व मे पितुः ।
नहीदानीं प्रवेक्ष्यामि नगरं वृषपर्वणः ॥ ३८॥

वैशंपायनः—

[1]त्वरितं चूर्णिका गत्वा प्रविवेश पुरोत्तमम् ।
[2]द्विजप्रवरमासाद्य वचनं चेदमब्रवीत् ॥ ३९॥
आचचक्षे महा[3]प्राज्ञं देवयानीं वने हताम् ।
शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ॥ ४०॥
श्रुत्वा दुहितरं [4]काव्यो हतां शर्मिष्ठया ततः ।
[5]त्वरमाणोऽनु मार्गान् स निश्चक्राम पुरोत्तमात् ॥ ४१॥

---

1. क-ख-ग—सा तदा त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरम् ।
2. क-ख-ग—दृष्ट्वा काव्यमुवाचेदं संभ्रमाविष्टचेतना ॥
3. क-ख-ग—प्राज्ञ देवयानी वने हता ।
4. क-ख-ग—काव्यस्तत्र शर्मिष्ठया हताम् ।
5. क-ख-ग—त्वरया निर्ययौ दुर्गान्मार्गमाणस्सुतां वने ॥

सोऽनुगत्वा पदं दुःखान्मार्गमाणस्सुतां वने ॥ ४२
दृष्ट्वा दुहितरं काव्यो देवयानीं तदा वने ।
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् ॥ ४३
आत्मदोषैर्हि गच्छन्ति सर्वे दुःखसुखे जनाः ।
पुरा दुश्चरितं मन्ये तस्मात्ते निष्कृतिः कृता ॥ ४४

देवयानी—

दुष्कृतिर्वास्तु वा मास्तु शृणुष्वावहितो मुने ॥ ४४॥
शर्मिष्ठया यदुक्तं दुहित्रा वृषपर्वणः ।
सत्यं किलैतत् स्तोता त्वं दैत्यानामसि गायकः ॥ ४५॥
एवं मामाह शर्मिष्ठा शिष्या तव महामुने ॥ ४६
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी ।
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणं भृशम् ॥ ४७
स्तुवतो दुहिताऽसि त्वं याचतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ ४८
इति मामाह शर्मिष्ठा दुहिता वृषपर्वणः ।
क्रोधसंरक्तनयना दर्पपूर्णानना ततः ॥ ४९
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः ।
प्रह्लादयिष्ये शर्मिष्ठाम् इत्युक्ता हि सखी मया ॥ ५०
उक्ताप्येवं भृशं क्रुद्धा मां गृह्य विजने वने ।

कूपे प्रक्षेपयामास प्रक्षिप्यैव गृहं ययौ ॥ ५१

शुक्रः—

स्तुवतो दुहिता न त्वं वन्दिनः प्रतिगृह्णतः ।
अस्तोतुस्स्तूयमानस्य दुहिता देवयान्यसि ॥ ५२

वृषपर्वा च तद्वेद शक्रो राजा च नाहुषः ।
अचिन्त्यं ब्रह्म निर्द्वन्द्वम् ऐश्वर्यं हि फलं मम ॥[1] ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ ७ ॥ संभवपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ५३ श्लोकाः]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

---

शुक्रदेवयानीसंवादः ॥ १ ॥

---

शुक्रः—

मम विद्या हि निर्द्वन्द्वा ऐश्वर्यं हि फलं मम ।
दैन्यं शाठ्यं च द्वेष्यं च नास्ति मे यदधर्मतः ॥ १

---

1. क-ग—गायन्नाहं तदा वेह न स्तोता न च वन्दिता ।
ब्राह्मणोऽहं च निर्द्वन्द्वमैश्वर्यं हि बलं मम ॥
दैन्यं शाठ्यं च जैह्म्यं च नास्ति मे तत्त्वतश्शुभे ॥
[अधिकः पाठः]

[1]यो वै परेषामाक्रोशान् अतिवादांस्तितिक्षते ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ २
यस्समुत्पतितं क्रोधं निगृह्णाति भयादिव ।
स यन्तेत्युच्यते सद्भिर् हयो रश्मिषु लम्बते ॥ ३
यस्समुत्पतितं क्रोधम् अक्रोधेन व्यपास्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४
यो वै मन्युं धार[2]यते अपवादांस्तितिक्षते ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥ ५
यो[3]यजेताश्वमेधेन मासि मासि शतं समाः ।
तस्मादक्रोधनश्श्रेष्ठः कामक्रोधौ न पूजितौ ॥ ६
क्रुद्धस्य निष्फलान्येव दानयज्ञतपांसि च ।
तस्मादक्रोधने यज्ञतपोदानं महाफलम् ॥ ७
न पूतो न तपस्वी च न यज्वा न च कर्मवित् ।
क्रोधस्य यो वशं गच्छेत् तस्य लोकद्वयं न च ॥ ८
पुत्रभृत्यसुहृन्मित्रभार्या धर्मश्च सत्यता ।
तस्यैतान्यपयास्यन्ति क्रोधशीलस्य निश्चितम् ॥ ९
यं कुमाराः कुमार्यश्च वैरं कुर्युस्स्त्रियोऽपि वा ।

---

1. क-ख-ग—यः परेषां नरो नित्यम
2. क-ख-ग—यति योऽति वादांस्तितिक्षति ।
3. क-ख-ग—यजेत परिश्रान्तो

स तैर्वैरं न कुर्वीत विद्यात्तस्य तदा बलम् ॥ १०

देवयानी—

वेदाहं तात बालाऽपि धर्माणां यद्यदन्तरम् ।
आक्रोशे चातिवादे च बुध्येऽहं गुरुलाघवम् ॥ ११

[1]अतिप्रवृद्धरोषस्य धर्ममुत्सृज्य तत्त्वतः ।
[2]शिष्यस्याशिष्यवृत्तेर्हि न क्षन्तव्यं बुभूषया ॥ १२

शिष्ये चाचार्यवृत्तिं हि विसृज्य विफथं गते ।
तस्मात्संकीर्णवृत्तेषु वासो मम न रोचते ॥ १३

दह्यमानास्सुतीव्रेण नीचाः परयशोऽग्निना ।
अशक्तास्तद्गतिं गन्तुं ततो निन्दां प्रकुर्वते ॥ १४

पुमांसं येऽभिनिन्दन्ति वृत्तेनाभिजनेन वा ।
न तेषु निवसेत्प्राज्ञश् श्रेयोऽर्थी पापबुद्धिषु ॥ १५

ये त्वेनमभिनन्दन्ति वृत्तेनाभिजनेन वा ।
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ १६

सुयन्त्रितावरा नित्यं विहीनाश्च धनैर्नराः ।
दुर्वृत्ताः पापकर्माणश् चण्डाला धनिनोऽपि वा ॥ १७

न हि जात्या हि चण्डालास् स्वकर्मविहितैर्विना ।
धनाभिजनविद्यासु सक्ताश्चण्डालधर्मिणः ॥ १८

---

1. क-ख-ग—स्ववृत्तिमननुष्ठाय
2. क-ख-ग—वृत्तिर्हि न क्षन्तव्या बुभूषता ॥

अकारणाद्ये द्विष्यन्ति परिवादं वदन्ति च ।
न तत्रास्य निवासोऽस्ति पाप्मभिः पापतां व्रजेत् ॥ १९

सुकृते दुष्कृते वाऽपि यत्र सज्जति यो नरः ।
ध्रुवं रतिर्भवेत्तत्र तस्माद्दोषं न रोचयेत् ॥ २०

वाचा दुरुक्तं तातेह दुहित्रा वृषपर्वणः ।
नातो दुःखतरं मन्ये त्रिषु लोकेष्वपि ध्रुवम् ॥ २१

निस्संशयो विशेषेण परुषं मर्मकृन्तनम् ।
सुहृन्मित्रजनास्तेषु सौहृदं न च कुर्वते ॥ २२

यस्सपत्ने श्रियं दीप्तां हीनश्रीः पर्युपासते ।
अवमानमवाप्नोति शनैर्नीचेषु सङ्गतः ॥ २३

वाक्सायका वदनान्निष्पतन्ति
यैराहतश्शोचति रात्र्यहानि ।
शनैर्दुःखं शस्त्रविषाग्निजातं
तान्पण्डितो नावसृजेत्परेषु ॥ २४

संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ७ ॥ संभवपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

## ॥ चतुष्षष्टितमोऽध्यायः ॥

शुक्रवृषपर्वणोः संवादः ॥ १ ॥ शर्मिष्ठया देवयानीदास्याङ्गीकारः ॥

वैशंपायनः—

ततः काव्यो गुरुश्रेष्ठस् समन्युरुपगम्य च ।
[1]प्रविश्यान्तः पुरं शुक्रो वन्दितो वृषपर्वणा ॥ १
वृषपर्वाणमासीनम् इत्युवाचाविचारयन् ॥ १॥
अधर्मश्चारितो राजन् सद्यः फलति गौरिव ।
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ॥ २॥
फलतीवेत्यश्रवं पापं गुरुभुक्तमिवोदरे ।
अधीयानं हितं राजन् क्षमावन्तं जितेन्द्रियम् ॥ ३॥
यद्घातयथा विप्रं कचमाङ्गिरसं तदा ।
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहोषितम् ॥ ४॥
शर्मिष्ठया देवयानी क्रूरमुक्ता बहु प्रभो !
विप्रकृत्य च संरम्भात् कूपे क्षिप्ता मनस्विनी ॥ ५॥
सा न कल्पेत वासाय तया वा रहितः कथम् ।
वसेयमिह तस्मात्ते त्यजामि विषयं नृप ॥ ६॥

---

1. क-ख-ग—स प्रविश्यासने शुक्रस् सन्दष्टोष्ठपुटो रुषा ।

वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम् ।
मा शोचीर्वृषपर्वंस्त्वं मा रुधस्त्वं विशांपते ॥ ७॥

स्थातुं ते विषये राजन् न शक्ष्यामि तया विना ।
तस्या गतिर्गतिर्मह्यं प्रियमस्याः प्रियं मम ॥ ८॥

वृषपर्वा—

यदि ब्रह्मन् घातयामि यदि वा क्रोशयाम्यहम् ।
शर्मिष्ठया देवयानीं तेन गच्छाम्यसद्गतिम् ॥ ९॥

शुक्रः—

अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
तथेममात्मनो दोषं मयि कर्तुं चिकीर्षसि ॥ १०॥

वृषपर्वा—

नाधर्मं न मृषोक्तं वा त्वयि जानामि भार्गव ।
त्वयि धर्मं च सत्यं च विजानामि प्रसीद मे ॥ ११॥

यद्यस्मानपहाय त्वम् इतो गच्छसि भार्गव ।
समुद्रं संप्रवेक्ष्यामि पूर्वं मद्बान्धवैस्सह ॥ १२॥

पातालमथवा चाग्निं नान्यदस्ति परायणम् ।
यद्येव देवान् गच्छेस्त्वं मां च त्यक्त्वा महाधिप ॥ १३॥
सर्वत्यागं ततः कृत्वा प्रविशामि हुताशनम् ॥ १४

शुक्रः—

समुद्रं प्रविश त्वं वा अग्निं प्रज्वलितं तथा ।
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे ॥ १५

प्रसाद्यतां देवयानी जीवितं यत्र मे स्थितम् ।
प्रसन्ना देवयानी चेत् प्रियं नान्यतरं मम ॥ १६

योगक्षेमकरस्तेऽहम् इन्द्रस्येव बृहस्पतिः ॥ १६॥

वृषपर्वा—

यत्किंचिदसुरेन्द्राणां वसु विद्यति भार्गव ।
मम हस्तिगवाश्वं च तस्य त्वं मम चेश्वरः ॥ १७॥

शुक्रः—

यत्किंचिदस्ति द्रविणं दैत्येन्द्राणामिहासुर ।
तस्येश्वरोऽहं यदि चेद् देवयानी प्रसाद्यताम् ॥ १८॥

वैशंपायनः—

शुक्रस्य वचनं श्रुत्वा वृषपर्वा सबान्धवः ।
देवयानीं प्रसीदेति पपात भुवि पादयोः ॥ १९॥

देवयानी—

यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् ॥ २०॥

वृषपर्वा—

स्तुत्यो वन्द्यश्च सततं मया तातश्च ते शुभे ॥ २१

यत्काममभिकामाऽसि देवयानि शुचिस्मिते ।
तत्तेऽहं संप्रदास्यामि यदि चेदपि दुस्त्यजम् ॥ २२

देवयानी—

दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये ।
अनुगच्छेत्तु सा मां हि यत्र दास्यति मे पिता ॥ २३

वृषपर्वा—

उत्तिष्ठ हंसगतिके शर्मिष्ठां शीघ्रमानय ।
यश्च कामयते कर्तुं देवयानी करोतु तत् ॥ २४

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २५

वैशम्पायनः—

ततो धात्री गृहं गत्वा शर्मिष्ठां वाक्यमब्रवीत् ।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ २६

त्यजति ब्राह्मणश्शिष्यान् देवयान्या प्रचोदितः ।
सा यं कामयते कामं देवयानी कुरुष्व तत् ॥ २७

शर्मिष्ठा—

यं सा कामयते कामं करवाण्यहमद्य तम् ।
मा त्वेवोपगमेच्छुक्रो देवयान्या प्रचोदितः ॥ २८

वैशंपायनः—

ततः कन्यासहस्रेण वृता शिबिकया तदा ।
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् ॥ २९

शर्मिष्ठा—

अहं दासीसहस्रेण दासी ते परिचारिका ।
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता ॥ ३०

देवयानी—

स्तुवतो दुहिता चाहं बन्दिनः प्रतिगृह्णतः ।
स्तूयमानस्य दुहिता कथं दासी भविष्यसि ॥ ३१

शर्मिष्ठा—

येन केन चिदार्तानां ज्ञातीनां यत्सुखावहम् ।
सर्वमादृत्य कर्तव्यम् एष धर्मस्सनातनः ॥ ३२
एवं कृत्वा करिष्यामि यन्मां वक्ष्यसि शोभने ।
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता ॥ ३३

वैशंपायनः—

प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः ।
देवयानी नृपश्रेष्ठ पितरं तमथाब्रवीत् ॥ ३४

देवयानी—

प्रविशाम पुरं तात तुष्टाऽस्मि द्विजसत्तम ।
अमोघं तव विज्ञानम् अस्ति विद्याबलं च ते ॥ ३५

वैशम्पायनः—

एवमुक्तो दुहित्रा स भृगुश्रेष्ठो महातपाः ।
प्रविवेश पुरं हृष्टः पूजितस्सर्वदानवैः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

॥ ७ ॥ संभवपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये ३६ श्लोकाः]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

शुक्राज्ञया ययातेः शर्मिष्ठा देवयान्योर्विवाहः ॥ १ ॥

वैशंपायनः—

अथ [1]दीर्घेण कालेन देवयानी नृपोत्तम ।
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी ॥ १

तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा ।
तमेव देशं संप्राप्ता यथाकामं चचार सा ॥ २

ताभिस्सखीभिस्सहितास् सर्वाभिर्मुदिता भृशम् ।
क्रीडित्वोपरतास्सर्वाः पिबन्त्यो मधु माध्विकम् ॥ ३

खादन्त्यो विविधान् भक्ष्यान् विदंशन्त्यः फलानि च ॥ ३॥

1. क-ख-ग—दीर्घस्य कालस्य

पुनश्च नाहुषो राजा मृगलिप्सुः [1]पिपासया ।
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ॥ ४॥
ददर्श देवयानीं च शर्मिष्ठां ताश्च योषितः ।
पिबन्तीर्वल्गमानाश्च सर्वाभरणभूषिताः ॥ ५॥
आसने प्रवरे दिव्ये सर्वाभरणभूषिते ।
उपविष्टां सुकेशान्तां देवयानीं शुचिस्मिताम् ॥ ६॥
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनाम् ।
आसनाच्च ततः किंचिद् विहीनां हेमभूषिताम् ॥ ७॥
असुरेन्द्रसुतां चापि निषण्णां चारुहासिनीम् ।
ददर्श पादौ विप्रायास् संवहन्तीमनिन्दिताम् ॥ ८॥
गायन्त्यश्चैव नृत्यन्त्यो वादयन्त्यश्च भारत ।
दृष्ट्वा ययातिं ललना लज्जयाऽवनता स्थिताः ॥ ९॥

ययातिः—

युवां कन्यासहस्रेण द्वे कन्ये परिवारिते ।
गोत्रे च नामधेये च श्रोतुमिच्छामि वामहम् ॥ १०॥

देवयानी—

आख्यास्याम्यहमादत्स्व वचनं मे नरोत्तम ।
शुक्रो नामासुरगुरुस् सुतां जानीहि तस्य माम् ॥ ११॥

1. क-ख-ग—र्थंइच्छया

इयं च मे सखी दासी यत्राहं तत्र भामिनी ।
दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ १२॥

ययातिः—

कथं नु ते सखी दासी कन्येयं वरवर्णिनी ।
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ १३॥

[1]नैवंरूपा मया नारी दृष्टपूर्वा महीतले ।
श्रीरिवायतपद्माक्षी सर्वलक्षणशोभिता ॥ १४॥

असुरेन्द्रसुता कन्या सर्वालङ्कारभूषिता ।
दैवेन विहता सुभ्रूर् उताहो तपसाऽपि वा ॥ १५॥

अन्यथैषाऽनवद्याङ्गी दासी [2]ते न भविष्यति ॥ १६

देवयानी—

सर्व एव नरव्याघ्र विधानमनुवर्तते ।
विधानविहितं मत्वा मा विचारय सुव्रत ॥ १७

राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च ।
को नाम त्वं कुतश्चासि कस्य पुत्रश्च शंस मे ॥ १८

ययातिः—

ब्रह्मचर्येण सर्वान् वै साङ्गान् वेदान् विदाम्यहम् ।
राजाऽहं राजपुत्रश्च ययातिरिति विश्रुतः ॥ १९

---

1. अं—एवंरूपा मया देवि 2. क-ख-ग—नेह

देवयानी—

केनास्यर्थेन नृपते इमं देशमुपागतः ।
जिघृक्षुर्वा रिपुं कंचिद् अथवा मृगलिप्सया ॥ २०

ययातिः—

मृगलिप्सुरहं भद्रे पानीयार्थमिहागतः ।
बहुधाऽप्यनुयुक्तोऽस्मि तन्माऽनुज्ञातुमर्हसि ॥ २१

देवयानी—

अहं दासीसहस्रेण दास्या शर्मिष्ठया सह ।
त्वदधीनाऽस्मि भद्रं ते साधु भर्ता च मे भव ॥ २२

वैशंपायनः—

असुरेन्द्रसुतामीक्ष्य तस्यां सक्तेन चेतसा ।
शर्मिष्ठा महिषी मह्यम् इति मत्वा वचोऽब्रवीत् ॥ २३

ययातिः—

[1]विद्ध्यनागसि भद्रं ते न त्वमर्हसि भामिनि ।
[2]अदेवाह्या हि राजानो देवयानि पितुस्तव ॥ २४

परभार्या स्वसा [3]श्रेष्ठा सगोत्रा पतिता स्नुषा ।
[4]अपराभिगमाऽस्वस्था [5]अकल्याः कीर्तिता बुधैः ॥ २५

देवयानी—

संसृष्टं ब्रह्मणा क्षत्रं क्षत्रं च ब्रह्मसंहितम् ।

---

1. क-ख-ग—विद्ध्यौशनसि 2. क-ख-ग—अविवाह्या हि
3. क-ख-ग—ज्येष्ठा 4. ख—अवरा भिक्षुका 5. क-ख-ग—अगम्याः

तयोरत्यन्तता नास्ति एकान्तरतमौ हि तौ ॥ २६
ऋषिस्त्वमृषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥ २६॥

यथातिः—

एकत्रैवोद्भवा वर्णाश् चत्वारोऽपि वराङ्गने ।
पृथग्धर्माः पृथक्शौचास् तेषां च ब्राह्मणो वरः ॥ २७॥

देवयानी—

पाणिर्मे नाहुषाऽयं वै न पुंभिस्सेवितः पुरा ।
त्वमेव चाग्रहीरग्रे वृणोमि त्वामहं ततः ॥ २८॥

कथं नु मे मनस्विन्याः पाणिमन्यः पुमान् स्पृशेत् ।
गृहीतमृषिपुत्रेण स्वयं पूर्वं नृप त्वया ॥ २९॥

ययातिः—

क्रुद्धादाशीविषाच्छस्त्राज् ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्रः पुरुषेण विपश्चिता ॥ ३०॥

देवयानी—

कथमाशीविषाच्छस्त्राज् ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्र इत्यात्थ भरतर्षभ ॥ ३१॥

ययातिः—

एकमाशीविषो हन्ति शस्त्रमेकं हनिष्यति ।
सराष्ट्रं सबलं हन्ति विप्रः कोपेन संयुतः ॥ ३२॥

दुराधर्षतरो विप्रस् तस्माद्भीरु मतो मम ॥ ३३
कश्चिदाशीविषो हन्यात् छस्रमन्यन्निकृन्तति ।
यदृच्छयाऽग्निर्दहति मनसा हन्ति वै द्विजः ॥ ३४
अतो न दत्तां पित्रा त्वां भद्रे न वरयाम्यहम् ॥ ३४॥

देवयानी—

दत्तां वहस्व राजेन्द्र पित्रा राजन् वृतो मया ।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥ ३५॥
तिष्ठ राजन् मुहूर्तं तु प्रेषयिष्याम्यहं पितुः ।
गच्छ त्वं धात्रिके शीघ्रं ब्रह्मकल्पमिहानय ॥ ३६॥
स्वयंवरे वृतं शीघ्रं निवेदय च नाहुषम् ॥ ३७

वैशंपायनः—

त्वरितं देवयान्या तु प्रेषितं पितुरात्मनः ।
श्रुत्वैव च वचस्तत्र दर्शयामास भार्गवः ॥ ३८
दृष्ट्वैव चागतं विप्रं ययातिः पृथवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतास्थितः ॥ ३९

देवयानी—

राजाऽयं नाहुषस्तात दुर्गमे पाणिमस्पृशत् ।
नान्यपूर्वगृहीतं मे तेनाहमभया कृता ॥ ४०
नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे ॥ ४०॥

शुक्रः—

अन्यो धर्मः प्रियस्त्वन्यो वृतस्ते नाहुषः पतिः ।

[1]वृतो राजन् वृणीष्वेमां महिर्षीं नहुषात्मज ॥ ४१॥

स्वयं ग्रहे महान्दोषो ब्राह्मण्यां वर्णसंकरात् ।

गृहाणेमां मया दत्तां महिर्षीं नहुषात्मज ॥ ४२॥

ययातिः—

अधर्मो न स्पृशेदेष महान् मामिह भार्गव ।

वर्णसङ्करतो ब्रह्मन् भयादेतद्ब्रवीम्यहम् ॥ ४३॥

शुक्रः—

अधर्मात्त्वां विमुञ्चामि वरय त्वं यथेप्सितम् ।

तस्मात्तु पापान्माभैषीर् अहं पापं नुदामि ते ॥ ४४॥

वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।

अनया सह संप्रीतिम् अतुलां त्वमवाप्स्यसि ॥ ४५॥

इयं कुमारी दुहिता शर्मिष्ठा वृषपर्वणः ।

तां पूजयेथा मा चैनां शयने वै समाह्वय ॥ ४६॥

रहस्येनां समाहूय न वदेर्न च संस्पृशेः ।

वहस्व भार्यां भद्रं ते यथा काममवाप्स्यसि ॥ ४७॥

वैशम्पायनः—

तथेत्युक्त्वा ययातिस्तु तत्सर्वमकरोत्प्रभुः ।

---

1. क-ख-ग—कचशापात्त्वया पूर्वं नान्यद्भवितुमर्हति ।
[अधिकः पाठः]

विवाहं विधिवत्कृत्वा प्रदक्षिणमथाकरोत् ॥ ४८॥

ययातिस्स्वपुरं यायाद् अनुज्ञातो महात्मना ॥ ४९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५॥

॥ ७ ॥ संभवपर्वणि दशमोऽध्यायः ॥ १० ॥

[अस्मिन्नध्याये ४९ श्लोकाः]

## ॥ षट्षष्टितमोऽध्यायः ॥

देवयान्याः पुत्रोत्पत्तिः ॥ १ ॥ अशोकवनिकायां शर्मिष्ठाया ययातिसमागमात्पुत्रोत्पत्तिः ॥ २ ॥

वैशंपायनः—

ययातिस्स्वपुरं गत्वा पताकाभिरलङ्कृतम् ।
प्रविश्यान्तः[1]पुरं तत्र देवयानीं न्यवेशयत् ॥ १

देवयान्याश्चानुमते सुतां तां वृषपर्वणः ।
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् ॥ २

वृतां दासीसहस्रेण शर्मिष्ठामसुरात्मजाम् ।
वासोभिरन्नपानैश्च संविभज्य सुसत्कृताम् ॥ ३

देवयान्या तु सहितो ययातिर्नहुषात्मजः ।
प्रीत्या परमया युक्तो मुमुदे शाश्वतीस्समाः ॥ ४

1. अ—पुरे

अशोकवनिकामध्ये देवयानी समागता ।
शर्मिष्ठया सा क्रीडित्वा रमणीये मनोरमे ॥ ५

तत्रैव तां तु निर्दिश्य राज्ञा सह ययौ गृहम् ।
एवमेव सह प्रीत्या मुमुदे बहुकालतः ॥ ६

विजहार बहून्देशान् देववन्मुमुदे भृशम् ॥ ६॥

ऋतुकाले तु संप्राप्ते देवयानी शुचिस्मिता ।
लेभे गर्भं प्रथमतः कुमारश्च व्यजायत ॥ ७॥

गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
सा तु काले ऋतुस्नाता भर्तारं समचिन्तयत् ॥ ८॥

शुद्धा स्नाता तु शर्मिष्ठा सर्वालङ्कारभूषिता ।
अशोकशाखामालम्ब्य सुफुल्लैस्स्तबकैर्वृताम् ॥ ९॥

आदर्शे मुखमुद्वीक्ष्य भर्तुर्दर्शनलालसा ।
शोकमोहसमाविष्टा वचनं चेदमब्रवीत् ॥ १०॥

अशोक शोकापनुद शोकोपहतचेतसाम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियसंदर्शनाद्धि माम् ॥ ११॥
एवमुक्तवती सा तु शर्मिष्ठा पुनरब्रवीत् ॥ १२

ऋतुकालश्च मे प्राप्तो न च भर्ताऽस्ति कश्चन ।
किं प्राप्तं किं नु कर्तव्यं किं कृत्वा सुकृतं भवेत् ॥ १३

देवयानी प्रजाताऽसौ यथा संप्राप्तयौवना ।
देवयानी पुण्यकृता तस्या भर्ता हि नाहुषः ॥ १४
यथा तस्या भवेद्भर्ता ममाप्येष तथा भवेत् ।
राज्ञा पुत्रफलं देयम् इति मे निश्चिता मतिः ॥ १५
अपीदानीं स धर्मात्मा यायान्मे दर्शनं पुनः ।
केशे बध्वा तु राजानं याचेऽहं सदृशं पतिम् ॥ १६
गृहे मुदा देवयानी पुत्रमीक्ष्य पुनः पुनः ।
क्रीडत्यन्तःपुरे तस्याः कंचित्क्षणमवाप सः ॥ १७
अथ निष्क्रम्य राजर्षिस् तस्मिन् काले यदृच्छया ।
अशोकवनिकाभ्याशे शर्मिष्ठां प्रेक्ष्य तिष्ठति ॥ १८
दृष्ट्वा तमेकं रहसि शर्मिष्ठा चारुहासिनी ।
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत् ॥ १९

शर्मिष्ठा—

सोमस्येन्द्रस्य विष्णोर्वा यमस्य धनदस्य च ।
तव वा नाहुष कुले कस्त्वयं स्प्रष्टुमर्हति ॥ २०
रूपाभिजनशीलैर्हि त्वं राजन् वेत्थ मां सदा ।
त्वां याचे संप्रसाद्याहं [1]तं तु मे दातुमर्हसि ॥ २१

ययातिः—

वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम् ।

---

1. क-ख-ग—सुतं देहि नराधिप ।

रूपेण ते न पश्यामि सूच्यग्रमपि निन्दितम् ॥ २२

तदाप्रभृति दृष्ट्वा त्वां स्मराम्यनिशमुत्तमे ।
अब्रवीदुशना काव्यो देवयानीं सदा वह ॥ २३

नेयमाह्वयितव्या ते शयने वाऽन्यथापि वा ।
देवयान्याः प्रियं कृत्वा शर्मिष्ठामपि पोषय ॥ २४

शर्मिष्ठा—

न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ २५

पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा
[1]मिथ्या तदर्थं चरितं नरेन्द्र ।
एकार्थतायां च समाहितायां
मिथ्या वदन्तं ह्यनृतं हिनस्ति ॥ २६

अनृतं नानृतं स्त्रीषु परिहासविवाहयोः ।
आत्मप्राणार्थघातेषु तदेवोत्तमतां व्रजेत् ॥ २७

ययातिः—

राजा प्रमाणं भूतानां विनश्येत मृषा वदन् ।
अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे ॥ २८

---

1. क-ख-ग—वदन्ति मिथ्योपहतं नरेन्द्र ।

शर्मिष्ठा—

उभौ हि च पती लोके पतिस्सख्याः पतिश्च यः ।
समं विवाहमित्याहुस् सख्या मेऽसि पतिर्वृतः ॥ २९

त्रय एवाधना राजन् भार्या दासस्सुतस्तथा ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ३०

सह दत्तास्मि काव्येन देवयान्या महर्षिणा ।
पूज्या पोषयितव्येति न मृषा कर्तुमर्हसि ॥ ३१

सुवर्णमणिरत्नानि वस्त्राण्याभरणानि च ।
याचितॄणां ददासि त्वं गोभूम्यादीनि यानि च ॥ ३२

बाहिकं दानमित्युक्तं न शरीराश्रितं नृप ।
दुष्करं पुत्रदानं च आत्मदानं च दुष्करम् ॥ ३३

शरीरदानात्तत्सर्वं दत्तं भवति नाहुष ।
यस्य यस्य यथा कामस् तस्य तस्य ददाम्यहम् ॥ ३४

इत्युक्त्वा नगरे राजंस्त्रिकालं घोषितं त्वया ॥ ३४॥

अनृतं तत्तु राजेन्द्र वृथा घोषितमेव च ।
तत्सत्यं कुरु राजेन्द्र यथा वैश्रवणस्तथा ॥ ३५॥

ययातिः—

दास्यामि याचते नित्यम् इति मे व्रतमाहितम् ।
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते ॥ ३६॥

धनं वा यदि वा किंचिद् राज्यं वाऽपि शुचिस्मिते ॥ ३७

वैशंपायनः—

अधर्मात्त्राहि मां राजन् धर्मं च प्रतिपादय ।

नान्यं वृणे पुत्रकामात् पुत्रात्परतरं न च ॥ ३८

त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ।

पुत्रार्थं भर्तृपोषार्थं स्त्रियस्सृष्टास्स्वयंभुवा ॥ ३९

अपतिश्चापि या कन्या अनपत्या च या भवेत् ।

तस्या जन्म वृथा लोके गतिस्तस्या न विद्यते ॥ ४०

देवयान्या भुजिष्याऽस्मि वश्या च तव भार्गवि ।

सा चाहं च त्वया राजन् भरणीये भजस्व माम् ॥ ४१

वैशंपायनः—

एवमुक्तस्तु राजा स तथ्यमित्येव जज्ञिवान् ।

काव्याच्च देवयान्याश्च भीतो धर्मभयादपि ॥ ४२

पूजयामास शर्मिष्ठां धर्मे च [1]प्रतिपादयन् ।

ऋत्विक्पुरोहिताचार्यैर् मन्त्रिभिश्चापि संवृतः ॥ ४३

कृत्वा विवाहं विधिवद् दत्वा ब्राह्मणदक्षिणाम् ।

पुण्ये नक्षत्रसंयोगे मुहूर्ते द्विजपूजिते ॥ ४४

समागम्य च शर्मिष्ठां यथा काममवाप्य च ।

अन्योन्यं पूजयित्वा तु जग्मतुस्तौ यथागतम् ॥ ४५

1. क-ख-ग—प्रत्यपादयत्

तस्मिन् समागमे सुभ्रूश् शर्मिष्ठा चारुहासिनी ।
लेभे गर्भं प्रथमतस् तस्माद्राजर्षिसत्तमात् ॥ ४६

प्रजज्ञे च ततः काले क्रियाः कृत्वा विशेषतः ।
कुमारं देवगर्भाभं राजीवनिभलोचनम् ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

॥ ७ ॥ संभवपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये ४७ श्लोकाः ।]

---

## ॥ सप्तषष्टितमोऽध्यायः ॥

---

शर्मिष्ठादेवयान्योः पुनः पुत्रोत्पत्तिः ॥ १ ॥ शर्मिष्ठापुत्रान् ययातिजान् ज्ञात्वा शुक्रसमीपे गमनम् ॥

---

वैशंपायनः—

तस्मिन्नक्षत्रसंयोगे शुक्ले पुण्यर्क्षगेन्दुना ।
स राजा मुमुदे सम्राट् तया शर्मिष्ठया सह ॥ १

ययातिः—

प्रजानां श्रीरिवा[1]ढ्या मे शर्मिष्ठा ह्यभवद्वधूः ।
पद्मगीवोग्ररूपेयं देवयानी ममह्यभूत् ॥ २

पर्जन्य इव सस्यानां देवानाममृतं यथा ।

---

1. क-ग—ध्याशे

तद्वन्ममापि संभूता शर्मिष्ठा वार्षपर्वणी ॥ ३
इत्येवं मनसा ध्यात्वा देवयानीमवर्जयत् ॥ ३॥

वैशम्पायनः—

श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता ।
चिन्तां बहुविधां चक्रे शर्मिष्ठां प्रति भारत ॥ ४॥
अभिगम्य तु शर्मिष्ठां देवयानी तथाऽब्रवीत् । ५

देवयानी—

किमिदं वृजिनं सुभ्रु कृतं ते कामलुब्धया ॥ ५॥

शर्मिष्ठा—

ऋषिरभ्यागतः कश्चिद् धर्मात्मा वेदपारगः ।
स मया वरदः कामी याचितो धर्मसंहितः ॥ ६॥
अपत्यार्थे स तु मया वृतो वै चारुहासिनि ।
नाहमन्यायतः कामम् आचरेयं शुचिस्मिते ॥ ७॥
तस्मादृषेर्ममापत्यम् इदं सत्यं शुचिस्मिते ॥ ८

देवयानी—

शोभनं भीरु सत्यं चेद् अथ विज्ञायते द्विजः ।
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ॥ ९

शर्मिष्ठा—

ओजसा तेजसा चैव दीप्यमानं यथा रविम् ।
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ॥ १०

देवयानी—

यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम ।
अपत्यं यदि ते लब्धं श्रेष्ठं श्रेष्ठाच्च भामिनि ॥ ११

वैशम्पायनः—

अन्योन्यमेवं संभाष्य संप्रहस्य च ते भृशम् ।
जगाम भार्गवी वेश्म तथ्यमित्यवजग्मुषी ॥ १२

ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वशुं चैव इन्द्रविष्णू इवापरौ । १३

तस्मिन् काले तु राजर्षिर् ययातिः पृथिवीपतिः ।
तां च माध्वीकसंयुक्तां मदिरां मदवर्धनीम् ॥ १४

पाययामास शुक्रस्य तनयां रक्तपिङ्गराम् ॥ १४॥
पीत्वा पीत्वा च मदिरां देवयानी मुमोह सा ॥ १५

रुदती गायमाना च नृत्यन्ती च मुहुर्मुहुः ।
बहु प्रलपती देवी राजानमिदमब्रवीत् ॥ १६

राजवद्रूपवेषौ ते किमर्थं त्वमिहागतः ।
केन कार्येण संप्राप्तो निर्जनं गहनं वनम् ॥ १७

द्विजश्रेष्ठ नृपश्रेष्ठो ययातिश्चोग्रदर्शनः ।
तस्मादितः पलायस्व हितमिच्छसि चेद्द्विज ॥ १८

इत्येवं प्रलपन्तीं तां देवयानीं तु नाहुषः ।

भर्त्सयामास वचनैरपापां हर्षवर्धनीम् ॥ १९

ततो वर्षवरान्मूकान् पङ्गून् वृद्धान् सपिण्डकान् ।
रक्षणे देवयान्याश्च पोषणे च शशास तान् ॥ २०

ततस्तु नाहुषो राजा शर्मिष्ठां प्राप्य बुद्धिमान् ।
रेमे च सुचिरं कालं तया शर्मिष्ठया सह ॥ २१

तस्मादेव तु राजर्षेश् शर्मिष्ठा वार्षपर्वणी ।
[1]द्रुह्युं चानुं च पूरुं च त्रीन् कुमारानजीजनत् ॥ २२

ततः काले तु कस्मिंश्चिद् देवयानी वराङ्गना ।
ययातिसहिता देवी जगाम प्रमदावनम् ॥ २३

सा ददर्श वने तत्र कुमारान् देवरूपिणः ।
क्रीडमानान् सुविस्रब्धान् विस्मिता चेदमब्रवीत् ॥ २४

देवयानी—

कस्यैते दारका राजन् देवपुत्रोपमाश्शुभाः ।
वर्चसा तेजसा चैव सदृशा मे मतास्तव ॥ २५

वैशंपायनः—

एवं पृष्ट्वा तु राजानं कुमारान् प्राप्य पृच्छति ॥ २६

तस्मिन्काले तु तच्छ्रुत्वा धात्री तेषां वचोऽब्रवीत् ॥ २६॥

---

1. क-ख-ग- शर्मिष्ठाकामुको राजा यदासीत्तद्गताकुलः ।
मदिराविवशां कृत्वा रेमे शर्मिष्ठयाऽन्वहम् ॥
[अधिकः पाठः]

किं न ब्रूत कुमारा वः पितरं वै द्विजर्षभम् ॥ २७

कुमाराः—

ऋषिश्च ब्राह्मणश्चैव द्विजातिश्चैव नः पिता ।
शर्मिष्ठा नानृतं ब्रूयाद् देवयानि क्षमस्व नः ॥ २८

देवयानी—

किंनामधेयगोत्रो वः पुत्रकाः ब्राह्मणः पिता ।
विब्रूत तत्त्वतः क्षिप्रं कश्चासौ क्व च वर्तते ॥ २९
प्रब्रूत मे यथातत्त्वं श्रोतुमिच्छामि तं ह्यहम् । २९॥

वैशंपायनः—

एवमुक्ताः कुमारास्ते देवयान्या सुमध्यया ।
तेऽदर्शयन् प्रदेशिन्या तमेव पितरं नृपम् ॥ ३०॥
शर्मिष्ठां मातरं चैव तस्याचख्युश्च दारकाः ॥ ३१
तदा रहः पृच्छ्यमानास् तथ्यमूचुश्च दारकाः ।
इत्युक्त्वा सहिता देव्या राजानमुपचक्रमुः ॥ ३२
नाभ्यनन्दत तान् राजा देवयान्यास्तदाऽन्तिके ॥ ३२॥
रुदन्तस्ते तु शर्मिष्ठाम् अभ्ययुर्बालकास्तदा ॥ ३३
अविब्रुवन्ती किंचिच्च राजानं चारुलोचना ।
नातिदूराच्च राजानम् अतितिष्ठदवाङ्मुखी ॥ ३४
श्रुत्वा तेषां तु बालानां प्रणयं पार्थिवं प्रति ।

लब्ध्वा तु तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् ॥ ३५
दृष्ट्वा तु तेषां बालानां सव्रीड इव पार्थिवः ।
प्रतिवक्तुमशक्तोऽभूत् तूष्णींभूतोऽभवन्नृपः ॥ ३६
गृहीत्वा तु करे रोषाच् छर्मिष्ठां पुनरब्रवीत् ॥ ३६॥

देवयानी—

अभ्यागच्छति मां कश्चिद् ऋषिरित्येवमब्रवीः ।
ययातिमेवं नूनं त्वं प्रोत्साहयसि भामिनि ॥ ३७॥
पूर्वमेव मया प्रोक्तं त्वया तु वृजिनं कृतम् ॥ ३८
मय्यधीना सती कस्माद् अकार्षीर्विप्रियं मम ।
तदेवासुरकर्म त्वं चरन्ती न बिभेषि मे ॥ ३९

शर्मिष्ठा—

यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ ४०
यदा त्वया वृतो राजा वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ ४१
पूज्या च मम मान्या च ज्येष्ठा साध्वी च ब्राह्मणी ।
त्वत्तो हि मे पूज्यतरो राजर्षिः किं न वेत्थ तत् ॥ ४२
त्वत्पित्रा मम गुरुणा सह दत्ते उभे शुभे ।
तव भर्ता च पूज्यश्च पोष्यां पोषयतीह माम् ॥ ४३

वैशंपायनः—

एवं श्रुत्वा ततो वाक्यं देवयान्यब्रवीदिदम् ॥ ४३॥

रमस्वेह यथाकामं देव्या शर्मिष्ठया सह ॥ ४४

राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ॥ ४४॥

इति जज्वाल कोपेन देवयानी ततो भृशम् ॥ ४५

निर्दहन्तीव सव्रीडां शर्मिष्ठां समुदीक्ष्य च ।

अपविध्य तु सर्वाणि भूषणान्यसितेक्षणा ॥ ४६

सहसोत्पतितां राजा दृष्ट्वैव सहसोत्थितः ।

त्वरया सकाशं काव्यस्य प्रस्थितां व्यथिताननाम् ॥ ४७

अनुवव्राज संभ्रान्तः पृष्ठतस्सान्त्वयन्नृपः ॥ ४७॥

न न्यवर्तत चैवं सा क्रोधसंरक्तलोचना ॥ ४८

अविब्रुवन्ती किंचिच्च राजानं चारुदर्शना ।

आचिरादिव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ ४९

सा तु दृष्ट्वैव पितरम् अभिवाद्येदमब्रवीत् ।

अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ ५०

देवयानी—

अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।

शर्मिष्ठयाऽतिवृत्ताऽस्मि दुहित्रा वृषपर्वणः ॥ ५१

त्रयोऽस्यां जनिताः पुत्रा राज्ञा तेन ययातिना ।

दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ ५२

धर्मिष्ठ इति विख्यात एष राजा कुरूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ ५३

शुक्रः—

धर्मज्ञस्सन् महाराज यो धर्मं नाकृथास्स्वयम् ।
तस्माज्जरा त्वां नाचिराद् धर्षयिष्यति दुर्जया ॥ ५४

ययातिः—

ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ ५५

[1]इत्थं वै याचमानाया न ददाति पुमान् वृतः ।
भ्रूणहेत्युच्यते ब्रह्मन् सदा वै ब्रह्मवादिभिः ॥ ५६

अभिकामां स्त्रियं चैव गम्यां रहसि याचितः ।
उपैति यस्स्वधर्मेषु किल्बिषी न च सः पुमान् ॥ ५७

यद्यद्याचति मां कश्चित् तत्तद्देयमिति व्रतम् ।
त्वया च सापि दत्ता मे नान्यं नाथमिहेच्छति ॥ ५८

मत्वैतन्मे धर्म इति कृतं ब्रह्मन् क्षमस्व माम् ॥ ५८॥

इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।
अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ॥ ५९॥

1 क-ख-ग —ऋतुं

शुक्रः—

न त्वहं प्रत्यवेक्ष्यस्ते मय्यधीनोऽसि पार्थिव ।
मिथ्याचारस्य धर्मेषु जरा भवति नाहुष ॥ ६०॥

वैशंपायनः—

क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ ६१॥

ययातिः—

अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मन् जरेयं मा विशेत माम् ॥ ६२॥

शुक्रः—

नाहं मृषा ब्रवीम्येनां जरां प्राप्तोऽसि भूमिप ।
जरां त्वेनां त्वमन्यस्मै संक्रामय यदीच्छसि ॥ ६३॥

ययातिः—

राज्यभाक्स भवेद्ब्रह्मन् पुण्यभाक्कीर्तिभाक् तथा ।
यो मे दद्याद्वयः पुत्रस् तद्भवाननुमन्यताम् ॥ ६४॥

शुक्रः—

संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥ ६५॥

वयो दास्यति ते पुत्रो यस्स राजा भविष्यति ।
आयुष्मान् कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ६६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

॥ ७ ॥ संभवपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[अस्मिन्नध्याये ६६॥ श्लोकाः]

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

स्वजरामनङ्गीकुर्वतां यदुप्रभृतीनां ययातिना शापः ॥ १ ॥ तामङ्गीकुर्वतः पूरोर्वरदानम् ॥ २ ॥

---

वैशंपायनः—

जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ १

ययातिः—

जरावली च मे तात पलितानि च पर्यगुः ।
काव्यस्योशनसश्शापान्न च तृप्तोऽस्मि यौवने ॥ २

त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ३

पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ४

यदुः—

सितश्मश्रुशिरा दीना जरया शिथिलीकृतः ।
वलीसन्ततगात्रश्च दुर्दर्शो दुर्बलः कृतः ॥ ५

अशक्तः कार्यकरणे परिभूतश्च यौवने ।
सहोपजीविभिश्चैव तां जरां नैव कामये ॥ ६

ययातिः—

यो मे त्वं हृदयाज्जातो वयस्त्वं न प्रयच्छसि ।
तस्माद्राज्यभाक्तात प्रजा वै ते भविष्यति ॥ ७

वैशम्पायनः—

प्रत्याख्यातस्स राजा तु तुर्वशुं प्रत्युवाच ह ॥ ७॥

ययाति.—

तुर्वशो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ ८॥

पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ९॥

तुर्वशुः—

न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं बुद्धिप्राणविनाशिनीम् ॥ १०॥

ययातिः—

यो मे त्वं हृदयाज्जातो वयस्त्वं न प्रयच्छसि ।

[1]तुर्वशो त्वं प्रियं कामं नैतत्सम्पत्स्यसे क्वचित् ।	११॥
अराजा भोजशब्दं तु तत्रावाप्स्यसि सान्वयः ।
तस्मात्प्रजासमुच्छेदं तुर्वशो तव यास्यति ॥	१२॥
सङ्कीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
म्लेच्छेषु पिशिताशेषु मूढो राजा भविष्यसि ॥	१३॥
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
[2]छिन्नधर्मस्वरूपेषु व्याधेषु जनयिष्यसि ॥	१४॥

वैशंपायनः—

एवं स तुर्वशुं शप्त्वा ययातिस्सुतमात्मनः ।
शर्मिष्ठायास्सुतं द्रुह्युम् इदं वचनमब्रवीत् ॥	१५॥

ययातिः—

द्रुह्यो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
[3]पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ॥	१६॥

द्रुह्युः—

जीर्णश्शिशुवदादत्ते कालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं न बुध्यति च कालतः ॥	१७॥

---

1. क-ख-ग—यत्रोडुप्लवसन्तारास्तत्र नित्यं भविष्यसि ।
[अधिकः पाठः]

2 क-ख-ग—पशुधर्मेष्वधर्मेषु
3. क-ख-ग—यौवनेन चरेयं वै विषयांस्तवपुत्रक ।
[अधिकः पाठः]

न च कृत्यं करोत्येष तां जरां नाभिकामये ॥ १८

ययातिः —

यो मे त्वं हृदयाज्जातो वयस्त्वं न प्रयच्छसि ।
जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं नाभिपत्स्यसे ॥ १९

प्रजाश्च यौवनं प्राप्ता विनशिष्यन्त्यतस्तव ।
अग्निप्रस्पन्दनपरस् त्वं चाप्येवं भविष्यसि ॥ २०

1ययातिः —

अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं वै चरेयं तव रूपधृक् ॥ २१

पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा च प्रतिपत्स्ये वै पाप्मानं जरया सह ॥ २२

अनुः—

न हस्तिनं नरो नाश्वं जीर्णो भुङ्क्ते न पीठकम् ।
वाग्दुर्भगाऽस्य भवति तां जरां नैव कामये ॥ २३

ययातिः—

यो मे त्वं हृदयाज्जातो वयस्त्वं न प्रयच्छसि ।
हस्त्यश्वरथमुख्यानाम् अध्वा न स्यात्कदाचन ॥ २४

---

1. क-ख-ग—अराजा तव जातश्च भविष्यति च दुर्मते ।
एवं ब्रुवन्तं शप्त्वाथ ययातिस्सुतमात्मनः ।
शर्मिष्ठायास्सुतं चानुम् इदं वचनमब्रवीत् ॥
[अधिकः पाठः]

हस्तिनां पीठकानां वा गर्दभानां तथैव च ।
उष्ट्राणां च गवां चैव शिबिकायास्तथैव च ॥ २५
यद्वाऽन्यद्वाहनं किञ्चिद् देवो हन्यात् क्वचित्क्वचित् ।
अराजा तव जातश्च भविष्यति च दुर्मते ॥ २६

वैशम्पायनः—

प्रत्याख्यातश्चतुर्भिस्तु [1]शपित्वा तान् यदृच्छया ।
पूरोस्सकाशमगमज् ज्ञात्वा पूरु[2]मलिङ्गिनम् ॥ २७

ययातिः—

पूरो त्वं मे प्रियः पुत्रस् त्वं गरीयान् भविष्यसि ।
जरा वली च मे तात पलितानि च पर्यगुः ॥ २८
काव्यस्योशनसश्शापान्न च तृप्तोऽस्मि यौवने ।
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ॥ २९
यथाकालं चरेयं वै विषयान् वयसा तव ॥ २९॥
पूर्णे वर्षसहस्रे तु [3]प्रतिदास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ३०॥

वैशंपायनः –

एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यदात्थ मां महाराज तत्करिष्यामि ते वचः ॥ ३१॥
गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात् त्रैलोक्यम् अन्वशासच्छतक्रतुः ॥ ३२॥

---

1. क-ख-ग—शप्त्वा तान्यथादिच्छया
2. क-ख-ग—मलङ्कनम्
3. अ—प्रतिपत्स्यामि

गुरोरनुमतिं प्राप्य सर्वान् कामानवाप्नुयात् ।
प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह ॥ ३३॥
यावदिच्छसि वा जीवं तावत्तां धारयाम्यहम् ।
गृहाण यौवनं मत्तश्चर कामान् यथेप्सितान् ॥ ३४॥
जरयाऽहं प्रतिच्छन्नो वसे रूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ॥ ३५॥

ययातिः—
पूरो प्रीतोऽस्मि भद्रं ते प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ७ ॥ संभवपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ३६॥ श्लोकाः ।]

---

## ॥ एकोनसप्ततितमोऽध्यायः ॥

विषयानुभवेन ययातेर्वैराग्यप्राप्तिः ॥ १ ॥ पूरोः ययातिना यौवनप्रत्यर्पणम् ॥ २ ॥ तस्य राज्याभिषेकः ॥ ३ ॥ ययातेर्वनं प्रति गमनम् ॥ ४ ॥ यदुप्रभृतीनां वंशकथनम् ॥ ५ ॥

---

वैशंपायनः—
पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
रूपयौवनसंपन्नः कुमार [1]स्समपद्यत ॥ १

1. क-ख-ग—इव सोऽभवत्

प्रीतियुक्तो नृपश्रेष्ठश् चचार विषयान् प्रियान् ॥ १॥

यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरुद्धं राजेन्द्रो यथा भवति सोऽन्वभूत् ॥ २॥

देवानतर्पयद्यज्ञैश् श्राद्धैस्तद्वत्पितॄनपि ।
दीनान्धकृपणान् वृद्धान् अनाथांश्चाभ्यपूजयत् ॥ ३॥

अतिथीनन्नपानैश्च विशश्च परिपालनैः ।
आनृशंस्येन शूद्रांश्च दस्यून्निग्रहणेन च ॥ ४॥

[1]धर्मेण स्वप्रजास्सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ५॥

स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ ६॥

स संप्राप्य सुखान् कामांस् तृप्तः खिन्नश्च पार्थिवः ।
कालं वर्षसहस्रं तत् सस्मार मनुजाधिपः ॥ ७॥

परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान् ।
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ॥ ८॥

ययातिः—

यथाकामं यथोत्साहं यथाकालमरिन्दम ।
सेविता विषयाः पुत्र यौवनेन मया तव ॥ ९॥

---

1. अ=ख—धर्मेण च

तेजसा तव सत्पुत्र पूर्णं यौवनमुत्तमम् ।
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ॥ १०॥

राज्यं च मे गृहाणेदं यावदिच्छसि यौवनात् ।
तावद्दीर्घायुषा भुङ्क्ष्व त्वं हि मे प्रियकृत्सुतः ॥ ११॥

वैशंपायनः—

प्रतिपेदे जरां राजा ययातिर्नहुषात्मजः ।
यौवनं प्रतिपेदे च पूरुस्स्वं पुनरात्मवान् ॥ १२॥

अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखाः पौरा इदं वचनमब्रुवन् ॥ १३॥

कथं शुक्रस्य नप्तारं देवयान्यास्सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यसि ॥ १४॥

यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वशुः ।
शर्मिष्ठायास्सुतो द्रुह्युर् अनुः पूरुश्च पार्थिव ॥ १५॥

कथं ज्येष्ठानतिक्रम्य यवीयान् राज्यमर्हति ।
एतत्संबोधयामस्त्वां धर्मं त्वमनुपालय ॥ १६॥

ययातिः—

ब्राह्मणप्रमुखा वर्णास् सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथं चन ॥ १७॥

मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रस्सतां मतः ॥ १८॥

मातापित्रोर्वचनकृद्धितश्च विभवस्य च ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ १९॥
पुदिति नरकस्याख्या दुःखं हि नरकं विदुः ।
पुतस्त्राणात्ततः पुत्त्रम् इहेच्छन्ति परत्र च ॥ २०॥
आत्मनस्सदृशः पुत्रः पितृदेवर्षिपूजने ।
यो बहूनां गुणकरस् स पुत्रो ज्येष्ठ उच्यते ॥ २१॥
[1]ज्येष्ठांशभाक् स गुणकृद् इह लोके परत्र च ॥ २२
श्रेयान् पुत्रो गुणोपेतस् स पुत्रो नेतरो वृथा ।
वदन्ति धर्मं धर्मज्ञाः पितृणां पुत्रकारणात् ॥ २३
यदुनाऽहमवज्ञातस् तथा तुर्वशुना पुनः ।
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् ॥ २४
पूरुणा मे कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान् मम दायादो धृता येन जरा मम ॥ २५
[2]भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥ २५॥

---

1. ख-ग—मूकोऽन्धो बधिरः श्वित्री स्वधर्मं नानुतिष्ठति ।
चोरः किल्बिषिकः पुत्रो ज्येष्ठो न ज्येष्ठ उच्यते ॥
[अधिकः पाठः]

2. क-ख-ग—वेदोक्तं संभवं मह्यम् अनेन हृदयोद्भवम् ।
तस्य जातमिदं कृत्स्नम् आत्मा पुत्र इति श्रुतिः ॥
मम कामस्य च कृतः पूरुणा पितृरूपिणा ।
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ॥
पुत्रो यस्त्वानुवर्तेत स राजा पृथिवीपतिः ।
यो वानुवर्ती पुत्राणां स पुत्रो दायभाग्भवेत् ॥
[अधिकः पाठः

पौराः—

[1]यः पुत्रो गुणसंपन्नो मातापित्रोर्हितस्सदा ।
सर्वमर्हति कल्याणं कनीयानपि स प्रभो ॥ २६॥
वेदे धर्मार्थशास्त्रेषु मुनिभिः कथितं पुरा ॥ २७
अर्हः पूरुरिदं राज्यं यस्सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥ २८

वैशंपायनः—

पौरजानपदैस्तुष्टैर् इत्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्तदा पूरुं ययातिर्द्विजपूर्वकम् ॥ २९
यदुं च तुर्वशुं चोभौ द्रुह्युं चैव सहानुजम् ।
अन्तेष्वथ विनिक्षिप्य नाहुषस्स्वात्मजान् सुतान् ॥ ३०
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः ।
पुरात् स निर्ययौ तस्माद् ब्राह्मणैस्तापसैस्सह ॥ ३१
यदोस्तु यादवा जातास् तुर्वशोर्यवनास्सुताः ।
द्रुह्योरपि सुता भोजा अनोस्तु म्लेच्छजातयः ॥ ३२
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव ।
इदं वर्षसहस्राय राज्यं कारयिता प्रभो ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ७ ॥ संभवपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये ३३ श्लोकाः]
पूर्वयायातं समाप्तम्

---

1. क-ख-ग—स पुत्रो गुणसंयुक्तो हितकृत्सततं गुरोः ।

## ॥ सप्ततितमोऽध्यायः ॥

ययातेः स्वर्गगमनम् ॥ १ ॥

वैशंपायनः—

एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥ १

उषित्वा च वने वासं ब्राह्मणैस्तापसैस्सह ।
फलमूलाशनो भूत्वा ततस्स्वर्गमितो गतः ॥ २

स गतस्स्वर्गवासार्थे निवसन् सुखमुत्तमम् ।
कालेन नातिमहता पुनश्शक्रेण पातितः ॥ ३
साधुभिस्संगतिं लब्ध्वा पुनस्स्वर्गमुपेयिवान् ॥ ३॥

जनमेजयः—

स्वर्गतश्च पुनर्ब्रह्मन् निवसन् देववेश्मनि ।
कालेन नातिमहता शक्रेण च्यावितः कथम् ॥ ४॥

निवसन्प्रच्युतस्स्वर्गाद् अप्राप्तो मेदिनीतलम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ॥ ५॥
तत एव पुनश्चापि गतस्स्वर्गमिति श्रुतम् ॥ ६
तदा सार्धं हि वसुना श्रीमता चाष्टकेन च ।
प्रतर्दनेन शिबिना समेत्य किल संसदि ॥ ७

कारणेन दिवं केन संप्राप्तो द्विजसत्तम ॥ ७॥

सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ ८॥

राजा देवसमो ह्यासीद् ययातिः पृथिवीपतिः ।
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥ ९॥

तस्य विस्तीर्णयशसस् सत्यकीर्तेर्महात्मनः ।
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः ॥ १०॥

वैशंपायनः—

हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम् ।
दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ॥ ११॥

ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम् ।
राज्येऽभिषिच्य मुदितः प्रवव्राज वनं तदा ॥ १२॥

अन्तेष्वथ विनिक्षिप्य पुत्रान्वै पूरुपूर्वजान् ।
फलमूलाशनो राजा वने संन्यवसच्चिरम् ॥ १३॥

संयतात्मा जितक्रोधस् तर्पयन्पितृदेवताः ।
अग्निं च विधिवज्जुह्वन् वानप्रस्थविधानतः ॥ १४॥

अतिथीन् पूजयामास वन्येन हविषा द्विजान् ।
शिलोञ्छवृत्तिमादाय शेषान्नकृतभोजनः ॥ १५॥

पूर्णं वर्षसहस्रं च एवंवृत्तिरभून्नृपः ॥ १६

अब्भक्षश्शरदस्त्रिंशद् आसीन्नियतवाङ्मनाः ।
ततश्च वायुभक्षोऽभूत् संवत्सरमतन्द्रितः ॥ १७
पञ्चाग्निमध्ये च तपस् तेपे संवत्सरं पुनः ।
एकपादः स्थितश्चापि षण्मासानभवत्तदा ॥ १८
एवमेव तदाब्दानां पर्यायेण गतस्सदा ।
महायोगी गतस्स्वर्गं जगाम प्रेत्य रोदसी ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ७ ॥ संभवपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ एकसप्ततितमोऽध्यायः ॥

इन्द्रययातिसंवादः ॥ १ ॥

---

वैशंपायनः—
स्वर्गतस्स तु राजेन्द्रो निवसन् देववेश्मनि ।
पूजितस्त्रिदशैस्साध्यैर् मरुद्भिर्वसुभिस्तथा ॥ १
देवलोकाद्ब्रह्मलोकं संचरन् पुण्यकृद्वशी ।
पूजितस्त्रिदशैस्साध्यैर् ययातिरतिधार्मिकः ॥ २
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतः ॥ २॥

स कदाचिन्नृपश्रेष्ठो ययातिश्शक्रमागमत् ।
कथान्ते तत्र शक्रेण स पृष्टः पृथिवीपतिः ॥ ३॥

इन्द्रः—

यदा पूरुस्तव रूपेण राजन्-
जरां गृहीत्वा विचचार भूमौ ।
तदा राज्यं संप्रदायैव तस्मै
त्वया किमुक्तः कथयेह सत्यम् ॥ ४॥

ययातिः—

गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्ताधिपास्तव ॥ ५॥

न च कुर्यान्नरो दैन्यं शाठ्यं क्रोधं तथैव च ।
जैह्म्यं च मत्सरं वैरं सर्वत्रैव न कारयेत् ॥ ६॥

मातरं पितरं चैव विद्वांसं च तपोधनम् ।
क्षमावन्तं च देवेन्द्र नावमन्येत बुद्धिमान् ॥ ७॥

शक्तस्तु क्षमते नित्यम् अशक्तः क्रुध्यते नरः ।
दुर्जनस्सुजनं द्वेष्टि दुर्बलो बलवत्तरम् ॥ ८॥

रूपवन्तमरूपी च धनवन्तं च निर्धनः ।
अकर्मी कर्मिणं द्वेष्टि धार्मिकं च न धार्मिकः ॥ ९॥

निर्गुणो गुणवन्तं च शक्रैतत्कलिलक्षणम् ।
विपरीतं च राजेन्द्र एतेषु कृतलक्षणम् ॥ १०॥

ब्राह्मणो वाऽथ राजा वा वैश्यो वा शूद्र एव वा ।
प्रशस्तेषु प्रसक्ताश्चेत् प्रशस्यन्ते यशस्विनः ॥ ११॥

तस्मात्प्रशस्ते देवेन्द्र नरस्सक्तमना भवेत् ।
अलोकज्ञा ह्यप्रशस्ता भ्रातरस्ते ह्यबुद्धयः ॥ १२॥

अन्ताधिपतयस्सर्वे ह्यभवन् गुरुशासनात् । १३

इन्द्रः—

त्वं हि वै धर्मदो राजन् कथ्यसे धर्ममुत्तमम् ।
कथयस्व पुनर्मेऽद्य लोकवृत्तान्तमुत्तमम् ॥ १४

ययातिः—

अक्रोधनः क्रोधनेभ्यो विशिष्टस्
तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना
विद्वांस्तथैवाविदुषः प्रधानः ॥ १५

आक्रुश्यमानो नाक्रोशेन्मन्युरेवातितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १६

नारुन्तुदस्स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ १७

अरुन्तुदं परुषं रूक्षवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यम् ।
क्षिप्रंह्यलक्ष्मीर्भजते नरं तं
मुखे निबद्धां निकृतिं वहन्तम् ॥ १८

सद्भिः पुरस्तादथ पूजितस्स्यात्
सद्भिस्सदा पृष्ठतो रक्षितस्स्यात् ।
सदाऽसतामतिवादांस्तितिक्षेत्
सतां वृत्तं चाददीतार्यवृत्तिः ॥ १९

वाक्सायका वदनान्निष्पतन्ति
यैराहतश्शोचति राञ्यहानि ।
परस्य वा मर्मसु ये पतन्ति
तान् पण्डितो नावसृजेत्परेषु ॥ २०

नैतादृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥ २१

तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान् संपूजयेन्नित्यं न याचेच्च कदा चन ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ७ ॥ संभवपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

## ॥ द्विसप्ततितमोऽध्यायः ॥

स्वर्गतो ययातेः पतनं । अष्टकप्रश्नश्च ॥ १ ॥

इन्द्रः—

सर्वाणि कर्माणि समाप्य राजन्
गृहं परित्यज्य वनं गतोऽसि ।
तत् त्वां पृच्छामि नहुषस्य पुत्र
केनासि तुल्यस्तपसा ययाते ॥ १

ययातिः—

ाहं देवमनुष्येषु न गन्धर्वमहर्षिषु ।
ात्मनस्तपसा तुल्यं कंचित् पश्यामि वासव ॥ २

इन्द्रः—

यदाऽवमंस्थाः सदृशाञ्छ्रेयसश्च
वरीयसश्चापि निजप्रभावात् ।
तस्माल्लोकाश्चान्तवन्तश्च ये ते
क्षीणे पुण्ये पतितोऽस्यद्य राजन् ॥ ३

ययातिः—

सुरर्षिगन्धर्वनरावमानात्
क्षयं गतो मे यदि शक्र लोकः ।

इच्छेयं वै सुरलोकाद्विहीनः
सतां समीपे पतितुं देवराज ॥ ४

इन्द्रः—

सतां सकाशे पतितोऽसि राजंश्
च्युतः प्रतिष्ठां यत्र लब्धोऽसि भूयः ।
एवं विदित्वा नाहुष मा स्म सर्वान्
वाचाऽवमंस्थाः सदृशाञ्श्रेयसश्च ॥ ५

वैशम्पायनः—

ततः प्रभूतामरराजजुष्टात्
पुण्याल्लोकात् पतमानं ययातिम् ।
संप्रेक्ष्य राजर्षिरथाष्टकस्तं
उवाच सद्धर्मविधानगोप्ता ॥ ६

अष्टकः—

कस्त्वं युवा वासवतुल्यरूपः
स्वतेजसा दीप्यमानो यथाऽग्निः ।
पतस्युदीर्णाम्बुधरान्धकारात्
खात् खेचराणां प्रवरो यथाऽर्कः ॥ ७

दृष्ट्वा च त्वां सूर्यपथात् पतन्तं
वैश्वानरार्कद्युतिमप्रमेयम् ।

किं नु स्विदेतत्पततीति सर्वे
　　वितर्कयन्तः परिमोहितास्स्मः ॥ ८

दृष्ट्वा च त्वां विष्ठितं देवमार्गे
　　शक्रार्कविष्णुप्रतिमप्रभावम् ।
अभ्युद्गतास्त्वां वयमद्य सर्वे
　　तत्त्वं पाते तव जिज्ञासमानाः ॥ ९

न चापि त्वां धृष्णुमः प्रष्टुमग्रे
　　न च त्वमस्मान् पृच्छसे ये वयं स्मः ।
तत्त्वां पृच्छामः कमनीयरूप
　　कस्य त्वं वा किंनिमित्तं त्वमागाः ॥ १०

भयं तु ते व्येतु विषादमोहौ
　　त्यजाशु देवेन्द्रसमानुरूप ।
त्वां वर्तमानं हि सतां सकाशे
　　नालं प्रसोढुं बलवृत्रहन्ता ॥ ११

सन्तः प्रतिष्ठा हि सुखच्युतानां
　　सतां सदैवामरराजकल्प ।
सुसङ्गतास्स्थावरजङ्गमेशाः
　　प्रतिष्ठितस्त्वं सदृशेषु सत्सु ॥ १२

प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।
प्रभुस्सूर्यः प्रकाशित्वे सतामभ्यागतः प्रभुः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ ७ ॥ संभवपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये १३ श्लोकाः ।]

---

## ॥ त्रिसप्ततितमोऽध्यायः ॥

ययातेः स्वनामकथनपूर्वकं अष्टकेन सह संवादः ॥ १ ॥ तत्र ययातिना स्वस्य स्वर्गादधःपतनकारणकथनम् ॥ २ ॥

---

ययातिः—

अहं ययातिर्नहुषस्य पुत्रः
पूरोः पिता सर्वभूतावमानात् ।
प्रभ्रंशितस्सुरर्षिसिद्धलोकाद्
इतश्च्युतः प्रपताम्यल्पपुण्यः ॥ १

अहं हि पूर्वो वयसा भवद्भ्यस्
तेनाभिवादं भवतां न प्रयुञ्जे ।
यो विद्यया तपसा जन्मना वा
वृद्धस्स पूज्यो भवति द्विजानाम् ॥ २

अष्टकः—

अविद्वांश्चेद्वयसा यस्सवृद्धः
इतीह राजन्नाभिवाद्यः कथञ्चित् ।
यो वै विद्वान् वयसा न स्म वृद्धः
स वै पूज्यो भवति द्विजानाम् ॥ ३

ययातिः—

प्रतिकूलं कर्मणां पापमाहुस्
तद्वर्तने प्रापणे पापलोक्यम् ।
तस्मात् सन्तो नातिवर्तन्ति चैतद्
यदात्मैषामप्यनुकूलवादी ॥ ४

अष्टकः—

अभूद्धनं मे विपुलं महद्वै
विवेष्टमानो नाधिगन्ता तदस्मि ।
एवं प्रधार्यात्महिते निविष्टो
यो वर्तते नावजानाति जीवन् ॥ ५

महाधनो यो यजते स्म यज्ञैर्
यस्सर्वविद्यासु विनीतबुद्धिः ।
वेदानधीत्य तपसा योऽज्य देहं
दिवं स यायात् पुरुषो वीतमोहः ॥ ६

न जातु हृष्येन्महता धनेन
वेदानधीयीत नाहंकृतस्स्यात् ॥ ६॥

नानाभावा बहवो जीवलोके
दैवाधीना नष्टचेष्टाधिकाराः ।
तत्प्राप्येत न विहन्येत धीरो
दिष्टं बलीय इति मत्वाऽऽत्मबुद्ध्या ॥ ७॥

सुखं हि जन्तुर्यदि वाऽपि दुःखं
दैवाधीनं विन्दति नात्मशक्त्या ।
तस्माद्दिष्टं बलवन्मन्यमानो
न संज्वरेन्नातिहृष्येत्कदाचित् ॥ ८॥

दुःखे न तप्येत सुखे न हृष्येत्
समेन वर्तेत स दैव धीरः ॥ ९

ययातिः—

भये न मुह्याम्यष्टकाहं कदाचित्
सन्तापो मे मनसो नास्ति कश्चित् ।
धाता यथा मां विदधाति लोके
ध्रुवं तथाऽहं भवितेति मत्वा ॥ १०

संस्वेदजादुद्भिजादण्डजाद्वा
सरीसृपाः कृमयोऽथाप्सु मत्स्याः ।
तथाश्मानस्तृणकाष्ठं च सर्वे
दिष्टक्षये स्वां प्रकृतिं भजन्ति ॥ ११

अनित्यतां सुखदुःखस्य मत्वा
बुद्ध्या कस्मादष्टक संपतेयम् ।
किं कुर्यां वै किं च कृत्वा न तप्ये
तस्मात्सन्तापं वर्जयाम्यप्रमत्तः ॥ १२

दुःखे न खिद्येन्न सुखेन माद्येत्
समेन वर्तेत स धीरधर्मा ।
दिष्टं बलीयस्समवेक्ष्य बुद्ध्या
न सज्जते चात्र भृशं मनुष्यः ॥ १३

दृष्टो हि मे परमश्चापि लोकः
प्राप्ता लोकास्सर्वतो नास्ति निष्ठा ॥ १३॥

अष्टकः—

ये ये लोकाः पार्थिवेन्द्र प्रधानाः
स्वयं भुक्ता यं च कालं यथावत् ।
तं मे राजन् ब्रूहि सर्वं यथावत्
क्षेत्रज्ञवद्भाषसे त्वं हि धर्मम् ॥ १४॥

ययातिः—

राजाऽहमासमिह सार्वभौमस्-
ततो लोकान् महतोऽहं जयेयम् ।

तत्रावसं वर्षसहस्रमात्रं
ततो लोकमपरमभ्युपेतः ॥ १५॥

ततः पुरीं पुरुहूतस्य रम्यां
सहस्रद्वारां शतयोजनान्ताम् ।
[1]अध्यवसं वर्षसहस्रमात्रं
ततो लोकमपरमभ्युपेतः ॥ १६॥

ततो दिव्यमजरं प्राप्य लोकं
प्रजापतेर्लोकमन्यैर्दुरापम् ।
तत्रावसं वर्षसहस्रमात्रं
ततो लोकमपरमभ्युपेतः ॥ १७॥

देवस्य देवस्य निवेशने च
विजित्य लोकानवसं यथेष्टम् ।
संपूज्यमानस्त्रिदशैस्समेतैस्-
तुल्यप्रभावद्युतिरीश्वराणाम् ॥ १८॥

तथाऽवसं नन्दने कामरूपी
संवत्सराणामयुतं शतानाम् ।
सहाप्सरोभिर्विहरन् पुण्यगन्धान्
पश्यन्नगान् पुष्पिताग्रान् सुरूपान् ॥ १९॥

1. क-ख-ग—अध्यावसं

तत्रस्थं मां देव सुखेषु सक्तं
कालेऽतीते महति ततोऽतिमात्रम् ।
दूतो देवानामब्रवीदुग्ररूपो
ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण ॥ २०॥

एतावन्मे विदितं राजसिंह
ततो भ्रष्टोऽहं नन्दनात् क्षीणपुण्यः ।
वाचोऽश्रौषं चान्तरिक्षे सुराणाम्
अनुक्रोशाच्छोचतां मानवेन्द्र ॥ २१॥

अहो कष्टं क्षीणपुण्यो ययातिः
पतत्यसौ पुण्यकृत्पुण्यकीर्तिः ।
तानब्रुवं पतमानस्तथाऽहं
सतां मध्ये निपतेयं कथं नु ॥ २२॥

तैराख्याता भवतां यज्ञभूमिः
समीक्ष्यैनां त्वरितमुपागतोऽस्मि ।
हविर्गन्धं देशिकं यज्ञभूमेर्
धूमापाङ्गं प्रतिगृह्णन् प्रतीतः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ७ ॥ संभवपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः ।]

---

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

मृतस्य स्वर्गादिभोगानन्तरं पुनर्जननप्रकारकथनम् ॥ १ ॥

अष्टकः—

तथा वसन्नन्दने कामरूपी
संवत्सराणामयुतं शतानाम् ।
किं कारणं कार्तयुगप्रधान
हित्वापि तद्येन धरां प्रपन्नः ॥ १

ययातिः—

संबन्धिनो ज्ञातिसुहृज्जनाश्च
क्षीणे वित्ते संत्यजन्तीह मर्त्यम् ।
तथा चैनं क्षीणपुण्यं मनुष्यं
त्यजन्ति सद्यस्सेश्वरा देवसङ्घाः ॥ २

अष्टकः—

कथं तत्र क्षीणपुण्या भवन्ति
संमुह्यते मेऽत्र मनोऽतिमात्रम् ।
के वा विशिष्टाः कस्य धामोपयान्ति
तन्मे ब्रूहि क्षेत्रवित् त्वं मतो मे ॥ ३

ययातिः—

इमं भौमं नरकं ते पतन्ति
लालप्यमाना नरदेव सर्वे ।
ते कङ्कगोमायुबलाशनार्थं
क्षीणे पुण्ये बहुशः प्रव्रजन्ति ॥ ४

तस्मादेतद्वर्जनीयं नरेण
दुष्टं लोके गर्हणीयं च कर्म ।
आख्यातं ते पार्थिव सर्वमेतद्
भूयश्चेदानीं वद किं ते वदामि ॥ ५

अष्टकः—

यदा समन्तात्पतितं तुदन्ति
वयांसि गृध्राः पिशिताशनाश्च ।
कथं भवन्ति कथमाविर्भवन्ति
न भौममन्तं नरकं शृणोमि ॥ ६

ययातिः—

ऊर्ध्वं देहा[1]द्ब्रह्मणा जृम्भमाणाद्
व्यक्तं पृथिव्यामिह संचरन्तः ।
इमं भौमं नरकं ते पतन्ति
नावेक्षन्ते वर्षपूगाननेकान् ॥ ७

1. क-ख-ग—ब्राह्मणा जृम्भमाणाः

षष्टिं सहस्राणि पतन्ति व्योम्नः
तथाऽशीतिं चोपरिवत्सराणि ।
तान्वै तुदन्ति प्रपतन्तं प्रपातं
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ॥ ८

अष्टकः—

यदेनसा ते पततस्तुदन्ति
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।
कथं भवन्ति कथमाविर्भवन्ति
कथंभूता गर्भभूता भवन्ति ॥ ९

ययातिः—

अस्रं रेतः पुष्परसानुवृत्तम्
अन्वेति तावत् पुरुषेण सृष्टम् ।
तच्चैतस्यां रज आपद्यते वै
स गर्भभूतस्समुपैति तत्र ॥ १०

वनस्पतींश्चौषधीश्चाविशन्ति
आपो वायुः पृथिवी चान्तरिक्षम् ।
चतुष्पदां द्विपदां सर्वमेव
रसा भूता गर्भभूता भवन्ति ॥ ११

अष्टकः—

अन्यो हि वैनं विदधातीह गर्भम्
उताहोस्वित् स्वेन कामेन याति ।

आपद्यमानो नरयोनिमेताम्
　　आचक्ष्व मे संशयात् प्रब्रवीमि ॥ १२

शरीरदेहातिसमुच्छ्रयं च
　　चक्षुश्श्रोत्रे लभते केन संज्ञाम् ।
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः
　　क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥ १३

ययातिः—

वायुस्समुत्कर्षति गर्भयोनिम्
　　ऋतौ रेतः पुष्परसानुवृत्तम् ।
स तत्र तन्मात्रकृताधिकारः
　　क्रमेण संवर्धयतीह गर्भम् ॥ १४

स जायमानो निगृहीतगात्रः
　　प्रज्ञातनिष्ठायतनो मनुष्यः ।
स श्रोत्राभ्यां वेदयतीह शब्दं
　　सम्यग्रूपं पश्यति चक्षुषा च ॥ १५

घ्राणेन गन्धं जिह्वया वै रसं च
　　त्वचा स्पर्शं मनसा देवभावान् ।
इत्यष्टकैतान् विहितांश्च विद्धि
　　सहात्मनः प्राणभृतश्शरीरे ॥ १६

अष्टकः—

यस्संस्थितः पुरुषो दह्यते वा
निहन्यते वा विनिकृष्यते वा ।
अभावभूतस्स विनाशमेत्य
केनात्मना चेतयते पुरस्तात् ॥ १७

ययातिः—

हित्वा सोऽसून् सुप्तवन्निष्टनित्वा
पुरोधाय स्वं सुकृतं दुष्कृतं च ।
अन्यां योनिं पवमानानुसारी
हित्वा देहं भजते राजसिंह ॥ १८

पुण्यां योनिं पुण्यकृतो भजन्ते
पापां योनिं पापकृतो भजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा
न मे विवक्षास्ति महानुभाव ॥ १९

चतुष्पदा द्विपदाष्षट्पदाश्च
तथा राजन् गर्भभूता भवन्ति ।
आख्यातमेतन्निखिलेन सर्वं
भूयस्तु किं पृच्छसि राजसिंह ॥ २०

अष्टकः—

किंस्वित् कृत्वा लभते तात लोकान्
मर्त्यश्श्रेष्ठांस्तपसा विद्यया च ।

तन्मे पृष्टश्शंस सर्वं यथावच्
छुभांल्लोकान् येन गच्छेत् क्रमेण ॥ २१

ययातिः—

तपश्च दानं च यशो दमश्च
ह्रीरार्जवं सर्वभूतानुकम्पा ।
नश्यन्ति मानेन तथाऽभिभूताः
पुंसस्सदैवेति वदन्ति सन्तः ॥ २२

अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका
न चास्य तद्ब्रह्म फलं ददाति ॥ २३

चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥ २४

न मानमान्यो मुदमाददीत
न सन्तापं प्राप्नुयाच्चावमानात् ।
तं साधवः पूजयन्तीह लोके
नासाधवस्साधुबुद्धिं लभन्ते ॥ २५

इति दद्यादिति यजेद् इत्यधीयीत मे व्रतम् ।
इत्यस्मीति भयान्याहुस् तानि वर्ज्यानि नित्यशः ॥ २६

ये नाश्रमान् वेदयन्ते पुराणाः
मनीषिणो मनसा संविभक्तान् ।
तन्निश्श्रेयस्तैजसं रूपमेत्य
परां शान्तिं प्राप्नुते प्रत्यगेव ॥ २७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

॥ ७ ॥ संभवपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[अस्मिन्नध्याये २७ श्लोकाः]

---

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

ब्रह्मचर्याद्याश्रमविषयकाष्टकययातिप्रश्नप्रतिवचनम् ॥ १ ॥

---

अष्टकः—

चरन् गृहस्थः कथमेति देवान्
कथं भिक्षुः कथमाचार्यकर्मा ।
वानप्रस्थस्सत्पथे सन्निविष्टो
कथमेतस्मिन् संप्रति वेदयन्ति ॥ १

ययातिः—

आहूताध्यायी गुरुकर्मस्वचोद्यः
पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः
स्वाध्यायशीलस्सिध्यति ब्रह्मचारी ॥ २

धर्मागतं प्राप्य धनं यजेत
दद्यात् सदैवातिथीन् भोजयेच्च ।
अनाददानश्च परैरदत्तं
सैषा गृहस्थोपनिषत्पुराणी ॥ ३

स्ववीर्यजीवी वृजिनान्निवृत्तो
दाता परेभ्यो न परोपतापी ।
मृगैस्सचारी वनजान्नभोजी
तादृङ्मुनिस्सिद्धिमुपैत्यरण्ये ॥ ४

अशिल्पजीवी न गृहस्थश्च नित्यं
जितेन्द्रियस्सर्वतो विप्रमुक्तः ।
अनोकसारी लघुरल्पाशनश्च
चरन् देशानेकचरस्स भिक्षुः ॥ ५

रात्र्या यया चाभिजिताश्च लोका
भवन्ति कामाविजितास्सुखाश्च ।

तामेव रात्रिं प्रयतेत विद्वान्
अरण्यनित्यो भवितुं यतात्मा ॥ ६

दशैव पूर्वानपरान्दशैव
[1]ज्ञातीन् सहात्मानमथैकविंशम् ।
अरण्यनित्यस्सुकृते दधाति
विमुच्यारण्ये स्वशरीरधातून् ॥ ७

अष्टकः—

[2]कथं स्विद्वसतोऽरण्यं कति मौनानि चाप्युत ।
भवन्तीति तदाचक्ष्व श्रोतुमिच्छामहे वयम् ॥ ८

ययातिः—

अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे निवसतोऽरण्यं स मुनिस्स्याज्जनाधिप ॥ ९

अष्टकः—

कथंस्विद्वसतोऽरण्ये ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं कथं भवति पृष्ठतः ॥ १०

ययातिः—

न ग्राम्यमुपयुञ्जीत य आरण्यो मुनिर्भवेत् ।
तथाऽस्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः ॥ ११

---

1. घ—ज्ञातिस्तथात्मानमथैकविंशत्
2. घ—कतिस्विदेव मुनयो मौनानि कति चाप्युत

अनग्निरनिकेतश्च अगोत्रचरणो मुनिः ।
कौपीनाच्छादनी चीरी सर्वस्वादुविवर्जितः ॥ १२

यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् ।
तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः ॥ १३

यस्तु कामान् परित्यज्य [1]त्यक्त्वा कर्म जितेन्द्रियः ।
आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥ १४

धौतदन्तं कृत्तनखं सदा [2]स्नातं दयापरम् ।
असितं सितकर्मस्थं कस्तं नार्चितुमर्हति ॥ १५

तपसा कर्शितः क्षामः क्षीणमांसास्थिशोणितः ।
यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः ॥ १६
अथ लोकमिमं जित्वा लोकं विजयते परम् ॥ १६॥

आस्येन तु य आहारं गोवन्मृगयते मुनिः ।
अथास्य लोकः पूर्वो यस् सोऽमृतत्वाय कल्पते ॥ १७॥
सामान्यधर्मस्सर्वेषां क्रोधो लोभो द्रुहाऽक्षमा ॥ १८
विहाय मत्सरं स्तैन्यं गर्वं दम्भं च पैशुनम् ।
क्रोधं लोभं ममत्वं च यस्य नास्ति स धर्मवित् ॥ १९

अष्टकः—

नित्यस्नायी ब्रह्मचारी गृहस्थो वनगो मुनिः ।

---

1. घ—त्यक्तुकामो　　2. घ—स्नानमलंकृतम्

नाधर्ममशनात्प्राप्येत् कथं ब्रूहीह पृच्छते ॥ २०

ययातिः—

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।

द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥ २१

इत्येवं कारणाज्ज्ञेयम् अष्टकैतच्छुभाशुभम् ॥ २१॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ७ ॥ संभवपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ षट्सप्ततितमोऽध्यायः ॥

स्वर्गाच्च्युतस्य ययातेरष्टकादियज्ञभूमिं प्रत्यागमननिमित्तकथनम् ॥ १ ॥ अष्टकप्रतर्दनयोर्ययातिना संवादः ॥ २ ॥

---

अष्टकः—

कतरस्त्वेतयोः पूर्वं देवानामेति साम्यताम् ।

उभयोर्धावतो राजन् सूर्याचन्द्रमसोरिव ॥ १

ययातिः—

अनिकेतो गृहस्थेषु कामवृत्तेष्व[1]संयतः ।

ग्राम एव वसन्भिक्षुस् तयोः पूर्वतरं गतः ॥ २

---

1. घ—षु संयतः

अवाप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत् ।
तप्यते यदि तत्कृत्वा चरेत्सोऽन्यत्तपस्तथा ॥ ३

पापानां कर्मणां नित्यं बिभीयाद्यस्तु मानवः ।
सुखमप्याचरन्नित्यं सोऽत्यन्तं सुखमेधते ॥ ४

यद्वै नृशंसं तदसत्यमाहुर्
यत्सेवते धर्मम[1]थार्थबुद्धिः ।
अस्वोऽप्यनाशी च तथैव राजंस्
तदार्जवं स समाधिस्तदार्यम् ॥ ५

अष्टकः—

केनासि दूत प्रहितोऽद्य राजन्
युवा स्रग्वी दर्शनीयस्सुवर्चाः ।
कुत आगतः कतरस्यां दिशि त्वम्
उताहोस्वित्पार्थिव स्थानमस्ति ॥ ६

ययातिः—

इमं भौमं नरकं क्षीणपुण्यः
प्रवेष्टुमुर्वीं गगनाद्विप्रहीणः ।
विद्वांश्चैवं मतिमानार्यबुद्धिर्
ममाभवत्कर्मलोक्यं च सर्वम् ॥ ७

1. घ—नर्थ

उक्त्वाऽहं वः प्रपतिष्याम्यनन्तरं
त्वरयन्ति मां ब्राह्मणा लोकपालाः ॥ ७॥

सतां सकाशे तु वृतः प्रपातस्
ते सङ्गता गुणवन्तश्च सर्वे ।
शक्राच्च लब्धो हि वरो मयैष
पतिष्यता भूमितले नरेन्द्र ॥ ८॥

अष्टकः—

पृच्छामि त्वां प्रपतन्तं प्रपातं
[1]ये मे लोकास्तत्र राजेन्द्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ९॥

ययातिः—

यावत्पृथिव्यां व्रीहियवं गवाश्वं
सहारण्यैः पशुभिः पार्वतैश्च ।
तावन्तो लोका दिवि राजन् स्थिता वै
तदा विजानीहि नरेन्द्रसिंह ॥ १०॥

अष्टकः—

तांस्ते ददामि मा प्रपत प्रपातं
ये मे लोका दिवि राजेन्द्र सन्ति ।

1. घ—यदि लोका मे पार्थिवास्तत्र सन्ति

यद्यन्तरिक्षे यदि वा दिवि श्रितास्
तानाक्रमस्व क्षिप्रममित्रसाह ॥ ११॥

ययातिः—

नास्मद्विधः क्षत्रियवंशजातः
प्रतिग्रहे वर्तते क्षत्रमुख्य ।
यथा प्रदेयं सततं द्विजेभ्यस्
तथाऽददं पूर्वमहं द्विजेभ्यः ॥ १२॥

नाब्राह्मणः कृपणं जातु जीवेद्
दद्यान्न याचेदिति क्षत्रधर्मः ।
सोऽहं यदा कृतपूर्वं चरेयं
विवित्समानः किमुतात्र साधु ॥ १३॥

प्रतर्दनः—

पृच्छामि त्वां काशिराजोऽहमस्मि
प्रतर्दनोऽहं यदि मे सन्ति लोकाः ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
[1]क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १४॥

ययातिः—

ये सन्ति लोका बहवस्ते नरेन्द्र
एकैकशस्सप्त सप्तैव तानि ।

1. घ—स तानाक्रमस्व प्रददाम्यहं ते ।
घ—कोशे, 15, 16, श्लोकौ न दृश्येते ॥

मधुच्युतो घृतसिक्ता विशोकास्
ते तावन्तस्त्वां प्रतिपालयन्ति ॥ १५॥

प्रतर्दनः—

तांस्ते ददानि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
यद्यन्तरिक्षे यदि वा दिवि श्रितास्
तानाक्रमस्व प्रददाम्यहं ते ॥ १६॥

ययातिः—

न तुल्यतेजास्सुकृतं कामयेत
योगक्षेमं पार्थिव पार्थिवस्सन् ।
[1]दैवादेशादापदं प्राप्य विद्वांश्
चरेन्नृशंसं न हि जातु राजा ॥ १७॥

धर्म्यं मार्गं चेतयानो यशस्यं
कुर्यान्नृपो धर्ममवेक्षमाणः ।
न मद्विधो धर्मबुद्धिः [2]विजानन्
कुर्यादेवं कृपणं मां यथाऽऽत्थ ॥ १८॥

कुर्यात्तथा वै न कृतं यदन्यैर्
विवित्समानः किमिवात्र साधु ॥ १९

1. घ—दैवादेव आपदः 2. घ—प्रजानां

धर्माधर्मौ सुविनिश्चित्य सम्यक्
कार्याकार्येष्वप्रमत्तश्चरेद्यः ।
स वै धीमान् सत्यसन्धः कृतात्मा
राजा भवेल्लोकपालो महिम्ना ॥ २०

यदा भवेत्संशयो धर्मकार्ये
कामार्थे वा यत्र विन्दन्ति सम्यक् ।
कार्यं तत्र प्रथमं धर्मकार्यं
यन्नो विरुध्यादर्थकामौ स धर्मः ॥ २१

वैशंपायनः—

ब्रुवाणमेवं नृपतिं ययातिं
नृपोत्तमो वसुमनाश्चाब्रवीत्तम् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

॥ ७ ॥ संभवपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

वसुमनसः शिबेश्च ययातिना संवादः ॥ १ ॥ पुनरष्टकययाति संवादः ॥ २ ॥

---

वसुमनाः—

पृच्छामि त्वां वसुमनैक्ष्वाकवो[1] स्मि
यदि सन्ति लोका दिवि मे स्युर्नरेन्द्र ।
यद्यन्तरिक्षे यदि वा पृथिव्यां
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १

ययातिः—

यद्यन्तरिक्षं पृथिवीं दिशश्च
यत्तेजसा तपते भानुमांश्च ।
लोकास्तावन्तो दिवि संस्थिता वै
ते नान्तवन्तः प्रतिपालयन्ति ॥ २

वसुमनाः—

तांस्ते ददामि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
क्रीणिष्वैतां तृणकेनापि तावत्
प्रतिग्रहो [2]यदि वै ते न दृष्टः ॥ ३

---

1. अ—स्ति 2. क-ख-ग-घ—हस्ते यदि वै न दृष्टः ॥

ययातिः—

न मिथ्याऽहं विक्रयं वै स्मरामि
यथा गृहीतं शिशुके शङ्कमानः ।
कुर्यां न चैवाकृतपूर्वमन्यैर्
विवित्समानः किमुतात्र साधु ॥ ४

वसुमनाः—

तान्सर्वलोकान् प्रतिपद्यस्व राजन्
मया दत्तान् यदि नेष्टः क्रयस्ते ।
न चाहं तान् प्रतिपद्ये च [1]मत्वा
यत्र गन्ता त्वमपहायात्मलोकम् ॥ ५

ययातिः—

यदा त्वमिन्द्रप्रतिमप्रभावस्
ते चाप्यनन्ता नरदेव लोकाः ।
तथाऽन्यलोके न रमेऽन्यदत्ते
[2]तस्मादहं नाभिनन्दामि दायम् ॥ ६

शिबिः—

पृच्छामि त्वां शिबिरौशीनरोऽस्मि
मम लोका ये पार्थिवास्तत्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ७

---

1. घ—दत्वा यत्रागन्ता 2. घ—तस्मात्तदा नाभिनन्दा ययाचम् ।

ययातिः—

[1]नेमान्वाचा हृदयेन चापि
परीप्स[2]मानस्तव मन्ये नरेन्द्र ।
ते चानन्ता दिवि लोकाश्श्रितास्ते
विद्युद्रूपास्स्वनवन्तो नरेन्द्र ॥ ८

शिबिः—

तांस्ते ददामि मा प्रपत प्रपातं
ये मे लोका दिवि राजेन्द्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
तानाक्रमस्व प्रददाम्यहं ते ॥ ९

ययातिः—

यथा त्वमिन्द्रप्रतिमप्रभावस्
ते वाप्यनन्ता नरदेव लोकाः ।
[3]तथा न दत्ते न रमेऽन्यलोके
तस्माच्छिबे नाभिनन्दामि दायम् ॥ १०

अष्टकः—

न चेदेकैकशो राजंल्लोकान्नः प्रतिगृह्णासि ।
सर्वे प्रदाय भवतो गन्तारो [4]नगरं वयम् ॥ ११

---

1. घ—न त्वा वाचा हृदयेनापि राजा
2. घ—मानो नावमन्ये नरेन्द्र ।
3. घ—तान्यस्य लोके न रमेऽन्यदत्ते
4. घ—नरकं

यया‍तिः—

[1]यदर्हाय ददध्वं यत् सन्तस्सत्यानृशंस्यतः ।
अहं तु नाभिगृह्णामि यत्कृतं न मया पुरा ॥ १२

अष्टकः—

कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः ।
उच्चैस्सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ॥ १३

ययातिः—

युष्मानेते वहिष्यन्ति रथाः पञ्च हिरण्मयाः ।
उच्चैस्सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ॥ १४

वैशंपायनः—

अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ।
हयस्य यानि चाङ्गानि ह्युत्कृत्य च यथाक्रमम् ॥ १५

होताऽध्वर्युस्तथोद्गाता ब्रह्मणा सह भारत ।
अग्नौ प्रास्यन्ति विधिवत् समस्ताः षोडशर्त्विजः ॥ १६

---

1. घ—तदर्हाय तद्ददध्वं स प्रहितोऽद्य राजन्
यस्स्रग्वी दर्शनीयस्सुवर्चाः ।
कुत आगतः कतरस्यां दिशि त्वम्
उताहोस्वित्पार्थिवस्यान्नमस्ति ॥
ययातिः—
इमं भौमं नरकं क्षीण्यपुण्यः
प्रवेष्टुं महीं गगनात् प्रहीणम् ।
विद्यां च देवं मतिमानबुद्धिर्
मा मा भवस्सत्यानृशंस्यतः ॥ [अधिकः पाठः]

धूमगन्धं वपायास्तु ये जिघ्रन्ति नराधिपाः ।
विमुक्तपापाः पूतास्ते तत्क्षणेनाभवन्नराः ॥ १७

एतस्मिन्नन्तरे चैव माधवी तु तपोधना ।
मृगचर्मपरीताङ्गी परिणामे मृगव्रतम् ॥ १८

मृगैस्सह चरन्ती सा मृगाहारविचेष्टिता ।
यज्ञवाटं मृगगणैः प्रविश्य भृशविस्मिता ॥ १९

आघ्रायन्ती धूमगन्धं मृगैरेव चचार सा ॥ १९॥

यज्ञवाटमटन्ती सा पुत्रांस्तानपराजितान् ।
पश्यन्ती यज्ञमाहात्म्यं मुदं लेभे च माधवी ॥ २०॥

असंस्पृशन्तं वसुधां ययातिं नाहुषं तदा ।
दिविष्ठं प्राप्तमाज्ञाय ववन्दे पितरं तदा ॥ २१॥

ततो वसुमनापृच्छन्मातरं वै तपस्विनीम् ॥ २२

वसुमनाः—

भवत्या यत्कृतमिदं वन्दनं वरवर्णिनि ।
कोऽयं देवोऽथवा राजा यदि जानासि मे वद ॥ २३

मांधवी—

शृणुध्वं सहिताः पुत्रा नाहुषोऽयं पिता मम ।
ययातिर्मम पुत्राणां मातामह इति श्रुतः ॥ २४

पूरुं मे भ्रातरं राज्ये समावेश्य दिवं गतः ।

केन वा कारणेनैव इह प्राप्तो महायशाः ॥ २५

वैशंपायनः—

तस्यास्तद्वचनं श्रुत्वा स्थानभ्रष्टेति चाब्रवीत् ॥ २५॥

सा पुत्रस्य वचश्श्रुत्वा संभ्रमाविष्टचेतना ।
माधवी पितरं प्राह दौहित्रपरिवारितम् ॥ २६॥

माधवी—

तपसा निर्जितांल्लोकान् प्रतिगृह्णीष्व मामकान् ॥ २७

पुत्राणामिव पौत्राणां धर्मादधिगतं धनम् ।
स्वार्थमेव वदन्तीह [1]ऋषयो वेदपारगाः ॥ २८

तस्माद्दानेन तपसा अस्माकं दिवमाव्रज ॥ २८॥

ययातिः—

यदि धर्मफलं ह्येतच्छोभनं भविता तथा ।
दुहित्रा चैव दौहित्रैस्तारितोऽहं महात्मभिः ॥ २९॥

तस्मात्पवित्रं दौहित्रम् अद्यप्रभृति पैतृके ।
भविष्यति न सन्देहः पितॄणां प्रीतिवर्धनम् ॥ ३०॥

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥ ३१॥

भोक्तारः परिवेष्टारः श्रावितारः पवित्रकाः ॥ ३२

दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।

---

1. घ—मुनयो धर्मपाठकाः

स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ ३३
तिलाः पिशाचाद्[1] रक्षन्ति दर्भा रक्षन्ति राक्षसा[2]त् ।
रक्षन्ति श्रोत्रियाः पंक्तिं यतिभिर्भुक्तमक्षयम् ॥ ३४
लब्ध्वा पात्रं तु विद्वांसं श्रोत्रियं सुव्रतं शुचिम् ।
स कालः कालतो दत्तं नान्यथा काल इष्यते ॥ ३५

वैशंपायनः—

एवमुक्त्वा ययातिस्तु पुनः प्रोवाच बुद्धिमान् ।
सर्वे ह्यवभृथस्नातास् त्वरध्वं कार्यगौरवात् ॥ ३६

अष्टकः—

आतिष्ठस्व रथं राजन् विक्रमस्व विहायसम् ।
वयमप्यत्र यास्यामो यदा कालो भविष्यति ॥ ३७

ययातिः—

सर्वैरिदानीं गन्तव्यं सह स्वर्गजितो वयम् ।
एष नो विरजाः पन्था दृश्यते देव[3]वर्त्मनः ॥ ३८

वैशंपायनः—

अष्टकश्च शिबिश्चैव काशेयश्च प्रतर्दनः ।
ऐक्ष्वाकवो वसुमनाश् चत्वारो भूमिपाश्च ह ॥ ३९
सर्वे ह्यवभृथस्नातास् स्वर्गतास्साधवस्सह ॥ ३९॥
तेऽधिरुह्य रथान् सर्वे प्रयाता नृपसत्तमाः ।

---

1. अ-क-न् र  2. अ-क—न्  3. घ—सद्म्नः

आक्रमन्तो दिवं भाभिर् धर्मेणावृत्य रोदसी ॥ ४०॥

अष्टकः—

अहं मन्ये स्वर्गतानां वरिष्ठः
सखा चेन्द्रस्सर्वथा वै महात्मा ।
कस्मादेष शिबिरौशीनरोऽयम्
एकोऽत्यगात् सर्वथ[7]ऽस्मानपोह्य ॥ ४१॥

ययातिः—

अददद्याचमानाय यावद्वित्तमविन्दत ।
उशीनरस्य पुत्रोऽयं तस्माच्छ्रेष्ठो हि नश्शिबिः ॥ ४२॥

दानं तपस्सत्यमथाऽपि धर्मो
ह्रीश्श्रीः क्षमा सौम्यभावस्तितिक्षा ।
राजन्नेतान्यप्रमत्तस्य राज्ञः
शिबेस्स्थितान्यानृशंस्यं च बुद्धौ ॥ ४३॥

एवं वृत्तो ह्रीनिषेधश्च यस्मात्
तस्माच्छिबिरत्यगाद्वै रथेन ॥ ४४

वैशंपायनः—

अथाष्टकः पुनरेवान्वपृच्छ-
न्मातामहं कौतुकादिन्द्रकल्पम् ॥ ४४॥

पृच्छामि त्वां नृपते ब्रूहि सत्यं
पितासि कस्यासि सुतश्च कस्य ।

कृतं त्वया यच्च न तस्य कर्ता
लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा ॥ ४५॥

ययातिः—
ययातिरस्मि नहुषस्य पुत्रः
पूरोः पिता सार्वभौमस्त्विहासम् ।
गुह्यं महार्थं मामकेभ्यो ब्रवीमि
मातामहोऽहं भवतां प्रकाशम् ॥ ४६॥

सर्वामिमां [1]पृथिवीं निर्जिगाय
हस्ते लब्धामददां ब्राह्मणेभ्यः ।
मेध्यानश्वानेकशफान्सुरूपांस्
तदा देवाश्शतयज्वेत्यवोचन् ॥ ४७॥

अदामहं पृथिवीं ब्राह्मणेभ्यः
पूर्णामिमामखिलैर्वाहनैश्च ।
गोभिस्सुवर्णैश्च धनैश्च मुख्यैस्-
तत्रासनानां शतमर्बुदानि ॥ ४८॥

सत्येन वेद्यां च वसुन्धरायां
तथैवाग्निर्ज्वलितो मानुषेषु ।
न मे वृथा व्याहृतमेव वाक्यं
सत्यं हि सन्तः प्रतिपूजयन्ति ॥ ४९॥

1. घ—पृथिवीमर्थपूर्णां प्रस्थे बध्वा ह्यददात्

[1]सत्येन लोका मुनयश्च सङ्घाः
सत्येन पूज्या इति मे मनोगतम् ॥ ५०

अष्टक.—

यो नस्स्वर्गजितस्सर्वान् यथावृत्तं न्यवेदयत् ।
अनसूयुर्द्विजाग्र्येभ्यः लभेन्नस्सर्वलोकताम् ॥ ५१

वैशंपायनः—[2]

एवं राजा स महात्मा ह्यतीव
स्वैर्दौहित्रै[3]स्स्मारितो मातृवाक्यात् ।
त्यक्त्वा महीं परमोदारकर्मा
स्वर्गं गतः कर्मभि[4]र्नेप्त्रुपेतः ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तसप्ततितमोऽऽध्याय ॥ ७७ ॥
॥ ७ ॥ संभवपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये ५२ श्लोका ]
उत्तरयायातं समाप्तम् ॥

## ॥ अष्टसप्ततितमोऽध्यायः ॥

पूरुवंशकथनम् ॥ १ ॥

जनमेजयः—

पुत्रं ययातेः प्रब्रूहि पूरुं धर्मभृतां वरम् ।
आनुपूर्व्येण ये चान्ये पूरोर्वंशविवर्धनाः ॥ १

---

1. घ—सर्वे च देवा मुनयश्च सर्वे
2. घ—ययाति
3. घ—तारितोऽमितसाकं
4. र्व्याप्य पृथ्वीम् ।

विस्तरेण पुनर्ब्रूहि दौष्यन्तेर्जनमेजयात् ।
संबभूव यथा राजा भरतो राजसत्तमः ॥ २

वैशंपायनः—

पूरुर्नृपतिशार्दूलो यथैवास्य पिता नृप ।
धर्मनित्यः स्थितो राज्ये शक्रतुल्यपराक्रमः ॥ ३

प्रवीरश्शतरुग्घ्यौश्च त्रयः पुत्रा महाबलाः ।
पूरोः पौष्यामजायन्त प्रवीरस्तत्र वंशभाक् ॥ ४

नम[1]स्युरभवत्तस्माच्छूरश्शैब्यां सुतो महान् ।
पृथिव्यां सागरान्तायां राजा राजीवलोचनः ॥ ५

सुभ्रूस्संहननो वाग्मी सौवीरीतनयास्त्रयः ।
नम[2]स्योरभवन्पुत्राश्शूरास्सर्वे महारथाः ॥ ६

सुन्वन्तं वसुनाभं च [3]गर्गरम्यौ यशस्विनौ ।
शूरानभयदान् राजा जनयामास वीर्यवान् ॥ ७

यवीयान् सुन्वतः पुत्रो रथन्तर्यामजायत ।
शूरश्च दृढधन्वा च वपुष्मान् स नृपोत्तमः ॥ ८

रुद्राश्वं पृषदश्वं च रथदश्वं गयं मनुम् ।
यवीयाञ्जनयामास गन्धर्वान्भीमविक्रमान् ॥ ९

रुद्राश्वस्य महाबाहोर् दशाप्सरसि सूनवः ॥ ९॥

---

1. क-ग—न्यु 2. क-ग—न्यो 3. क-ख-ग—गर्भ

[1]ऋतेपुरथ कक्षेपुः कृपणेपुश्च वीर्यवान् ।
स्थण्डिलेपुर्जलेपुश्च स्थलेपुश्च महाबलः ॥ १०॥

[2]तेजोपुर्बलवान्धीमान् रथेपु[3]श्चन्द्रविक्रमः ।
धर्मेपुस्सन्ततेपुश्च दशमो देवविक्रमः ॥ ११॥

अनाधृष्यास्सुतास्तात राजसूयाश्वमेधिनः ।
अन्तिनारस्ततो राजा विद्वांश्चर्तेपुतोऽभवत् ॥ १२॥

त्रसुं मोघं प्रतिरथं द्रुमं चाप्रतिमं युधि ।
एतान्वै सुषुवे साध्वी ह्यन्तिनारा[4]यशस्विनी ॥ १३॥

तेषां त्रसुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुन्धराम् ॥ १४॥

इलिलं सुषुवे त्रस्नोर् यमुना वै तपस्विनी ॥ १५
सो ऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः ॥ १५॥

रथन्तर्यामृषीन् पञ्च पञ्चभूतोपमांस्तथा ।
इलिलो जनयामास दुष्यन्त[5]प्रमुखांस्तथा ॥ १६॥

दुष्यन्तं शूरभीमौ च [6]पुपूरुं वसुमेव च ॥ १७

---

1. क-ख-ग-घ—यज्वानो जज्ञिरे पुत्राः प्रजावन्तो यशस्विनः ।
सर्वे सर्वास्त्रविदुषस्सर्वे सत्यपरायणाः ॥
[अधिकः पाठः]

2. क-ग—तेजेपुः 3. ख-ग-घ—श्चेन्द्र 4. घ—त् सरस्वती
5. क-ख-ग-घ—प्रमुखान्सुतान् 6. क-ख-ग-घ—प्रपूर्व

तेषां ज्येष्ठो महाराज दुष्यन्तो दुर्जयो युधि ।
दुष्यन्ताल्लक्ष्मणायां तु जज्ञे वै जनमेजयः ॥ १८

शकुन्तलायां भरतो दौष्यन्तिरभवत्सुतः ।
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ ७ ॥ संभवपर्वणि त्रयोदशोऽध्यायः ॥ २३ ॥

[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ ऊनाशीतितमोऽध्यायः ॥

---

दुष्यन्तसाम्राज्यवर्णनम् ॥ १ ॥

---

जनमेजयः—

भगवन् विस्तरेणेह भरतस्य महात्मनः ।
जन्म कर्म च शुश्रूषोस् तन्मे शंसितुमर्हसि ॥ १

वैशंपायनः—

पौरवाणां वंशकरो दुष्यन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ २

चतुर्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः ।
समुद्रवसनांश्चापि देशान् स समितिंजयः ॥ ३

[1]म्लेच्छानाटव्यजांश्चापि यो भुङ्क्ते रिपुमर्दनः ।
रत्नाकरान् समुद्रांश्च चातुर्वर्ण्यजनावृतान् ॥ ४

न वर्णसङ्करो राजन् नाकृष्टकरकृज्जनः ।
न पापकृत् कश्चिदासीत् तस्मिन् राजनि शासति ॥ ५

धर्म्यां वृत्तिं सेवमानाः कामार्थौ च प्रपेदिरे ।
तदा नरवरव्याघ्र तस्मिन् जनपदेश्वरे ॥ ६

नासीच्चोरभयं तात न क्षुधाभयमण्वपि ।
नासीद्व्याधिभयं चापि तस्मिञ्जनपदेश्वरे ॥ ७

स्वैर्धर्मै रेमिरे [2]वर्णा ह्यन्यकर्मणि निस्स्पृहाः ।
तमाश्रित्य महीपालम् आसंश्चैवाकुतोभयाः ॥ ८

कालवर्षी च पर्जन्यस् सस्यानि फलवन्ति च ।
सर्वरत्नसमृद्धा च मही पशुमती तथा ॥ ९

स चाद्भुतमहावीर्यो वज्रसंहननो युवा ।
उद्यम्य मन्दरं दोर्भ्यां हरेत् सवनकाननम् ॥ १०

धनुष्यक्षे गदायुद्धे सर्वप्रहरणेषु च ।
नागस्कन्धेऽश्वपृष्ठे च बभूव परिनिष्ठितः ॥ ११

बले विष्णुसमश्चासीत् तेजसा भास्करोपमः ।
अक्षोभ्यत्वे ऽर्णवसमः सहिष्णुत्वे धरासमः ॥ १२

---

1. घ—आम्लेच्छाटविकांश्चैव　　2. ख-घ—दैवे देवकर्मणि निष्ठिताः

सर्वतस्स महीपालः प्रसन्नपुरराष्ट्रवान् ।
भूयो धर्मपरैर्भावैर् मुदितं जनमावसत् ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

॥ ७ ॥ संभवपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[अस्मिन्नध्याये १३ श्लोकाः ।]

---

## ॥ अशीतितमोऽध्यायः ॥

मृगयार्थं दुष्यन्तस्यारण्यगमनम् ॥ १ ॥

---

वैशंपायनः—

स कदाचिन्महाबाहुः प्रभूतबलवाहनः ।
वनं जगाम गहनं हयनागशतैर्वृतः ॥ १

खड्गशक्तिधरैर्वीरैर् गदामुसलपाणिभिः ।
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः ॥ २

सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः ।
रथनेमिस्वनैश्चैव सनागवरबृंहितैः ॥ ३

ह्रेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटनिस्वनैः ।
आसीत्किलकिलाशब्दस् तस्मिन्गच्छति पार्थिवे ॥ ४

प्रासादवरशृङ्गस्था वरया नृपशोभया ।
ददृशुस्तं स्त्रियस्तत्र नृपमात्मयशस्करम् ॥ ५

शक्रोपमममित्रघ्नं परवारणवारणम् ।
पश्यन्तस्स्त्रीगणास्तत्र शक्तिपाणिं स्म मेनिरे ॥ ६

अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ।
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥ ७

इति वाचो ब्रुवन्त्यस्तास् स्त्रियः प्रेम्णा नराधिपम् ।
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ॥ ८

तत्र तत्र च विप्रेन्द्रैस् स्तूयमानस्समन्ततः ।
निर्ययौ परया प्रीत्या वनं मृगजिघांसया ॥ ९

आबालमनुजग्मुस्तं पौरजानपदास्तदा ।
न्यवर्तन्त ततः पश्चाद् अनुज्ञाता नृपेण ह ॥ १०

सौवर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तदा ॥ ११

स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम् ।
बिल्वार्कखदिराकीर्णं कपित्थवटसंकुलम् ॥ १२

विषमं पर्वतप्रस्थैर् अश्मभिश्च समाचितम् ।
निर्जलं निर्मनुष्यं च बहुयोजनमायतम् ॥ १३

मृगसङ्घैर्वृतं घोरैर् अन्यैश्चापि वनेचरैः ॥ १३॥

तद्वनं मनुजव्याघ्रस् सभृत्यबलवाहनः ।
लोडयामास दुष्यन्तस् सूदयन् विविधान् मृगान् ॥ १४॥

बाणगोचरसंप्राप्तांस् तत्र व्याघ्रगणान् बहून् ।
पातयामास दुष्यन्तो निर्बिभेद च सायकैः ॥ १५॥

दूरस्थान् सायकैः कांश्चिद् अभिनत्स नरर्षभः ।
अभ्याशमागतांश्चान्यान् खड्गेन निरकृन्तत ॥ १६॥

कांश्चिदेणान् स निर्जघ्ने शक्त्या शक्तिमतां वरः ।
गदामण्डलतत्त्वज्ञश् चचारामितविक्रमः ॥ १७॥

तोमरैरसिभिश्चापि गदामुसलकर्पणैः ।
चचार निघ्नन् वै वन्यान् स्वैरचारान् वनद्विपान् ॥ १८॥

राज्ञा चाद्भुत[1]वीर्येण योधैश्च समरप्रियैः ।
[2]वध्यमानं महारण्यं तत्यजुश्च महामृगाः ॥ १९॥

तत्र विद्रुतसङ्घानि हतयूथपतीनि च ।
मृगयूथान्यथो भीत्या शब्दं चक्रुरनेकशः ॥ २०॥

शुष्कां चापि नदीं गत्वा जलनैराश्यकर्शिनः ।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥ २१॥

क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ।

---

1. अ-क-ख—वंशेन 2. घ—लोड्य

कैश्चित्तत्र नरव्याघ्रैर् अभक्ष्यन्त बुभुक्षितैः ॥ २२॥

केचिदग्निमथोत्पाद्य समिद्ध्य च वनेचराः ।
भक्षयन्ति स्म मांसानि प्रतप्य विधिवत्तदा ॥ २३॥

तत्र केचिद्गजा [1]मात्रा बलिनश्शस्त्रविक्षताः ।
संकुच्याग्रकरान् भीताः प्राद्रवन्ति स्म वेगिताः ॥ २४॥

शकृन्मूत्रं सृजन्तश्च क्षरन्तश्शोणितं बहु ।
वन्या गजवरास्तत्र ममृदुर्मनुजान् बहून् ॥ २५॥

तद्वनं बलमेघेन शरासारेण संवृतम् ।
व्यरोचन् महिषाकीर्णं राज्ञा हतमहामृगम् ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

॥ ७ ॥ संभवपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[अस्मिन्नध्याये २६॥ श्लोकाः ।]

## ॥ एकाशीतितमोऽध्यायः ॥

मृगयाप्रसङ्गेन दुष्यन्तस्य कण्वाश्रमगमनम् ॥ १ ॥

वैशंपायनः—

ततो मृगसहस्राणि हत्वा सबलवाहनः ।
ततो मेघघनप्रख्यं सिद्धचारणसेवितम् ॥ १

1. ग-घ—मत्ता

वनमालोकयामास नगराद्योजनद्वये ॥ १॥

मृगाननुचरन् वन्यान् श्रमेण परिपीडितः ।
मृगाननुचरंश्चापि वेगेनाश्वानचोदयत् ॥ २॥

राजा मृगप्रसङ्गेन वनमध्यं विवेश ह ।
एक एवोत्तमबलः क्षुत्पिपासासमन्वितः ॥ ३॥

तद्वनस्यान्तमासाद्य सोऽपश्यद्धरिणं ततः ॥ ४

तच्चाप्यतीत्य नृपतिर् उत्तमाश्रमसंवृतम् ।
मनःप्रह्लादजननं मनोरममतीव च ॥ ५

शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ।
पुष्पितैः पादपैः कीर्णम् अतीव सुखशाद्वलम् ॥ ६

विपुलं मधुरारावैर् नादितं विहगैस्तदा ।
विवृद्धविटपैर्वृक्षैस् सुखच्छायैस्समावृतम् ॥ ७

षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥ ७॥

नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ।
षट्पदैर्वाप्यनाकीर्णो न कश्चित्काननेऽभवत् ॥ ८॥

विहङ्गैर्नादितं पुष्पैर् अलङ्कृतमतीव च ।
सर्वर्तुकुसुमैर्वृक्षैर् अतीव सुखशाड्वलम् ॥ ९॥

मनोरमं महेष्वासो विवेश वनमुत्तमम् । १०

मारुता[1]न्दोलितास्तत्र द्रुमाः कुसुमशोभिताः ।
पुष्पवृष्टिं विचित्रां तु व्यसृजंस्ते पुनः पुनः ॥ ११

दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वरैः ।
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ॥ १२

तेषां पत्रप्रवालेषु पुष्पभारावनामिषु ।
रुवन्ति रावं विहगाष् षट्पदैस्सहिता मृदु ॥ १३

तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डितान् ।
लतागृहपरिक्षिप्तान् मनसः प्रीतिवर्धनान् ॥ १४
संपश्यन् स महातेजा बभूव मुदितस्तदा ॥ १४॥

परस्पराश्लिष्टशिखैर् अङ्घ्रिपैः कुसुमाचितैः ।
अशोभत वनं मत्तैर् महेन्द्रध्वजसन्निभैः ॥ १५॥

सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवानरकिन्नरैः ॥ १६॥

सुखशीतस्सुगन्धश्च पुष्परेणुवहोऽनिलः ।
परिक्रामन् वने वृक्षान् उपैति च रिरंसया ॥ १७॥

एवंगुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तम् उच्छ्रितध्वजसन्निभम् ॥ १८॥

प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।

1. अ—क

आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ १९॥
नानामृगसमाकीर्णं संप्रज्वलितपावकम् ।
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ॥ २०॥
अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसं[1]स्कृतैः ।
महीकच्छै[2]र्बृहद्भिश्च विभ्राजितमतीव च ॥ २१॥
मालिनीमभितो राजन् नदीं पुण्य[3]सुखावहाम् ।
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ॥ २२॥
तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥ २३॥
त चाप्रतिरथश्श्रीमान् आश्रमं प्रत्यपूजयत् ।
देवलोकप्रतीकाशं सर्वतस्सुमनोहरम् ॥ २४
नदीमाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव विष्ठिताम् ॥ २५
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥ २६
पुण्यस्वाध्यायसंघुष्टां नियमव्रतचारिणाम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ २७
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।

---

1. क-ख-ग—वृतम; घ—स्तृतैः 2. क-ख-घ—मैहद्भिश्च
3. अ—सरोरुहाम्

आश्रमप्रवरं पुण्यं महर्षिगणसेवितम् ॥ २८
[1]नदीमाश्रमसंबद्धां तत्राश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ २९
अलङ्कृतं द्वीपवत्या मालिन्या[2]ऽतीव रम्यया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ ३०
मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् ॥ ३०॥
तत्स चैत्ररथप्रख्यं समुपेत्य जनेश्वरः ।
अतीव गुणसंपन्नम् अनिर्देश्यं च चक्षुषाम् ॥ ३१॥
महर्षिं काश्यपं द्रष्टुम् अथ कण्वं तपोधनम् ॥ ३२
रथनागाश्वसंबाधां पदातिजनसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ ३३

दुष्यन्तः—

मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ ३४

वैशंपायनः—

तद्वनं नन्दनप्रख्यम् आसाद्य मनुजेश्वरः ।
क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलाम् ॥ ३५
सामात्यो राजलिङ्गानि सोपनीय नराधिपः ।

---

1. क-ख-ग—सम्बाधां स्मृत्वा ; घ—सम्बाधां श्रुत्वा ।
2. क-ख-ग-घ—रम्यतीरया ।

पुरोहितसहायश्च जगामाश्रममण्डलम् ॥ ३६

दिदृक्षुस्तत्र तमृषिं तपोराशिमथाऽव्ययम् ।
ब्रह्मलोकप्रतीकाशम् आश्रमं सोऽभिवीक्ष्य च ॥ ३७

षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ।
विस्मयोत्फुल्लनयनो राजा प्रीतो बभूव ह ॥ ३८

[1]ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
[2]शुश्राव मनुजव्याघ्रो विततेष्विव कर्मसु ॥ ३९

यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ।
मधुरैस्सामगीतैश्च शिरोभिर्नियमव्रतैः ॥ ४०

[3]भारुण्डसामगीताभिर् अथर्वशिरसोद्भवैः ।
अमिताभिस्सुनियमैश् शुशुभे स तदाश्रमः ॥ ४१

[4]अथर्वभिः ऋग्यजुस्सामभिश्शोभितैस्तदा ॥ ४१॥
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ ४२

शब्दसंस्कारसंयुक्तं ब्रुवद्भिर्न्यायवित्तमैः ।

---

1. क-ख-ग-घ—न्यायतत्त्वार्थविज्ञानसम्पन्नैर्वेदपारगैः ।
[अधिकः पाठः]

2. क-ख-ग—क्रत्वर्थांश्च प्रकाशद्भिर् यजुर्भिर्निर्मलस्वरैः ।
जटावर्णविभागज्ञैरुच्यमानाननेकशः ॥
[अधिकः पाठः]

3. अ—हारुण्या

4. क-ख-ग—अथर्वग्यजुस्सामभिः पूजितं शोभितं तदा ।

नादितस्स बभौ श्रीमान् ब्रह्मलोक इवा[1]परः ॥ ४३

यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः ।
न्यायतत्त्वार्थविज्ञानसंपन्नैर्वेदपारगैः ॥ ४४

[2]नानावाक्यसमाहार तत्त्वज्ञानविशारदैः ।
वैशिष्टिकार्थविद्भिश्च मोक्षधर्मविशारदैः ॥ ४५

स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४६

द्रव्यकर्मगुणज्ञैश्च कार्यकारणवेदिभिः ।

जल्पवादवितण्डज्ञैर् व्यासग्रन्थसमाश्रितैः ॥ ४७
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ॥ ४७॥
लोकायतिकमुख्यैश्च समन्तादभिनादितम् ॥ ४८

तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान् ।
जपहोमरतान् सिद्धान् ददर्श परवीरहा ॥ ४९

आसनानि विचित्राणि पुष्पवन्ति महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ ५०

देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोक[3]समं राजन् मेने स नृपसत्तमः ॥ ५१

---

1. क-ख-ग-घ—श्रमः　2. अ—कोशे इदमर्धं नास्ति
3. क-ग-घ—स्थमात्मानं

तं काश्यपतपोगुप्तम् आश्रमप्रवरं शुभम् ।
नातृप्यत्प्रेक्षमाणो वै तपोधनगणैर्युतम् ॥ ५२

स काश्यपस्यायतनं महाव्रतैर्
वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा
विविक्तमत्यर्थमनोहरं शिवम् ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ७ ॥ संभवपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये ५३ श्लोकाः]

---

## ॥ द्व्यशीतितमोऽध्यायः ॥

कण्वाश्रमे दुष्यन्तशकुन्तलासंवादः ॥ १ ॥ शकुन्तलायाः स्वजन्मवृत्तान्तकथनारम्भः ॥ २ ॥

---

वैशम्पायनः—

ततो गत्वा महाबाहुर् एकोऽमात्यान् विसृज्य सः ।
नापश्यदाश्रमे तस्मिंस् तमृषिं संशितव्रतम् ॥ १

सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम् ।
उवाच कोऽत्र इत्युच्चैर् वनं सन्नादयन्निव ॥ २

श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात्तस्माद् यथा विद्युत् घनान्तरात् ॥ ३
सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा ।
सुव्रताऽभ्यागतं तं तु पूज्यं प्राप्तमथेश्वरम् ॥ ४
रूपयौवनसंपन्ना शीलाचारवती शुभा ।
सा तमायतपद्माक्षं व्यूढोरस्कं सुसंहतम् ॥ ५
सिंहस्कन्धं दीर्घबाहुं सर्वलक्षणपूजितम् ।
विस्पष्टं [1]मधुरां वाचं साऽब्रवीज्जनमेजय ॥ ६
स्वागतं त इति क्षिप्रम् उवाच प्रतिपूज्य च ।
आसनेनार्चयित्वाऽथ पाद्यार्घ्याचमनैस्तथा ॥ ७
पप्रच्छानामयं राजन् कुशलं च नराधिपम् ॥ ७॥
यथावदर्चयित्वा सा लज्जयावनतानना ।
उवाच स्मयमानेव किं कार्यं क्रियतां मया ॥ ८॥
आश्रमस्याभिगमने किं त्वं कार्यं चिकीर्षसि ॥ ९
कस्त्वमद्येह संप्राप्तो महर्षेराश्रमं शुभम् ॥ ९॥
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ।
दृष्ट्वा सर्वानवद्याङ्गीं यथावत्प्रतिपूजितः ॥ १०॥

दुष्यन्तः—

राजर्षेरस्मि पुत्रोऽहम् इलिलस्य महात्मनः ।

---

1. क-ख-ग—मधुरं वाचा; घ—स्पष्टं मधुरया वाचा

दुष्यन्त इति मे नाम सत्यं पुष्करलोचने ॥ ११॥

[1]आगतोऽहं महाभा[2]गम् ऋषिं कण्वमुपासितुम् ।
क्व गतो भगवां भद्रे तन्ममाचक्ष्व शोभने ॥ १२॥

शकुन्तला—

गतः पिता मे भगवान् फलान्याहर्तुमाश्रमात् ।
मुहूर्तं त्वं प्रतीक्षस्व द्रक्ष्यसे तमिहागतम् ॥ १३॥

वैशंपायनः—

अपश्यमानस्तमृषिं तथा चोक्तस्तया नृपः ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥ १४॥

विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसंपन्नाम् इत्युवाच महीपतिः ॥ १५॥

दुष्यन्तः—

काऽसि कस्यासि सुश्रोणि किमर्थं चागता वनम् ।
एवंरूपगुणोपेता कुतस्त्वमतिशोभने ॥ १६॥

दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
स्थितोऽस्म्यमितसौभाग्ये विवक्षुश्चास्मि किंचन ॥ १७॥

---

1. क-ख ग-घ—शकुन्तला
स्वागतं ते महाराज फलमूलोदकं च नः ।
प्रगृह्योपभुङ्क्ष्व त्वं किं च ते करवाण्यहम् ॥
दुष्यन्तः [अधिक पाठः]

2. क-ख-ग-घ—भागे ऋषिं

श्रृणु मे नागनासोरु वचनं मत्तकाशिनि ॥ १८

राजर्षेरन्वये जातः पूरोरस्मि विशेषतः ।

वृणे त्वामद्य सुश्रोणि दुष्यन्तो वरवर्णिनि ॥ १९

न मेऽन्यत्र क्षत्रियायां मनो जातु प्रवर्तते ।

ऋषिपुत्रीषु चान्यासु नावर्णासु [1]परासु वा ॥ २०

तस्मात् प्रणिहितात्मानं विद्धि मां कलभाषिणि ।

तस्य मे त्वयि भावोऽस्ति क्षत्रिया ह्यसि का वद ॥ २१

न हि मे भीरु विप्रायां मनः प्रसहते गतिम् ।

भजे त्वामायतापाङ्गे भक्तं भजितुमर्हसि ॥ २२

भुङ्क्ष्व राज्यं विशालाक्षि बुद्धिं मा त्वन्यथा कृथाः । २२॥

वैशम्पायनः—

एवमुक्ता तदा कन्या एकाकी सा तमाश्रमे ।

उवाच हसती वाक्यम् इदं सुमधुराक्षरम् ॥ २३॥

शकुन्तला—

कण्वस्याहं भगवतो दुष्यन्त दुहिता मता ।

तपस्विनो धृतिमतो धर्मज्ञस्य यशस्विनः ॥ २४॥

अस्वतन्त्राऽस्मि राजेन्द्र काश्यपो मे गुरुः पिता ।

तमेव प्रार्थय स्वार्थं नायुक्तं कर्तुमर्हसि ॥ २५॥

---

1. ख— } र्णेष्ववरेषु च
घ— } र्णास्वपरासु च

दुष्यन्तः—

ऊर्ध्वरेता महाभागो भगवाँल्लोकपूजितः ।
[1]चलेद्धि वृत्ताद्धर्मोऽपि न चलेत्संशितव्रतः ॥ २६॥
कथं [2]त्वमस्य दुहिता संभूता वरवर्णिनी ।
संशयो मे महानत्र [3]सत्यं वक्तुमिहार्हसि ॥ २७॥

शकुन्तला—

यथाऽयमागमो मह्यं यथा चेदमभूत् पुरा ॥ २८
अन्यथा सन्तमात्मानम् अन्यथा सत्सु भाषते ।
स पापेनावृतो मूर्खस् तेन आत्मापहारकः ॥ २९
शृणु राजन् यथातत्त्वं यथाऽस्मि दुहिता मुनेः ॥ २९॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ॥ ३०
ऊर्ध्वरेता यथासि त्वं कुतस्त्येयं शकुन्तला ।
पुत्री त्वत्तः कथं जाता सत्यं मे ब्रूहि काश्यप ॥ ३१
तस्मै प्रोवाच भगवान् यथावच्छृणु पार्थिव ॥ ३१॥

कण्वः—

तप्यमानस्तपो घोरं विश्वामित्रस्सखा मम ।
कम्पयामास देवेन्द्रं पुरा शक्रं महातपाः ॥ ३२॥
[4]तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।

---

1. घ—चलेत्कदाचिद्धिमवान्
2. घ—त्वं तस्य
3. घ—तन्मे शंसितुमर्हसि
4. क-ख-ग—असावादित्यसङ्काशो विश्वामित्रोऽथ कौशिकः ।
[अधिकः पाठः]

भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥ ३३॥

इन्द्रः—

गुणैरप्सरसां दिव्यैर् मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत् त्वां वक्ष्यामि तच्छृणु ॥ ३४॥

असावादित्यसङ्काशो विश्वामित्रोऽथ कौशिकः ।
तप्यमानस्तपो घोरं [1]ब्रह्मचर्यं च संश्रितः ॥ ३५॥

मेनके तव भारोऽयं विश्वामित्रस्सुमध्यमे ।
संशितात्मा सुदुर्धर्षश् चोग्रे तपसि वर्तते ॥ ३६॥

तन्मनश्च्यावयेस्स्थानात् तं गत्वा विप्रलोभय ।
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥ ३७॥

रूपयौवनमाधुर्यचेष्टितस्मितभाषितैः ।
लोभयित्वा वरारोहे तपसस्सन्निवर्तय ॥ ३८॥

मेनका—

महातेजास्स भगवान् सदैव च महातपाः ।
कोपनश्च तथा ह्येनं जानाति भगवानपि ॥ ३९॥

तेजसस्तपसश्चैकः कोपस्य च महात्मनः ।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ ४०॥

---

1. क-ख-ग-घ—मम कम्पयते मनः ।
तपस्तस्य महाघोरं ब्रह्मचर्यं च संस्थितम् ॥
[अधिकः पाठः]

विमोह्य च वसिष्ठं च तस्य पुत्राञ्छशाप ह ।
क्षत्रे जातश्च यः पूर्वं सोऽभवद्ब्राह्मणो [1]बलात् ॥ ४१॥

शौचार्थं यो नदीं चक्रे दुर्गमां पापकर्मभिः ।
यत्तत्पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥ ४२॥

बभार [2]यज्ञस्य पुरा काले दुर्गे महात्मनः ।
दारान् मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥ ४३॥

अतीतकाले दुर्भिक्षे प्रत्येत्य पुनराश्रमम् ।
[3]मुनिवारेति नद्या वै नाम चक्रे तदा प्रभुः ॥ ४४॥

मतङ्गं याजयाञ्चक्रे तत्र प्रीतमनास्स्वयम् ।
त्वं च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥ ४५॥

अतिनक्षत्रवंशानि क्रुद्धो नक्षत्रसंपदा ।
प्रतिश्रवणपूर्वाणि नक्षत्राणि ससर्ज यः ॥ ४६॥

गुरुशापहतस्यापि त्रिशङ्कोश्शरणं ददौ ॥ ४७

ब्रह्मर्षिशापं राजर्षिः कथ माक्ष्यति कौशिकः ।
अवमत्य तदा देवैर् यज्ञाङ्गं तद्विनाशितम् ॥ ४८

अन्यानि च महातेजा यज्ञाङ्गान्यसृजत्प्रभुः ।
निनाय च तदा स्वर्गं त्रिशङ्कुं स महातपाः ॥ ४९

---

1. क-ख-ग-घ—महान् 2. क-ग—यत्रास्य घ—यस्यात्र
3. क-ख-ग—मुनिः पारेति; घ—दुर्गन्वारेति

एतान्यन्यानि कर्माणि भृशं देव बिभेम्यहम् ।
यथा मां न दहेत्क्रुद्धस् तथा पश्य सुरेश्वर ॥ ५०

तेजसा निर्दहेल्लोकांश् चालयेद्धरणीं तथा ।
संक्षिपेच्च महामेरुं महीमावर्तयेत्तथा ॥ ५१

तादृशं तपसा युक्तं प्रदीप्तमिव पावकम् ।
कथमस्मद्विधा बाला जितेन्द्रियमभिस्पृशेत् ॥ ५२

हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम् ।
कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ५३

यमश्च सोमश्च महर्षयश्च
विश्वे देवा वालखिल्याश्च सर्वे ।
यस्योद्विजन्ते मुनयस्सदैव
कस्मादिन्द्र मादृशी नोद्विजेत ॥ ५४

त्वयैवमुक्ता तु कथं सुरेश
ऋषेर्न गच्छेयमहं समीपम् ।
रक्षां तु मे चिन्तय देवराज
यथा त्वदर्थे सुखिनी चरेयम् ॥ ५५

भवेच्च मे मन्मथस्तत्र कार्ये
सहायभूतस्तव च प्रसादात् ।

वनं च वायुस्सुरभिः प्रवापयेत्
तस्मिन् काले तमृषिं लोभयन्त्याः ॥ ५६

कामं तु मे मारुतस्तत्र वासः
प्रक्रीडिताया विवृणोतु देव ॥ ५६॥

तथेत्युक्त्वा विहिते चैव तस्मिंस्-
ततो ययौ साऽऽश्रमं कौशिकस्य ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ ७ ॥ संभवपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये ५७ श्लोकाः ।]

---

## ॥ त्र्यशीतितमोऽध्यायः ॥

विश्वामित्रान्मेनकायां शकुन्तलाया जन्मकथनम् ॥ १ ॥

---

कण्वः—

एवमुक्तस्तया [1]शक्रः संदिदेश सदागतिम् ।
प्रातिष्ठत ततः काले मेनका वायुना सह ॥ १

तथाऽपश्यद्वरारोहा तपसोग्रेण कर्शितम् ।
विश्वामित्रं तपस्यन्तं दुर्धर्षं संशितव्रतम् ॥ २

---

1. अ-क—देवः

ततोऽभिवाद्य सा तस्मै प्राक्रीडदृषिसन्निधौ ।
अपोवाह च वासोऽस्या मारुतश्शशिसंनिभम् ॥ ३

साऽगच्छत्त्वरिता भूमिं वासार्थेवाऽवलम्बती ।
कुत्सयन्तीव सव्रीडं मारुतं देववर्णिनी ॥ ४

[1]गृध्नुं वाससि सव्रीडां संभ्रान्तां मेनकामृषिः ।
अनिर्देश्यवयोरूपाम् अपश्यद्विवृतां तदा ॥ ५

तस्या रूपगुणं दृष्ट्वा कामार्तस्समपद्यत ।
चकार भावं संसर्गे तया कामवशं गतः ॥ ६

न्यमन्त्रयत चाप्येनां साप्यैच्छत्तमनिन्दिता ।
तौ तत्र सुचिरं कालं विजह्राते महावने ॥ ७

रममाणौ यथाकामं यथैकदिवसं तथा ।
एवं वर्षसहस्राणाम् अतीतं नाभ्यचिन्तयत् ॥ ८

कामक्रोधावजितवान् मुनिर्नित्यं क्षमान्वितः ।
चिरार्जितस्य तपसः क्षयं स कृतवानृषिः ॥ ९

तपसस्संक्षयादेव मुनिर्मोहं समाविशत् ।
मोहाभिभूतः क्रोधात्मा [2]ययौ तां कौशिकीं मुनिः ॥ १०

पादैर्जलरवं कृत्वा अन्तर्द्वीपे कुटीं गतः ।

---

1. क-ख-ग—ग्रस्ते घ—गृद्धां
2. क-ख-ग-घ—प्रसन्मूलफलं मुनिः ।

मेनका गन्तुकामा वै शुश्राव जलनिस्वनम् ॥ ११

तपसा दीप्तवीर्योऽसावाकाशादेति याति च ।
अद्य संज्ञां विजानामि येन केन तपःक्षयम् ॥ १२

गन्तुं न युक्तमित्युक्त्वा ऋतुस्नाता तु मेनका ।
कामरागाभिभूतस्य मुनेः पार्श्वे जगाम सा ॥ १३

जनयामास स मुनिर् मेनकायां शकुन्तलाम् ।
[1]प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ १४

देवगर्भोपमां बालां सर्वाभरणभूषिताम् ।
शयानां शयने रम्ये मेनका वाक्यमब्रवीत् ॥ १५

मेनका—

महर्षेरुग्रतपसस् तेजस्त्वमसि भामिनि ।
तस्मात्स्वर्गं गमिष्यामि देवकार्यार्थमागता ॥ १६

कण्वः—

जातामुत्सृज्य तां कन्यां मेनका मालिनीं प्रति ।
शक्रसंसदमागच्छत् कृत्वा कार्यं शचीपतेः ॥ १७

तं वने गहने गर्भं सिंहव्याघ्रनिषेविते ।
दृष्ट्वा शयानं शकुनास् समन्तात्पर्यवारयन् ॥ १८

नेमां हिंस्युर्वने बालां क्रव्यादा मांसगर्धिनः ।
इति मत्वा स्म रक्षन्ति शकुन्ता मेनकात्मजाम् ॥ १९

---

1. अ—कोशे श्लोकत्रयं नास्ति

उपस्प्रष्टुं गतश्चाहं तामपश्यमनिन्दिताम् ।
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ॥ २०

मां दृष्ट्वैवान्वपद्यन्त पादयोः पतिता द्विजाः ।
अब्रुवञ्शकुनास्सर्वे कलं मधुरभाषिणः ॥ २१

द्विजाः—

विश्वामित्रसुतां ब्रह्मन् न्यासभूतां भरस्व वै ।
कामक्रोधावजितवान् सखा ते कौशिकीं गतः ॥ २२

तस्मात्पोषय तत्पुत्रीं दयावानिति तेऽब्रुवन् ॥ २२॥

कण्वः—

सर्वभूतरुतज्ञोऽहं दयावान् सर्वजन्तुषु ॥ २३

निर्जनेऽपि महारण्ये शकुन्तैः परिवारिताम् ।
आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम् ॥ २४

शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्म[1]दर्शने ॥ २५

निर्जने च वने यस्माच् छकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥ २६

एवं दुहितरं विद्धि मम सौम्य शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥ २७

1. अ—साधने घ—रोधने

शकुन्तला—

एतदाचष्ट भगवान् मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥ २८

कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन् यथावृत्तं श्रुतं मया ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

॥ ७ ॥ संभवपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[अस्मिन्नध्याये २९ श्लोकाः]

---

## ॥ चतुरशीतितमोऽध्यायः ॥

---

समयबन्धपूर्वकं गान्धर्वेण विवाहेन शकुन्तलापाणिग्रहणम् ॥ १ ॥ कण्वस्य स्वाश्रमं प्रति प्रत्यागमनम् ॥ २ ॥ कण्वशकुन्तलासंवादः ॥ ३ ॥ कण्वाच्छकुन्तलाया वरलाभः ॥ ४ ॥

---

दुष्यन्तः—

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ १

सुवर्णमालां वासांसि कुण्डले परिपादुके ।
नानापत्तनजैश्शुभ्रैर् मणिरत्नैश्च शोभनैः ॥ २

आहरामि तवाद्याहं निष्कादीन्यमितानि च । २॥

सर्वं राज्यं तवाद्य त्वं भार्या मे भव शोभने ॥ ३

गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वश्श्रेष्ठ उच्यते ॥ ४

शकुन्तला—

फलाहारो गतो राजन् पिता मम महातपाः ।
[1]मुहूर्तं संप्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ५

पिता हि मे प्रभुर्नित्यं दैवतं परमं मतम् ।
यस्य [2]वा दास्यति पिता स मे भर्ता भविष्यति ॥ ६

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ७

अवमन्यमाना राजेन्द्र पितरं मे तपस्विनम् ।
अधर्मेण हि धर्मिष्ठ कथं वरमुपास्महे ॥ ८

दुष्यन्तः—

मा मैवं वद सुश्रोणि तपोराशिं दयात्मकम् ॥ ८॥

शकुंतला—

मन्युप्रहरणा विप्रा न विप्राश्शस्त्रपाणयः ॥ ९

[3]अग्निर्दहति तेजोभिस् सूर्यो दहति रश्मिभिः ।
राजा दहति दण्डेन ब्राह्मणो मन्युना दहेत् ॥ १०

---

1. क-ख-ग-घ—तं मुहूर्तं प्रती 2. घ— च दास्यति
3. घ—मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्र इवासुरान् ।
[अधिक पाठः]

क्रोधितो मन्युना हन्ति वज्रपाणिरिवासुरान् ॥ १०॥

दुष्यन्तः—

जानामि भद्रे महर्षिं तस्य मन्युर्न विद्यते ।
इच्छामि त्वां वरारोहे भज मां त्वमनिन्दिते ॥ ११॥

त्वदर्थे मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥ १२

आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनो मित्रमात्मैव [1]तथात्मा चात्मनः पिता ॥ १३

आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ १३॥

अष्टावेव समासेन विवाहा धर्मतस्स्मृताः ॥ १४

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
[2]गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमस्स्मृतः ॥ १५

पञ्चानां तु त्रयो धर्म्या द्वावधर्मौ मताविह ।
पैशाच आसुरश्चैव न कर्तव्यौ कथञ्चन ॥ १६

[3]अनेन विधिना कार्यो धर्मश्चैष सनातनः ।
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्कथाः ॥ १७

---

1. घ—शत्रुरात्मैव चात्मनः ।

2. क-ख-घ—तेषां धर्मं यथापूर्वं मनुस्स्वायंभुवोऽब्रवीत् ॥
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय ।
षडानुपूर्व्यात क्षत्रस्य विद्धि धर्माननिन्दिते ॥
राज्ञां तु राक्षसो युक्तो विट्छूद्रेष्वासुरस्स्मृतः ॥

3. क-ख-ग-घ—अन्येन [अधिकः पाठः]

पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥ १७॥

सा त्वं मम सकामस्य सकामा भव शोभने ।
गान्धर्वेण विवाहेन भार्या मे भव भामिनि ॥ १८॥

शकुन्तला—

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ १९॥

सत्यं मे प्रतिजानीहि [1]यद्वाचा वच्म्यहं रहः ।
ब्राह्मीं मे प्रतिजानीहि प्रतिज्ञां राजसत्तम ॥ २०॥

मम जायते यः पुत्रस् स राजा त्वदनन्तरम् ॥ २१

युवराजश्च कर्तव्यस् सत्यमेतद्ब्रवीहि मे ।
यद्येतदेवं दुष्यन्त अस्तु मे सङ्गमस्त्वया ॥ २२

वैशंपायनः—

तस्यास्तु सर्वं संश्रुत्य यथोक्तं स विशांपतिः ।
दुष्यन्तः पुनरेवाह यद्यदिच्छसि तद्वद ॥ २३

शकुन्तला—

ख्यातो लोकप्रवादोऽयं विवाह इति शाश्वतः ।
वैवाहिकीं क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् ॥ २४

लोकापवादशान्त्यर्थं विवाहं विधिना कुरु ।
सन्त्यत्र यज्ञपात्राणि दर्भास्सुमनसोऽक्षताः ॥ २५

1. क-ख-ग—त्वया रंस्याम्यहं रहः । घ—यत्तु याचाम्यहं पुनः ।

यथा युक्तो विवाहस्स्यात् तथा युक्ता प्रजा भवेत् ॥ २५॥

तस्मादाज्यं हविर्लाजास् सिकता ब्राह्मणास्तव ।
वैवाहिकानि चान्यानि सर्वमस्तीह पार्थिव ॥ २६॥

दुरुक्तमपि राजेन्द्र क्षन्तव्यं [1]धर्मकारणात् ॥ २७

वैशंपायनः—

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
पुरोहितं समाहूय वचनं युक्तमब्रवीत् ॥ २८

दुष्यन्तः—

राजपुत्र्या यदुक्तं वै न वृथा कर्तुमुत्सहे ।
क्रियाहीनो हि न भवेन्मम पुत्रो महाद्युतिः ॥ २९

तथा कुरुष्व शास्त्रोक्तं विवाहं मा चिरं कृथाः ॥ २९॥

वैशंपायनः—

एवमुक्तो नृपतिना द्विजः परमयन्त्रितः ।
शोभनं राजराजेति विधिना कृतवान् द्विजः ॥ ३०॥

शासनाद्विप्रमुख्यस्य कृतमङ्गलकौतुकः ।
जग्राह विधिवत्पाणिम् उवास च तया सह ॥ ३१॥

विश्वास्य चैनां प्रातिष्ठद् अब्रवीच्च पुनः पुनः ॥ ३२

दुष्यन्तः—

प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥ ३२॥

---

1. क-ख-ग—राज्य

[1]त्रयीविवृद्धैस्सहिता नागरा मामकैस्सह ।
शिबिकासहस्रैस्सहिता वनमायान्ति बान्धवाः ॥ ३३॥
मूकाश्चैव किराताश्च कुब्जा वामनकैस्सह ।
सहिताः कञ्चुकिवरैर् वाहिनीसूतमागधैः ॥ ३४॥
शङ्खदुन्दुभिनिर्घोषैर् वनं च समुपैष्यति ॥ ३५
तथा त्वामानयिष्यामि नगरं स्वं शुचिस्मिते ॥ ३५॥
अन्यथा त्वां न नेष्यामि स्वनिवेशमसत्कृताम् ।
सर्वमङ्गलसत्कारैस् सुभ्रु सत्यं करोमि ते ॥ ३६॥

वैशम्पायनः—

एवमुक्त्वा स राजर्षिस् तामनिन्दितगामिनीम् ।
संपरिष्वज्य बाहुभ्यां स्मितपूर्वमुदैक्षत ॥ ३७॥
प्रदक्षिणीकृतां देवीं राजा संपरिषस्वजे ।
शकुन्तला ह्यश्रुमुखी पपात नृपपादयोः ॥ ३८॥
तां देवीं पुनरुत्थाप्य मा शुचेति पुनः पुनः ।
शपेयं सुकृतेनैव प्रापयिष्ये नृपात्मजे ॥ ३९॥
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।
मनसा चिन्तयन् प्रायात् काश्यपं प्रति पार्थिवः ॥ ४०॥

1. क-ख-ग— त्रैविद्यवृद्धैस्सहिता नानाराजजनैस्सह ।
घ—त्रैविद्यवृद्धैः

भगवांस्तपसा युक्तश् श्रुत्वा किं नु करिष्यति ।
तं न प्रसाद्यागतोऽहं प्रसीदेति द्विजोत्तमम् ॥ ४१॥
एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥ ४२
ततो मुहूर्ते याते तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥ ४३
शङ्कितैव च विप्रर्षिम् उपचक्राम सा शनैः ।
ततोऽस्य राजञ्जग्राह आसनं चाप्यकल्पयत् ॥ ४४
प्राक्षालयच्च सा पादौ काश्यपस्य महात्मनः ।
न चैनं लज्जयाऽशक्नोद् अक्षिभ्यामभिवीक्षितुम् ॥ ४५
शकुन्तला च सव्रीडा तमृषिं नाभ्यभाषत ।
तस्मात् स्वधर्मात् स्खलिता भीता सा भरतर्षभ ॥ ४६
अभवद्दोषदर्शित्वाद् ब्रह्मचारिण्ययन्त्रिता ॥ ४६॥
स तदा व्रीडितां दृष्ट्वा ऋषिस्तां प्रत्यभाषत ॥ ४७

कण्वः—

सव्रीडैव च दीर्घायुः पुरेव भविता न च ।
वृत्तं कथय रम्भोरु मा त्रासं च प्रकल्पय ॥ ४८

वैशंपायनः—

ततः प्रक्षाल्य पादौ सा विश्रान्तं पुनरब्रवीत् ।
निधाय कामं तस्यर्षेः कन्दानि च फलानि च ॥ ४९

ततस्संवाह्य पादौ सा विश्रान्तं वेदिमध्यगा ।
शकुन्तला पौरवाणां दुष्यन्तं जग्मुषी पतिम् ॥ ५०

ततः कृच्छ्रादतिशुभा सव्रीडा श्रीमती तदा ।
सगद्गदमुवाचेदं काश्यपं सा शुचिस्मिता ॥ ५१

शकुन्तला—

राजा ताताजगामेह दुष्यन्त इलिलात्मजः ।
मया पतिर्वृतो योऽसौ दैवयोगादिहागतः ॥ ५२

तस्य तात प्रसीदस्व भर्ता मे सुमहायशाः ।
अतस्सर्वं तु यद्वृत्तं दिव्यज्ञानेन पश्यसि ॥ ५३

अभयं क्षत्रियकुले प्रसादं कर्तुमर्हसि ॥ ५३॥

वैशम्पायनः—

चक्षुषा स तु दिव्येन सर्वं विज्ञाय काश्यपः ।
ततो धर्मिष्ठतां मत्वा धर्मे चास्खलितं मनः ॥ ५४॥

उवाच भगवान् प्रीतस् तद्वृत्तं स महातपाः ॥ ५५

कण्वः—

एवमेतन्मया ज्ञातं दृष्टं दिव्येन चक्षुषा ॥ ५५॥

त्वयाऽद्य राजान्वयया मामनादृत्य यत्कृतम् ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥ ५६॥

न भयं विद्यते भद्रे मा शुचस्सुकृतं कृतम् ॥ ५७

क्षत्रियस्य तु गान्धर्वो विवाहश्श्रेष्ठ उच्यते ।
सकामायास्सकामेन [1]निमन्त्रश्श्रेष्ठ उच्यते ॥ ५८

किं पुनर्विधिवत्कृत्वा सुप्रजात्वमवाप्स्यसि ॥ ५८॥

धर्मात्मा च महात्मा च दुष्यन्तः पुरुषोत्तमः ।
अभ्यागच्छत् पतिर्यस्त्वां भजमानां शकुन्तले ॥ ५९॥

महात्मा जनिता लोके पुत्रस्तव महायशाः ।
स च सर्वां समुद्रान्तां [2]सम्यग्रक्ष्यति मेदिनीम् ॥ ६०॥

परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ॥
भविष्यत्यप्रतिहतं विततं चक्रवर्तिनः ॥ ६१॥

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ।
ऋतवो बहवस्ते वै गता व्यर्थाश्शुचिस्मिते ॥ ६२॥

[3]सार्थकं सांप्रतं ह्येतन्न च पापोऽस्ति तेऽनघे ।
गृहाण च वरं मत्तस् त्वत्कृते यदभीप्सितम् ॥ ६३॥

शकुन्तला—

मया पतिर्वृतो योऽसौ दुष्यन्तः पुरुषोत्तमः ।
मम चैव पतिर्दिष्टो देवतानां समक्षतः ॥ ६४॥

तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥ ६५

---

1. क-ख-ग—निमन्त्रो रहसि स्मृतः । घ—निर्मन्त्रो रहसि स्मृतः
2. क-ख-ग-घ—कृत्स्नां भोक्ष्यति
3. क-ख-ग—सार्थं समावृतं घ—सार्थकः सांप्रतं ह्येष

वैशंपायनः—

इत्येवमुक्त्वा मनसा प्रणिधाय मनस्विनी ।
ततो धर्मिष्ठतां वव्रे राज्ये [1]ऽप्रस्खलितं तथा ॥ ६६

[2]शकुन्तलां पौरवाणां दुष्यन्तहितकाम्यया ।
एवमस्त्विति तां प्राह कण्वो धर्मभृतां वरः ॥ ६७

पस्पर्श चापि पाणिभ्यां सुतां श्रीमिव रूपिणीम् ॥ ६७॥

कण्वः—

अद्यप्रभृति देवी त्वं दुष्यन्तस्य महात्मनः ।
पतिव्रतानां या वृत्तिस् तां वृत्तिमनुपालय ॥ ६८॥

वैशंपायनः—

इत्येवमुक्त्वा धर्मात्मा तां विशुद्ध्यर्थमस्पृशत् ।
स्पृष्टमात्रे शरीरे तु परं हर्षमवाप सा ॥ ६९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

॥ ७ ॥ संभवपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[अस्मिन्नध्याये ६९॥ श्लोकाः]

---

1. क-ख-ग-घ—चास्खलनं
2. घ—शकुन्तला पौरवस्य दुष्यन्तस्य हितैषिणी ।

## ॥ पञ्चाशीतितमोऽध्यायः ॥

शकुंतलायाः पुत्रोत्पत्तिः ॥ १ ॥ तस्य सर्वदमनेतिनामप्राप्तिः ॥ २ ॥ शकुंतलायाः दुष्यंतपुरप्रवेशः ॥ ३ ॥

वैशंपायनः –

प्रतिज्ञाय च दुष्यन्ते प्रतियाते शकुन्तलाम् ।
[1]गर्भश्च ववृधे तस्यां राजपुत्र्यां महात्मनः ॥ १

शकुन्तला चिन्तयन्ती राजानं कार्यगौरवात् ।
दिवारात्रमनिद्रैव स्नानभोजनवर्जिता ॥ २

राजप्रेषणिका विप्राश् चतुरङ्गबलैस्सह ।
अद्य श्वो वा परश्वो वा समायान्तीति निश्चिता ॥ ३

[2]दिवसान्पक्षानृतून्मासान् अयनानि च सर्वशः ।
गण्यमानेषु वर्षेषु व्यतीयुस्त्रीणि भारत ॥ ४

त्रिषु वर्षेषु पूर्णेषु ऋषेर्वचनगौरवात् ।
[3]ऋषिपत्न्यस्सुबहवो हेतुमद्वाक्यमब्रुवन् ॥ ५

ऋषिपत्न्यः—

शृणु भद्रे लोकवृत्तं श्रुत्वा यद्रोचते तव ।

---

1. घ—गर्भस्स ववृधे तस्याः राज्ञः पत्न्या महात्मनः ।
2. क-ख-ग—दिनानि पक्षर्तुमासान्
घ —दिनपक्षमासान्सर्तून् स गणयामास चायनैः ।
3. घ—ऋषिः पश्यत्सु बहवो हेतुमद्वाक्यमब्रवीत् ।

तत्कुरुष्व हितं देवि नावमान्यं गुरोर्वचः ॥ ६

देवानां दैवतं विष्णुर् विप्राणामग्निरेव च ।
नारीणां दैवतं भर्ता लोकानां ब्राह्मणो गुरुः ॥ ७

[1]सूतिकालं प्रसूवेति भगवांस्ते पिताऽब्रवीत् ।
करिष्यामीति कर्तव्यं तदा ते सुकृतं भवेत् ॥ ८

वैशंपायनः—

पत्नीनां वचनं श्रुत्वा साधु साध्वित्यचिन्तयत् ॥ ८॥

गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥ ९

त्रिषु वर्षेषु पूर्णेषु प्राजायत शकुन्तला ।
रूपौदार्यगुणोपेतं दौष्यन्ति जनमेजय ॥ १०

[2]तस्मै तदान्तरिक्षात्तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर् ननृतुश्चाप्सरोगणाः ॥ ११

गायन्तो मधुरं तत्र देवैश्शक्रोऽभ्युवाच ह ॥ ११॥

शक्रः—

शकुन्तले तव सुतश् चक्रवर्ती भविष्यति ॥ १२

बलं तेजश्च रूपं च न समं भुवि केनचित् ।
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ॥ १३

---

1. क-ग—काले प्रसूष्वेति   ख-घ—कालं प्रसूष्वेति
2. क-ख-ग—जाते तस्मिन्नन्तरिक्षात् ।  घ—तस्मिंस्तदाऽन्तारिक्षात् ।

अनेकानि सहस्राणि राजसूयादिभिर्मखैः ।
स्वार्थे ब्राह्मणसात्कृत्वा दक्षिणाममितां ददत् ॥ १४

वैशम्पायनः—
देवतानां वचश्श्रुत्वा कण्वाश्रमनिवासिनः ।
सभाजयन्तः कण्वस्य सुतां सर्वे महर्षयः ॥ १५
शकुन्तला च तच्छ्रुत्वा परं हर्षमवाप सा ॥ १५॥
द्विजानाहूय मुनिभिस् सत्कृत्य च महायशाः ॥ १६
जातकर्मादिसंस्कारं कण्वः पुण्यवतां वरः ।
तस्याथ कारयामास वर्धमानस्य चासकृत् ॥ १७
यथाविधि यथान्यायं क्रियास्सर्वास्त्वकारयत् ॥ १७॥
दन्तैश्शुक्लैश्शिखरिभिस् सिंहसंहननोऽभवत् ॥ १८
चक्राङ्कितकरश्श्रीमान् स्वयं विष्णुरिवापरः ।
चतुष्किष्कुर्महातेजा महामूर्धा महाबलः ॥ १९
कुमारो देवगर्भाभस् स तत्राशु व्यवर्धत ।
[1]ऋषेर्भयात्तु दुष्यन्तः स्मरन्नैवाह्वयत्तदा ॥ २०
गते काले तु महति न सस्मार तपोधनाम् ॥ २०॥
षड्वर्षेषु ततो बालः कण्वाश्रमपदं प्रति ॥ २१
व्याघ्रान् सिंहान् वराहांश्च वृकांश्च महिषांस्तथा ।
ऋक्षांश्चाभ्यहनद्व्यालान् पद्भ्यामाश्रमपीडकान् ॥ २२

1. अ—कोशे इदमर्धं नास्ति

गजान् भुजाभ्यां संगृह्य बलवान् संनियम्य च ।
बद्ध्वा वृक्षेषु दौष्यन्तिर् आश्रमस्य समन्ततः ॥ २३

[1]आरोहद्द्रुमयंश्चैव क्रीडन् स्म परिधावति ।
वनं च लोडयामास सिंहव्याघ्रगणैर्वृतम् ॥ २४

ततश्च राक्षसान् सर्वान् पिशाचांश्च रिपून् रणे ।
मुष्टियुद्धेन ता[2]ञ्जित्वा ऋषीनाराधयत्तदा ॥ २५

कश्चिद्दितिसुतस्तं तु हन्तुकामो महाबलः ।
वध्यमानांस्तु दैतेयान् अमर्षी तं समभ्ययात् ॥ २६

तमागतं प्रहस्यैव बाहुभ्यां परिगृह्य च ।
दृढं चाबध्य बाहुभ्यां पीडयामास तं तदा ॥ २७

[3]मर्दितो न शशाकास्य मोचितुं बलवत्तया ।
प्राक्रोशद्भैरवं तत्र द्वारेभ्यो निस्सृतं त्वसृक् ॥ २८

तेन शब्देन वित्रस्ता मृगास्सिंहादयो गणाः ।
सुस्रुवुश्च शकृन्मूत्रम् आश्रमस्थाश्च सुस्रुवुः ॥ २९

[4]निरसुं जानुभिः कृत्वा विससर्ज च सोऽपतत् ।
तं दृष्ट्वा विस्मयं चक्रुः कुमारस्य विचेष्टितम् ॥ ३०

---

1. क-ख-ग—आरुराहे द्रुमांश्चैव क्रीडंश्च ।
घ—आरूढं दमयंश्चैव क्रीडंश्च ।
2. क-ख-ग—तान्हत्वा । घ—निर्जित्य मुनीन् । 3. अ—हृषितो
4. घ—निरसुर्जानुना भूमौ पपात भुवि पीडितः ।

नित्यकालं वध्यमाना दैतेया राक्षसैस्सह ।
कुमारस्य भयादेव नैव जग्मुस्तदाश्रमम् ॥ ३१

ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
कण्वेन सहितास्सर्वे दृष्ट्वा कर्मातिमानुषम् ॥ ३२

अस्त्वयं सर्वदमनस् सर्वं हि दमयत्यसौ ।
स सर्वदमनो नाम कुमारस्समपद्यत ॥ ३३

विक्रमेणौजसा चैव बलेन च समन्वितः ॥ ३३॥

अप्रेषयति दुष्यन्ते महिष्यास्तनयस्य च ॥ ३४

पाण्डुभावपरीताङ्गीं चिन्तया समभिप्लुताम् ।
लम्बालकां कृशां दीनां तथा मलिनवाससम् ॥ ३५

शकुन्तलां च संप्रेक्ष्य प्रदध्यौ स मुनिस्तदा ॥ ३५॥

शास्त्राणि सर्ववेदाश्च द्वादशाब्दस्य चाभवन् ॥ ३६

तं कुमारमृषिर्दृष्ट्वा कर्म च ह्यतिमानुषम् ।
समयो यौवराज्याय इत्यनुध्याय स द्विजः ॥ ३७

शकुन्तलां समाहूय कण्वो वचनमब्रवीत् ॥ ३७॥

कण्वः—

शृणु भद्रे मम सुते मम वाक्यं शुचिस्मिते ।
पतिव्रतानां नारीणां विशिष्टमिति चोच्यते ॥ ३८॥

पतिशुश्रूषणं पूर्वं मनोवाक्कायचेष्टितैः ।

अनुज्ञाता मया पूर्वं पूजयैतद्व्रतं तव ॥ ३९॥

[1]*एतेनैव च वृत्तेन विशिष्टां लप्स्यसे श्रियम् ॥ ४०

तस्माद्भद्रे प्रयातव्यं समीपं पौरवस्य ह ॥ ४०॥

स्वयं नायाति मत्वा ते गतं कालं शुचिस्मिते ।

गत्वाऽऽराधय राजानं दुष्यन्तं हितकाम्यया ॥ ४१॥

दौष्यन्तिं यौवराज्यस्थं दृष्ट्वा प्रीतिमवाप्स्यसि ॥ ४२

देवतानां गुरूणां च क्षत्रियाणां च भामिनि ।

भर्तॄणां च विशेषेण हितं संगमनं सताम् ॥ ४३

तस्मात्पुत्रि कुमारेण गन्तव्यं मत्प्रियेप्सया ।

प्रतिवाक्यं न दद्यास्त्वं शापिता मम पादयोः ॥ ४४

वैशंपायनः—

एवमुक्त्वा सुतां तत्र पौत्रं कण्वोऽभ्यभाषत ॥

परिष्वज्य च बाहुभ्यां मूर्ध्न्युपाघ्राय [2]पौत्रकम् ॥ ४५

कण्वः—

सोमवंशोद्भवो राजा दुष्यन्तो नाम विश्रुतः ।

तस्याग्रमहिषी चैषा तव माता शुचिव्रता ॥ ४६

गन्तुकामा भर्तृवशं त्वया सह सुमध्यमा ।

---

1. क-ख-ग—एतेनैव च वृत्तेन पुण्यांल्लोकानवाप्य च ।

[अधिकः पाठः]

* क-ख-ग-घ—तस्यान्ते मानुषे लोके 2. क-ख-ग-घ—पौरवं

गत्वाऽभिवाद्य राजानं यौवराज्यमवाप्स्यसि ॥ ४७

स पिता तव राजेन्द्रस् तस्य त्वं वशगो भव ।
पितृपैतामहं राज्यम् अनुतिष्ठस्व भावतः ॥ ४८

तस्मिन् काले स्वराज्यस्थो मामनुस्मर [1]पौत्रक ॥ ४८॥

वैशंपायनः—

अभिवाद्य मुनेः पादौ पौरवो वाक्यमब्रवीत् ॥ ४९

सर्वदमनः—

त्वं पिता मम विप्रर्षे त्वं माता त्वं गतिश्च मे ।
न चान्यं पितरं मन्ये त्वामृते तु महातपः ॥ ५०

तव शुश्रूषणं पुण्यम् इह लोके परत्र च ॥ ५०॥

शकुन्तला भर्तृकामा स्वयं यातु यथेष्टतः ।
अहं शुश्रूषणपरः पादमूले वसामि वः ॥ ५१॥

क्रीडां व्यालमृगैस्सार्धं करिष्ये न पुरा यथा ।
त्वच्छासनपरो नित्यं स्वाध्यायं सुकरोम्यहम् ॥ ५२॥

वैशंपायनः—

एवमुक्त्वा तु संश्लिष्य पादौ कण्वस्य [2]तिष्ठति ॥ ५३

तस्य तद्वचनं श्रुत्वा प्ररुरोद शकुन्तला ।

---

1. क-ख-ग-घ—पौरव 2. घ—च स्थितः—

स्नेहात् पितुश्च पुत्रस्य हर्षशोकसमन्विता ॥ ५४

निशाम्य रोदनं मातुर् दौष्यन्तिर्वाक्यमब्रवीत् ॥ ५४॥

सर्वदमनः—

श्रुत्वा भगवतो वाक्यं किं रोदिषि शकुन्तले ।
गन्तव्यं कालय उत्थाय भर्तृप्रीतिस्तवास्ति चेत् ॥ ५५॥

शकुन्तला—

एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
भोक्तारस्तत्र मुच्यन्ते कर्ता दोषेण लिप्यते ॥ ५६॥

मया निवारितो नित्यं न करोषि वचो मम ॥ ५७

[1]निस्सृतान्कुञ्जरान्नित्यं बाहुभ्यां संप्रमथ्य वै ।
वनं च लोडयन्नित्यं सिंहव्याघ्रगणैर्वृतम् ॥ ५८

एवंविधानि चान्यानि कृत्वा वै पुरुनन्दन ।
रुषितो भगवांस्तात तस्मादावां विवासितौ ॥ ५९

अहं न गच्छे दुष्यन्तं नास्मि पुत्र हितैषिणी ।
पादमूले वसिष्यामि महर्षेर्भावितात्मनः ॥ ६०

वैशंपायनः—

एवमुक्त्वा तु रुदती पपात मुनिपादयोः ॥ ६०॥

एवं विलपतीं कण्वश् चानुनीय च हेतुभिः ।
पुनः प्रोवाच भगवान् आनृशंस्याद्धितं वचः ॥ ६१॥

---

1. क-ख-ग-घ—त्रिस्रोतान् ।

कण्वः—

शकुन्तले शृणुष्वेदं हितं पथ्यं च भामिनि ।
पतिव्रताभावगुणान् हित्वा साध्यं न किंचन ॥ ६२॥

पतिव्रतानां देवा वै तुष्टास्सर्ववरप्रदाः ।
प्रसादं च करिष्यन्ति ह्यापदर्थे च भामिनि ॥ ६३॥

पतिप्रसादात्पुण्यगतिं प्राप्नुवन्ति न चाशुभम् ।
तस्माद्गत्वा तु राजानम् आराधय शुचिस्मिते ॥ ६४॥

वैशम्पायनः—

शकुन्तलां तथोक्त्वा वै शाकुन्तलमथाब्रवीत् ॥ ६५

कण्वः—

दौहित्रो मम पौत्रस्त्वम् इलिलस्य महात्मनः ।
शृणुष्व वचनं सत्यं प्रब्रवीमि तवानघ ॥ ६६

मनसा भर्तृकामा वै वाग्भिरुक्त्वा पृथग्विधम् ।
गन्तुं नेच्छति कल्याणी तस्मात्तात वहस्व वै ॥ ६७

शक्तस्त्वं प्रतिगन्तुं च मुनिभिस्सह पौरव ॥ ६७॥

वैशंपायनः—

इत्युक्त्वा सर्वदमनं कण्वश्शिष्यानथाब्रवीत् ॥ ६८

कण्वः—

शकुन्तलामिमां शीघ्रम् इहास्माद्भर्तुरन्तिकम् ।
भर्तुः प्रापयत स्थानं सर्वलक्षणपूजितम् ॥ ६९

नारीणां चिरवासो हि बान्धवेषु न रोचते ।
कीर्तिचारित्रधर्मघ्नस् तस्मान्नयत मा चिरम् ॥ ७०

वैशम्पायनः—

धर्माभिपूजितं पुत्रं काश्यपेन निशाम्य तु ।
काश्यपात् प्राप्य चानुज्ञां मुमुदे च शकुन्तला ॥ ७१

कण्वस्य वचनं श्रुत्वा प्रतिगच्छेति चासकृत् ।
तथेत्युक्त्वा तु कण्वं च मातरं पौरवोऽब्रवीत् ॥ ७२

किं चिरायसि मातस्त्वं गमिष्यामो नृपालयम् ॥ ७२॥

एवमुक्त्वा तु तां देवीं दुष्यन्तस्य महात्मनः ।
अभिवाद्य मुनेः पादौ गन्तुमैच्छत्स पौरवः ॥ ७३॥

शकुन्तला च पितरम् अभिवाद्य कृताञ्जलिः ।
प्रदक्षिणीकृत्य तदा पितरं वाक्यमब्रवीत् ॥ ७४॥

अज्ञानान्मे पिता चेति दुरुक्तं वापि चानृतम् ।
अकार्यं वाप्यनिष्टं वा क्षन्तुमर्हति काश्यप ॥ ७५॥

एवमुक्तो नतशिरा मुनिर्नोवाच किंचन ।
मनुष्यभावात् कण्वोऽपि मुनिरश्रूण्यवर्तयत् ॥ ७६॥

अब्भक्षान् वायुभक्षांश्च शीर्णपर्णाशनान् मुनीन् ।
फलमूलाशिनो दान्तान् कृशान् धमनिसंततान् ॥ ७७॥

व्रतिनो जटिलान् मुण्डान् वल्कलाजिनसंवृतान् ।

समाहूय मुनीन् कण्वः कारुण्यादिदमब्रवीत् ॥ ७८॥
मया तु लालिता नित्यं मम पुत्री यशस्विनी ।
वने जाता विवृद्धा च न च जानाति किंचन ॥ ७९॥
आश्रमेण पथा सर्वैर् नीयतां क्षत्रियालयम् ।
[1]द्वितीययोजने विप्राः प्रतिष्ठानं प्रतिष्ठितम् ॥ ८०॥
प्रतिष्ठाने पुरे राजा शाकुन्तलपितामहः ।
अध्युवास चिरं कालम् उर्वश्या सहितः पुरा ॥ ८१॥
अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।
[2]प्रतिष्ठितं पुरवरं गङ्गायामुनसङ्गमे ॥ ८२॥
तत्र सङ्गममासाद्य स्नात्वा हुतहुताशनाः ।
शाकमूलफलाहारा निवर्तध्वं महातपाः । ८३॥
अन्यथा तु भवेद्विप्रा अध्वनो गमने श्रमः ॥ ८४

वैशम्पायनः—

तथेत्युक्त्वा च ते शिष्याः [3]प्रातिष्ठन्नमितौजसः ।
शकुन्तलां पुरस्कृत्य दुष्यन्तस्य पुरं प्रति ॥ ८५
गृहीत्वा चामरप्रख्यं पुत्रं कमललोचनम् ।
आजग्मुश्च पुरं शुभ्रं दुष्यन्ताध्युषितं वनात् ॥ ८६

1. अ—द्व्यशीति 2. घ—प्रतिष्ठानं पुरं गत्वा
3. क-ख-ग—प्रावर्तन्तामितौजसः

शकुन्तलां समादाय मुनयो धर्मवत्सलाः ।
ते वनानि नदीश्शैलान् गिरिप्रस्रवणानि च ॥ ८७

कन्दराणि नितम्बांश्च राष्ट्राणि नगराणि च ।
आश्रमाणि च पुण्यानि गत्वा चैव गतश्रमाः ॥ ८८

शनैर्मध्याह्नवेलायां प्रतिष्ठानं समाययुः ॥ ८८॥
तां पुरीं पुरुहूतेन ह्यैलस्यार्थे विनिर्मिताम् ॥ ८९

[1]परिघावप्रपुरगैर् उपतल्पशतैरपि ।
शतघ्नी[2]चक्रवज्रैश्च गुप्तामन्यैर्दुरासदाम् ॥ ९०

हर्म्यप्रासादसंबाधां नानापण्यविभूषिताम् ।
मण्टपैस्ससभै रम्यैः प्रपाभिश्च समावृताम् ॥ ९१

राजमार्गेण महता सुविभक्तेन शोभिताम् ।
कैलासशिखराकारैर् गोपुरैस्समलङ्कृताम् ॥ ९२

द्वारतोरणनिर्यूहैर् मङ्गलैरुपशोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ ९३

सर्वपुष्करिणीभिश्च उद्यानैश्च समावृताम् ॥ ९३॥
वर्णाश्रमैस्स्वधर्मस्थैर् नित्योत्सवसमाहितैः ।
धनधान्यसमृद्धैश्च संतुष्टै रत्नपूजितैः ॥ ९४॥

1. क-ख-ग—परिघाट्टालकैर्मुख्यैः । घ—परिघासालकैर्मुख्यैः
2. क-ख-ग—शतयन्त्रैश्च । (घ)—शतयन्त्रस्य चक्रैश्च

क्रतुयुक्तैश्च विद्वद्भिर् अग्निहोत्रपरैस्सदा ।
[1]अकार्यवर्जितैश्चैव दानशीलैर्दयापरैः ॥ ९५॥
अधर्मभीरुभिस्सर्वैस् स्वर्गलोकजिगीषुभिः ॥ ९६
एवंविधजनोपेतम् इन्द्रलोकमिवापरम् ॥ ९६॥
तस्मिन्नगरमध्ये तु राजवेश्म प्रतिष्ठितम् ।
इन्द्रसद्मप्रतीकाशं संपूर्णं वित्तसंचयैः ॥ ९७॥
तस्य मध्ये सभा दिव्या नानारत्नविचित्रिता ॥ ९८
तस्यां सभायां राजर्षिस् सर्वालङ्कारभूषितः ।
ब्राह्मणैः क्षत्रियैश्चैव मन्त्रिभिश्चापि संवृतः ॥ ९९
संस्तूयमानो राजेन्द्रस् सूतमागधवन्दिभिः ॥ ९९॥
[2]सुखासीनोऽभवद्राजा तस्मिन्काले महर्षयः ।
शकुन्तानां स्वनं श्रुत्वा निमित्तज्ञास्त्वलक्षयन्[3] ॥ १००॥

ऋषयः—

शकुन्तले निमित्तानि शोभनानीह वन्दिनः ।
कार्यसिद्धिं वदन्त्येते ध्रुवं राज्ञी भविष्यसि ॥ १०१॥
अस्मिंस्तु दिवसे पुत्रो युवराजो भविष्यति ॥ १०२

1. क-ख-ग—वर्जिताकार्यकरणैः ।
2. क-ख-ग-घ—कार्यार्थिभिस्समभ्येत्य कृत्वा कार्यं गतेषु सः । [अधिकः पाठः]
3. घ—शकुन्तलामिदं प्रीता हर्षयन्तोऽब्रुवन्वचः । [अधिकः पाठः]

वैशम्पायनः—

वर्धमानपुरद्वारं तूर्यघोषनिनादितम् ।

शकुन्तलां पुरस्कृत्य विविशुस्ते महर्षयः ॥ १०३

प्रविशन्तं नृपसुतं प्रशशंसुश्च प्रेक्षकाः ॥ १०३॥

वर्धमानपुरद्वारं प्रविशन्नेव पौरवः ।

इन्द्रलोकस्थमात्मानं मेने हर्षसमन्वितः ॥ १०४॥

ततो वै नागरास्सर्वे समाहूय परस्परम् ।

द्रष्टुकामा नृपसुतं समपद्यन्त भारत ॥ १०५॥

नागराः—

देवतेव जनस्याग्रे भ्राजते श्रीरिवागता ।

जयन्तेनेव पौलोमी इन्द्रलोकादिहागता ॥ १०६॥

वैशम्पायनः—

इति ब्रुवन्तस्ते सर्वे महर्षीनिदमब्रुवन् ॥ १०७

अभिवादयाम सहिता महर्षीन् देववर्चसः ॥ १०७॥

1 वैशम्पायनः—

इत्युक्त्वा सहिताः केचिद् अन्वगच्छन्त पौरवम् ।

हैमवत्यास्सुतमिव कुमारं पुष्करेक्षणम् ॥ १०८॥

ये केचिदब्रुवन्मूढाः शाकुन्तलदिदृक्षवः ।

1. क-ख-ग-घ—अद्य नस्सफलं जन्म कृतार्थाश्च ततो वयम् ।
यत्तु नेत्रैः प्रपश्यामो महार्षिन् सूर्यवर्चसः ॥

[अधिकः पाठः]

कृष्णाजिनेन संछन्नान् द्रष्टुं नेच्छन्ति तापसान् ॥ १०९॥
पिशाचा इव दृश्यन्ते नागराणां विरूपिणः ।
विना सन्ध्यां पिशाचास्ते प्रविशन्ति पुरोत्तमम् ॥ ११०॥
क्षुत्पिपासार्दितान् दीनान् वल्कलाजिनवाससः ।
त्वगस्थिभूतान् निर्मांसान् धमनीसन्ततानपि ॥ १११॥
पिङ्गलाक्षान् पिङ्गजटान् दीर्घदन्तान्निरूदरान् ।
विशीर्षकानूर्ध्वहस्तान् दृष्ट्वा हास्यन्ति नागराः ॥ ११२॥
एवमुक्तवतां तेषां गिरं श्रुत्वा महर्षयः ।
अन्योन्यं ते समाहूय इदं वचनमब्रुवन् ॥ ११३॥
उक्तं भगवता वाक्यं न कृतं सत्यवादिना ।
पुरप्रवेशनं नात्र कर्तव्यमिति शासनम् ॥ ११४॥
किं कारणं प्रवेक्ष्यामो नगरं दुर्जनैर्वृतम् ।
त्यक्तसङ्गस्य च मुनेर् नगरे किं प्रयोजनम् ॥ ११५॥
तस्माद्गमिष्याम वयं गङ्गायामुनसङ्गमम् ।
एवमुक्त्वा मुनिगणाः प्रतिजग्मुर्यथागतम् ॥ ११६॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५॥
॥ ७ ॥ संभवपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[अस्मिन्नध्याये ११६॥ श्लोकाः]

## ॥ षडशीतितमोऽध्यायः ॥

सपुत्रायाः शकुन्तलाया दुष्यन्तसमीपगमनं ॥ १ ॥ तयोः संवादश्च ॥ २ ॥

वैशम्पायनः—

गतान् मुनिगणान् दृष्ट्वा पुत्रं संगृह्य पाणिना ।
मातापितृभ्यां विरहाद् यथा शोचन्ति दारकाः ॥ १

तथा शोकपरीताङ्गी धृतिमालम्ब्य दुःखिता ।
[1]पुत्रेणैव सहायेन सा जगाम शनैश्शनैः ॥ २

अदृष्टपूर्वान् पश्यन् वै राजमार्गेण पौरवः ।
हर्म्यप्रासादचैत्यांश्च सभा दिव्या विचित्रिताः ॥ ३
कौतूहलसमाविष्टो दृष्ट्वा विस्मयमागतः ॥ ३॥

सर्वे ब्रुवन्ति तां दृष्ट्वा पद्महीनामिव श्रियम् ।
गतेन हंसीसदृशीं कोकिलेन स्वरे समाम् ॥ ४॥

मुखेन चन्द्रसदृशीं श्रिया पद्मालयासमाम् ।
स्मितेन कुन्दसदृशीं पद्मगर्भसमत्वचम् ॥ ५॥

पद्मपत्रविशालाक्षीं तप्तजाम्बूनदप्रभाम् ।
करान्तमितमध्यां तां सुकेशीं संहतस्तनीम् ॥ ६॥

1. क-ख-ग—गतेषु तेषु विप्रेषु राजमार्गेण भामिनी ।
[अधिकः पाठः]

जघनं सुविशालं वै ऊरू करिकरोपमौ ।
रक्ततुङ्ग[1]तलौ पादौ धरण्यां सुप्रतिष्ठितौ ॥ ७॥
एवं रूपसमायुक्ता स्वर्गलोकादिहागता । ८
इति स्म सर्वेऽमन्यन्त दुष्यन्तनगरे जनाः ॥ ८॥
पुनः पुनरवोचंस्ते शाकुन्तलगुणानपि ॥ ९
सिंहेक्षणस्सिंहदंष्ट्रस् सिंहस्कन्धो महाभुजः ।
सिंहोरस्कस्सिंहबलः सिंहविक्रान्तगाम्ययम् ॥ १०
पृथ्वंसः पृथुवक्षाश्च छत्राकारशिरा महान् ।
पाणिपादतले रक्तो रक्तास्यो दुन्दुभिस्वनः ॥ ११
राजलक्षणयुक्तश्च राजश्रीश्चास्य लक्ष्यते ॥ ११॥
आकारेण च रूपेण शरीरेणापि तेजसा ।
दुष्यन्तेन समो ह्येष कस्य पुत्रो भविष्यति ॥ १२॥
एवं ब्रुवन्तस्ते सर्वे प्रशशंसुस्सहस्रशः ॥ १३
युक्तिवादानवोचन्त सर्वाः प्राणभृतस्स्त्रियः ।
बान्धवा इव सस्नेहा अनुजग्मुश्शकुन्तलाम् ॥ १४
पौराणां तद्वचश्श्रुत्वा तूष्णींभूता शकुन्तला ॥ १४॥
वेश्मद्वारं समासाद्य विह्वलन्ती नृपात्मजा ।
चिन्तयामास सहसा कार्यगौरवकारणात् ॥ १५॥

---

1. क-ख-ग-घ—नखौ

लज्जया च परीताङ्गी राजन् राजसमक्षतः ।
अघृणा किं नु वक्ष्यामि दुष्यन्तं मम कारणात् ॥ १६॥
एवमुक्त्वा तु कृपणा चिन्तयन्ती शकुन्तला ।
अभिसृत्य च राजानं वेदिता सा प्रवेशिता ॥ १७॥
सह तेन कुमारेण तरुणादित्यवर्चसा ॥ १८
सिंहासनस्थं राजानं महेन्द्रसदृशद्युतिम् ।
शकुन्तला नतशिराः परं हर्षमवाप्य च ॥ १९
पूजयित्वा यथान्यायं अब्रवीत्तं शकुन्तला ॥ १९॥
अभिवादय राजानं पितरं ते दृढव्रतम् ।
एवमुक्त्वा तु पुत्रं सा लज्जानतमुखी स्थिता ॥ २०॥
स्तम्भमालिङ्ग्य राजानं प्रसीदस्वेत्युवाच सा ॥ २१
शाकुन्तलोऽपि राजानम् अभिवाद्य कृताञ्जलिः ।
हर्षेणोत्फुल्लनयनो राजानं चान्ववैक्षत ॥ २२
दुष्यन्तो धर्मबुद्ध्या तु चिन्तयन्नेव सोऽब्रवीत् ॥ २२॥

दुष्यन्तः—

किमागमनकार्यं ते ब्रूहि त्वं वरवर्णिनि ।
करिष्यामि न संदेहः सपुत्राया विशेषतः ॥ २३॥

शकुन्तला—

प्रसीदस्व महाराज वक्ष्यामि पुरुषोत्तम ॥ २४

एष पुत्रो हि ते राजन् मय्युत्पन्नः परंतप ।
तस्मात्पुत्रस्त्वया राजन् यौवराज्येऽभिषिच्यताम् ॥ २५
यथोक्तमाश्रमे तस्मिन् वर्तस्व पुरुषोत्तम ।
मया समागमे पूर्वं कृतस्स समयस्त्वया ॥ २६
तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥ २६॥

वैशंपायनः—

तस्योपभोगसक्तस्य स्त्रीषु चान्यासु भारत ।
शकुन्तला सपुत्रा च मनस्यन्तरधीयत ॥ २७॥
[1]सोऽथ श्रुत्वा तु तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति त्वया भद्रे समागमम् ॥ २८॥
मैथुनं च वृथा नाहं गच्छेयमिति मे मतिः ।
नाभिजानामि कल्याणि त्वया सह समागमम् ॥ २९॥
धर्मार्थकामसंबन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ ३०॥
सैवमुक्ता वरारोहा व्रीडितेव मनस्विनी ।
विसंज्ञेव च दुःखेन तस्थौ विगतचेतना ॥ ३१॥
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा ।

---

1. क-ख-ग—स धारयन्मनसैनां सपुत्रां सस्मितां तदा ।
तदोपगूह्य मनसा चिरं सुखमवाप सः ॥
[अधिकः पाठः]

निर्दहन्तीव नेत्राभ्यां तिर्यग्राजानमैक्षत ॥ ३२॥

आकारं गूहमाना च मन्युना च समीरितम् ।
तपसा संभृतं तेजो धारयामास वै तदा ॥ ३३॥

सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमपि संप्रेक्ष्य यथान्यायं वचोऽब्रवीत् ॥ ३४॥

शकुन्तला—

जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निश्शङ्कं यथान्यः प्राकृतस्तथा ॥ ३५॥

तस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याणं बत साक्षीणाम् आत्मानमवमन्यसे ॥ ३६॥

योऽन्यथा सन्तमात्मानम् अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ३७॥

एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
तस्यान्तिके त्वं वृजिनं करोषि ॥ ३८॥

धर्म एव हि साधूनां सर्वेषां हितकारणम् ।
नित्यं मिथ्याविहीनानां न च दुःखावहो भवेत् ॥ ३९॥

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।

देवाश्चैनं विदन्त्येव भूताश्चैव तथापरे ॥ ४०॥

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं [1]यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जनाति नरस्य वृत्तम् ॥ ४१॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ ४२॥

न तुष्यति च यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं [2]निर्भर्त्सयति दुष्कृतम् ॥ ४३॥

योऽवमत्यात्मनात्मानम् अन्यथा प्रतिपद्यते ।
न तस्य देवाश्श्रेयांसो यस्यात्मापि न कारणम् ॥ ४४॥

स्वयं प्राप्तेति मामेवं मा वमंस्था पतिव्रताम् ।
अर्चार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥ ४५॥

किमर्थं मां प्राकृतवद् उपप्रेक्षसि संसदि ।
सा खल्वहमिदं शून्यं करोमि न श्रृणोषि मे ॥ ४६॥

यदि मे याचमानाया वचनं न करिष्यसि ।
दुष्यन्त! शतधा त्वद्य मूर्धा ते विफलिष्यति ॥ ४७॥

---

1. अ—दिशश्च । घ—मनश्च ।
2. क-ख-ग—तिर्यङ्नयति । घ—निर्यातयति

जायां पतिस्संप्रविश्य यदस्यां जायते पुनः ।
जायाया इति जायात्वं [1]यत्तस्यां जायते ततः ॥ ४८॥

यदागमवतः पुंसो यदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान् पितामहान् ॥ ४९॥

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः पूर्वमेव स्वयंभुवा ॥ ५०॥

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः ॥ ५१॥

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या याऽ[2]तिथिप्रिया ॥ ५२॥

अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमस्सखा ।
भार्या मूलं त्रिवर्गस्य यस्सभार्यस्स बन्धुमान् ॥ ५३॥

भार्यावन्तः क्रियावन्तस् सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तश्श्रिया वृताः ॥ ५४॥

सहायाः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥ ५५॥

कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ।
यस्सदारस्स विश्वास्यस् तस्माद्दाराः परा गतिः ॥ ५६॥

---

1. घ—यत्तस्यां जायते सुतः । 2. क-ख-ग—पतिव्रता

संसरन्तमभिप्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं वै पतिव्रता ॥ ५७॥

प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वप्रेतं तु भर्तारं पश्चात्साप्यनुगच्छति ॥ ५८॥

एतस्मात्कारणाद्राजन् पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्याम् इह लोके परत्र च ॥ ५९॥

पोषणार्थं शरीरस्य पाथेयं स्वर्गतस्य वै ।
आत्माऽऽत्मनैव जनितः पुत्र इत्युच्यते बुधैः ॥ ६०॥

तस्माद्भार्यां पतिः पश्येन्मातृवत्पुत्रमातरम् ।
अन्तरात्मैव सर्वस्य पुत्रनाम्नोच्यते सदा ॥ ६१॥

गती रूपं च चेष्टा च आवर्ता [1]लक्षणानि च ।
पितॄणां यानि दृश्यन्ते पुत्राणां सन्ति तानि च ॥ ६२॥

तेषां शीलगुणाचारास् तत्संपर्काच्छुभाशुभाः ॥ ६३

भार्यायां जनितं पुत्रम् आदर्शे स्वमिवाननम् ।
जनितं मोदते प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ६४

[2]पतिव्रतारूपधरा परबीजस्य संग्रहात् ।

---

1. क-ख-ग—रोमराजयः

2. घ—पितॄणां यनि दृश्यन्ते पुत्राणां सन्ततानि वै ।
तेषां शीला गुणाचारा परबीजस्य संग्रहात् ॥
[अधिकः पाठः]

[1]कुलं विनाश्य भर्तॄणां नरकं याति दारुणम् ॥ ६५

परेण जनिताः पुत्रास् स्वभार्यायां यथेष्टतः ।
मम पुत्रा इति मतास् ते पुत्रा अपि शत्रवः ॥ ६६

द्विषन्ति प्रतिकुर्वन्ति न ते वचनकारिणः ॥ ६६॥

[2]न द्वेष्टीति पिता पुत्रं तस्मादात्मा सुतो भवेत् ॥ ६७

दह्यमाना मनोदुःखैर् व्याधिभिस्तुमुलैर्जनाः ।
स्वेषु दारेषु तुष्यन्ति घर्मार्तास्सलिलेष्विव ॥ ६८

विप्रवासकृशा दीना नरा मलिनवाससः ।
तेऽपि स्वदारांस्तुष्यन्ति दरिद्रा धनलाभवत् ॥ ६९

[3]अप्रियोक्तोऽपि दाराणां न ब्रूयादप्रियं वचः ।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य च ॥ ७०

आत्मनोऽर्धमिति श्रौतं सा रक्षति धनं प्रजाः ।
शरीरं लोकयात्रां वै धर्मं स्वर्गमृषीन् पितॄन् ॥ ७१

आत्मनो जन्मनः क्षेत्रं पुण्या रामास्सनातनाः ।
ऋषीणामपि का शक्तिस् स्रष्टुं रामामृते प्रजाः ॥ ७२

---

1. क-ख-ग—कुलानि अस्य दृश्यन्ते पुत्राणां सन्ततानि च ।
[अधिकः पाठः]

2. क-ख-ग—न द्वेष्यति पिता पुत्रांस्तस्मादात्मसमो भवेत् ।
घ—न द्वेष्टि पितरं पुत्रस् तस्मादात्मसुतो भवेत् ।

3. क-ख-ग—सुसंक्रुद्धोऽपि

देवानामपि का शक्तिः वेत्तुं संभवमात्मनः ।
पण्डितस्यापि लोकेषु स्त्रीषु सृष्टिः प्रतिष्ठिता ॥ ७३

ऋषिभ्यो ह्यृषयः केचित् चण्डालीष्वपि जज्ञिरे ॥ ७३॥

परिसृत्य यदा सूनुर् धरणीरेणुकुण्ठितः ।
पितुरालिङ्गतेऽङ्गानि [1]किमिवाभ्यधिकं ततः ॥ ७४॥

स त्वं सूनुमभिप्राप्तं साभिलाषं मनस्विनम् ।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥ ७५॥

अण्डानि बिभ्रति स्वानि न त्यजन्ति पिपीलिकाः ।
किं पुनस्त्वं न मन्येथास् सर्वथा पुत्रमीदृशम् ॥ ७६॥

न भरेथाः कथं नु त्वम्[2] अज्ञातं स्वं स्वमात्मजम् ।
ममाण्डानीति वर्धन्ते कोकिलानिव वायसाः ॥ ७७॥

किं पुनस्त्वं न मन्येथास् सर्वज्ञः पुत्रमीदृशम् ॥ ७८

मलयाच्चन्दनं जातम् अतिशीतं वदन्ति वै ।
शिशोरालिङ्ग्यमानस्य चन्दनादधिकं भवेत् ॥ ७९

न वाससां न रामाणां नापां स्पर्श[3]स्तथाविधः ।
शिशुनालिङ्ग्यमानस्य स्पर्शस्सूनोर्यथा सुखः ॥ ८०

---

1. घ—किं ततोऽस्त्यधिकं सुखम् ।
2. क-ख-ग—त्वं मज्ञातं स्वयमात्मजम् ।
घ—त्वमज्ञातं स्वत्समात्मजम्
3. घ—तथासुखम्

पुत्रस्पर्शात्सुखतरस् स्पर्शो लोके न विद्यते ॥ ८०॥
स्पृशतु त्वा समालिङ्ग्य पुत्रोऽयं प्रियदर्शनः ॥ ८१
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रस्स्पर्शवतां वरः ॥ ८२
त्रिषु वर्षेषु पूर्णेषु प्रजातोऽयमरिन्दमः ।
[1]कुमारो राजशार्दूल तव शोकप्रणाशनः ॥ ८३
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ।
राजसूयादिकानन्यान् क्रतूनमिततेजसः ॥ ८४
इति गौरन्तरिक्षे मां सूतकेऽभ्यवदत्पुरा ॥ ८४॥
हन्त स्वमङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥ ८५॥
वेदेष्वपि वदन्तीमं मन्त्रवादं द्विजातयः ।
जातकर्मणि पुत्राणां तवापि विदितं ध्रुवम् ॥ ८६॥
अङ्गादङ्गात्संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदश्शतम् ॥ ८७॥
उपजिघ्रन्ति पितरो मन्त्रेणानेन मूर्धनि ॥ ८८
[2]पोषो हि त्वदधीनोऽसौ सन्तानमपि चाक्षयम् ।

---

1. क-ख-ग-घ—अद्यायं मन्नियोगात्तु तवाह्वानं प्रतीक्षते ।

[अधिकः पाठः]

2. क-ख-ग—पोषितं त्वदधीनं मे घ—पोषणं त्वदधीनं मे

तस्मात्त्वं जीव मे पुत्र सुखीव शरदां शतम् ॥ ८९
एको भूत्वा द्विधा भूत इति वादः प्रदृश्यते ।
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषोऽपरः ॥ ९०
सरसीवामलेऽऽत्मानं द्वितीयं पश्य ते सुतम् ।
सरसीवामले सोमं प्रेक्षात्मानं त्वमात्मना ॥ ९१
यथावाऽऽहवनीयोऽग्निर् गार्हपत्यात्प्रणीयते ।
एवं त्वत्तः प्रसूतोऽयं त्वमेकस्सन् द्विधाकृतः ॥ ९२
मृगापकृष्टेन हि वै मृगयां परिधावता ।
अहमासादिता राजन् कुमारी पितुराश्रमे ॥ ९३
उर्वशी पूर्वचित्तिश्च सजन्या या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥ ९४
तासां वै मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवस्संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥ ९५
श्रीमानृषिर्धर्मपरो वैश्वानर इवापरः ।
ब्रह्मयोनिः कुशो नाम विश्वामित्रपितामहः ॥ ९६
कुशस्य पुत्रो बलवान् कुशनाभश्च धार्मिकः ।
गाधिस्तस्य सुतो राजन् विश्वामित्रस्तु गाधिजः ॥ ९७
एवंविधः पिता राजन् [1]मेनका जननी वरा ।

---

1. क-ख-ग-घ—माता मे मेनकाप्सराः ।

सा मां हिमवतः पृष्ठे सुषुवे मेनकाऽप्सराः ॥ ९८
[1]परित्यज्य च मां याता परात्मजमिवासती ॥ ९८॥

पक्षिणः पुण्यवन्तस्ते सहिता धर्मतस्तदा ।
पक्षैस्तैरभिगुप्ता च तस्मादस्मि शकुन्तला ॥ ९९॥

ततोऽहमृषिणा दृष्टा काश्यपेन महात्मना ॥ १००

जलार्थमग्निहोत्रस्य गतं दृष्ट्वा तु पक्षिणः ।
न्यासभूतामिव मुनेः प्रददुर्मां दयावतः ॥ १०१

स माऽरणिमिवादाय स्वमाश्रममुपागमत् ॥ १०१॥

सा वै संभाविता राजन् अनुक्रोशान्महर्षिणा ।
तेनैव स्वसुतेवाहं राजन् वै [2]परमर्षिणा ॥ १०२॥

विश्वामित्रसुता चाहं वर्धिता मुनिना नृप ।
यौवने वर्तमानां च दृष्टवानासि मां नृप ॥ १०३॥

आश्रमे पर्णशालायां कुमारीं विजने वने ।
धात्रा प्रचोदितां शून्ये पित्रा विरहितां मिथः ॥ १०४॥

वाग्भिस्त्वं सूनृताभिर्माम् अपत्यार्थमचूचुदः ।
[3]अकार्षीस्त्वाश्रमे वासं धर्मकामार्थनिश्रितम् ॥ १०५॥

---

1. क-ख-ग—अवकीर्यंच मां याता जननी वासवं प्रति ।
2. क-ख-ग—वरवर्णिनी ।
3. घ—अवोचस्त्वाश्रमे वाचः धर्मकामार्थमिश्रिताः ।

गान्धर्वेण विवाहेन [1]विधिना पाणिमग्रहीः ॥ १०६

साऽहं कुलं च शीलं च सत्यवादित्वमात्मनः ।
स्वधर्मं च पुरस्कृत्य त्वामद्य शरणं गता ॥ १०७

तस्मान्नार्हसि संश्रुत्य तथेति वितथं वचः ॥ १०७॥

स्वधर्मं पृष्ठतः कृत्वा परित्यक्तुमुपस्थिताम् ।
[2]त्वन्नाथां लोकनाथस्त्वं नार्हसि त्वमनागसम् ॥ १०८॥

किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जातिषु ।
यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति यत्त्वया ॥ १०९॥

कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम् ।
इमं बालं तु संत्यक्तुं नार्हस्यात्मानमात्मना ॥ ११०॥

दुष्यन्तः—

न पुत्रमभिजानामि त्वयि जातं शकुन्तले ।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥ १११॥

अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि! गम्यताम् ॥ ११२॥

क्व महर्षिस्स चैवोग्रः क्वाप्सरास्सा च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेषधारिणी ॥ ११३॥

---

1. अ—फलवन्त्यो वचोऽब्रवीः ।
2. क-ख-ग—त्वन्नाथो लोकनाथस्त्वं नार्हसे त्वमनापदि ।
घ—मन्नाथां

अतिकायश्च पुत्रस्ते बालोऽतिबलवानयम् ।
कथमल्पेन कालेन सालस्कन्ध इवोद्गतः ॥ ११४॥
सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे ।
यदृच्छया कामरागाज् जाता मेनकया ह्यसि ॥ ११५॥
सर्वमेव परोक्षं मे यत्त्वं वदसि तापसि ।
सर्वा वामास्त्रियो लोके सर्वाः कामपरायणाः ॥ ११६॥
सर्वास्त्रियः परवशास् सर्वाः क्रोधसमाकुलाः ।
असत्योक्तास्त्रियस्सर्वा न कण्वं वक्तुमर्हसि ॥ ११७॥
मेनका निरनुक्रोशा वर्धकी जननी तव ।
यया हिमवतः पादे निर्माल्यवदुपेक्षिता ॥ ११८॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्रह्मखेलो लुब्धः कामपरायणः ॥ ११९॥
मेनकाऽप्सरसां श्रेष्ठा महर्षिश्चापि ते पिता ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीवाभिधास्यसि ॥ १२०॥
जातिश्चापि निकृष्टा ते कुलीनेति विकत्थसे ।
जनयित्वा त्वमुत्सृष्टा कोकिलेव परैर्भृता ॥ १२१॥
अरिष्टैरिव दुर्बुद्धिः कण्वो वर्धयिता पिता ।
अश्रद्धेयमिदं वाक्यं यत्त्वं जल्पसि तापसि ॥ १२२॥
ब्रुवन्ती राजसान्निध्ये गम्यतां यत्र वेच्छसि ॥ १२३

सुवर्णमणिमुक्तानि सर्वाण्याभरणानि च ।
यद्यदिच्छसि भोगार्थं तापसि! प्रतिगृह्यताम् ॥ १२४

नाहं त्वां द्रष्टुमिच्छामि यथेष्टं गम्यतामितः ॥ १२४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

॥ ७ ॥ संभवपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[अस्मिन्नध्याये १२४॥ श्लोकाः]

---

## ॥ सप्ताशीतितमोऽध्यायः ॥

दुष्यन्तशकुन्तलाविवादः ॥ १ ॥

---

शकुन्तला—

राजन्सर्षपमात्राणि [1]मन्यघानि प्रपश्यसि ।
आत्मनो [2]मेरुमात्राणि पश्यन्नपि न पश्यसि ॥ १

मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुष्यन्त तव जन्मतः ॥ २

क्षितौ चरसि राजंस्त्वम् अन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥ ३

महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।

1. क-ख-ग-घ—परच्छिद्राणि 2. क-ख-ग-घ—हस्ति

भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥ ४

पुरा नरवरः पुत्र उर्वश्यां जनितस्तदा ।
आयुर्नाम महाराज तव पूर्वपितामहः ॥ ५

महर्षयश्च बहवः क्षत्रियाश्च परन्तप ।
अप्सरस्सु मृगीणां च मातृदोषो न विद्यते ॥ ६

विरूपो यावदादर्शे नात्मनो वीक्षते मुखम् ।
मन्यते तावदात्मानम् अन्येभ्यो रूपवत्तरम् ॥ ७

यदा तु मुखमादर्शे विरूपं सोऽभिवीक्षते ।
तदा ह्रीमांस्तु जानीयाद् आत्मानं नेतरं जनम् ॥ ८

अतीव रूपसंपन्नो न किं चिदवमन्यते ।
अतीव जल्पन् दुर्वाचो भवतीह विभेदकः ॥ ९

[1]सम्यग्वा विप्रवादोऽयं संप्रवक्ष्यामि तेऽनघ ।
निदर्शनार्थं न द्वेषात् तच्छ्रुत्वा क्षन्तुमर्हसि ॥ १०

पांसुपातेन हृष्यन्ति कुञ्जरा मदशालिनः ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्जनः ॥ ११

सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
नास्तिकोऽप्युद्विजत्येव जनः किं पुनरास्तिकः ॥ १२

---

1. क-ख-ग—सत्यं च
घ—साधु लोकप्रवादोऽयं तव वक्ष्यामि चानघ ।

स्वयमुत्पाद्य पुत्रं वै सदृशं योऽवमन्यते ।
तस्य देवाश्श्रियं घ्नन्ति तत्रैनं कलिराविशेत् ॥ १३
अभक्ष्ये ह्यनृतेऽशुद्धे नास्तिके पापकर्मणि ।
दुराचारे कलिर्ह्याशु न कलिर्धर्मचारिषु ॥ १४
मूर्खोऽपि जल्पतां पुंसां श्रुत्वा तेषां शुभाशुभम् ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ १५
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचश्शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसि ॥ १६
आत्मनो दुष्टभावत्वं ज्ञानी नीचोऽप्रसन्नधीः ।
परेषामपि जानाति स्व[1]धर्मसदृशं गुणैः ॥ १७
दह्यमानास्तु तीव्रेण नीचाः परयशोऽग्निना ।
अशक्तास्तां गतिं गन्तुम् अतो निन्दां प्रकुर्वते ॥ १८
अन्यान् परिवदन् साधुर् यथा हि परितप्यते ।
तथा परिवदन्नन्यं हृष्टो भवति दुर्जनः ॥ १९
[2]अपास्य दूरतो मूर्खा भवन्ति स्म विशेषतः ।
नापवादरतास्सन्तो भवन्ति स्म विशेषतः ॥ २०
अभिवाद्य च वृद्धान्हि साधुर्गच्छति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ २१

1. क-ख-ग-घ—कर्मसदृशान्गुणान्
2. क-ख-ग—अपवादरता

सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
[1]ये तु वाच्याः परैस्सन्तः परानाहुस्तथाविधान् ॥ २२

अतो हास्यतरं लोके किंचिदन्यन्न विद्यते ॥ २२॥

यत्र दुर्जन इत्याह सज्जनं दुर्जनस्स्वयम् ।
दारुणाल्लोकसंक्लेशाद् दुःखमाप्नोत्यसंशयम् ॥ २३॥

कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ।
उत्तमं सर्वधर्माणां [2]मनसः प्रीतिवर्धनम् ॥ २४॥

स्वपत्नीप्रभवांल्लब्ध्वा क्रीतान् [3]सर्वैविवर्जितान् ।
कृतानन्यैरथोत्पन्नान् पुत्रान् वै मनुरब्रवीत् ॥ २५॥

तत्र षड्बन्धुदायादाः षडदायादबान्धवाः ।
धर्मकीर्तिवहा नृणां मनसः प्रीतिवर्धनाः ॥ २६॥

त्रायन्ति जनकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥ २७

स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि ।
तस्मात् पुत्रं च सत्यं च पालयस्व महीपते ॥ २८

उभयं पालय ह्येतन्नानृतं वक्तुमर्हसि ।
आत्मानं सत्यधर्मौ च पालयेथा महीपते ॥ २९

1. घ—स्वयं
2. क-ख-ग—तस्मात्पुत्रं न तु त्यजेत् । घ--पुत्रं तस्मान्न संत्यजेत्
3. क-ख-ग—समयवर्धितान्

नरेन्द्रसिंह कपटं न हि बोढुं त्वमर्हसि ॥ २९॥

वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरः क्रतुशतात्पुत्रस् सत्यं पुत्रशताद्वरम् ॥ ३०॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ३१॥

सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
[1]सत्यं च वदतो राजन् समं वा स्यान्न वा समम् ॥ ३२॥

नास्ति सत्यात् परो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं पापम् अनृतादिह विद्यते ॥ ३३॥

राजन् सत्यं परं ब्रह्म सत्यं च समयः परः ।
मा त्याक्षीस्समयं राजन् सत्यं सङ्गरमस्तु ते ॥ ३४॥

यः पापं न विजानाति कर्म कृत्वा नराधिप ।
न हि तादृक्परं पापम् अनृतादिह विद्यते ॥ ३५॥

यस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याणं साक्षिणं तस्मात् कर्तुमर्हसि धर्मतः ॥ ३६॥

यो न कामान्न च क्रोधान्न द्रोहादभिवर्तते ।
अमित्रं वापि मित्रं वा स वा उत्तमपूरुषः ॥ ३७॥

---

1. क-ख-ग—सत्यस्यैव च राजेन्द्र कलां नार्हति षोडशीम् ।
घ—सत्यं च वदतो राजन् समं वा स्याद्विशिष्यते ।

अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् ।
[1]आत्मना हतमिच्छामि तादृशे नास्ति सङ्गतं ॥ ३८॥

पुत्रत्वे शङ्कमानस्य बुद्धिर्ज्ञापकदीप्तना ॥ ३९

गतिस्स्वरस्स्मृतिस्सत्वं शीलविज्ञानविक्रमाः ।
धृष्णुःप्रकृतिभावौ च आवर्ता रोमराजयः ॥ ४०

समा यस्य यतस्स्युस्ते तस्य पुत्रो न संशयः ॥ ४०॥

सादृश्येनोद्धृतं बिम्बं तव देहाद्विशांपते ।
तातेति भाषमाणं वै मा स्म राजन् वृथा कृथाः ॥ ४१॥

ऋतेऽपि गर्दभीक्षीरात् पयः पास्यति मे सुतः ॥ ४२

ऋतेऽपि त्वां तु दुष्यन्त ! शैलराजावतंसिकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ ४३

शकुन्तले ! तव सुतश् चक्रवर्ती भविष्यति ।
एवमुक्तो महेन्द्रेण भविष्यति न चान्यथा ॥ ४४

साक्षित्वे बहवोऽप्युक्ता देवदूतादयो मताः ।
न ब्रुवन्ति यथा सत्यम् उताहोऽप्यनृतं किल ॥ ४५

[2]असाक्षिणी मन्दभाग्या गमिष्यामि यथागतम् ॥ ४५॥

---

1. क-ख-ग—आश्रमं गन्तुमिच्छामि त्वादृशे
घ—आत्मनो हन्तुमिच्छामि त्वादृशे नास्ति संगमः ।
2. क-ख-ग—असाक्षी मन्दभाग्याहं

वैशंपायनः—

एतावदुक्त्वा वचनं प्रातिष्ठत शकुन्तला ।
तस्याः क्रोधसमुत्थोऽग्निस् सधूमो मूर्ध्न्यदृश्यत ॥ ४६॥

संनियम्यात्मनोऽङ्गेषु ततः क्रोधाग्निमात्मजम् ।
प्रस्थितैवानवद्याङ्गी सह पुत्रेण वै वनम् ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ७ ॥ संभवपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये ४७॥ श्लोकाः]

## ॥ अष्टाशीतितमोऽध्यायः ॥

आकाशवाणीश्रवणानन्तरं सपुत्रायाः शकुन्तलाया राज्ञाऽङ्गीकारः ॥ १ ॥ भरतेतिनामकरणपूर्वकं पुत्रस्य राज्येऽभिषेकः ॥ २ ॥ भरतचरित्रकथनम् ॥ ३ ॥ तद्वंशकथनं च ॥ ४ ॥

वैशम्पायनः—

अथान्तरिक्षे दुष्यन्तं वागुवाचाशरीरिणी ।
ऋत्विक्पुरोहिताचार्यैर् मन्त्रिभिश्चाभिसंवृतम् ॥ १

माता भस्त्रा पितुः पुत्रो यस्माज्जातस्स एव सः ।
भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला ॥ २

सर्वेभ्यो ह्यङ्गमङ्गेभ्यस् साक्षादुत्पद्यते सुतः ।
आत्मा चैष सुतो नाम तथैष तव पौरव ॥ ३

आहितं ह्यात्मनाऽऽत्मानं परिरक्ष इमं सुतम् ।
अनन्यां त्वां प्रतीक्षस्व मावमंस्थाश्शकुन्तलाम् ॥ ४

स्त्रियः पवित्रमतुलम् एतद्दुष्यन्त धर्मतः ।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ५

ततस्सर्वाणि भूतानि व्याजहुस्तं समन्ततः ॥ ५॥

देवाः—

आहितस्त्वत्तनोरेष मावमंस्थाश्शकुन्तलाम् ॥ ६

रेतोधाः पुत्र उन्नयति नरदेव यमक्षयम् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ७

पतिर्जायां प्रविशति स तस्यां जायते [1]पुनः ।
अन्योन्यस्य प्रकृत्यैष मावमंस्थाश्शकुन्तलाम् ॥ ८

जाया जनयते पुत्रम् आत्मनोऽङ्गाद्द्विधा कृतम् ।
तस्माद्भरस्व दुष्यन्त ! पुत्रं शाकुन्तलं नृप ॥ ९

[2]सुभूतिरेषा न त्याज्या जीवं जीवन्तमात्मजम् ।
शाकुन्तलं महात्मानं दुष्यन्त ! भर पौरवम् ॥ १०

भर्तव्योऽयं त्वया यस्माद् अस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ॥ ११

---

1. अ-घ—सुतः ।
2. अ—आहुतिरेषां सन्त्यज्य

भरताद्भारती कीर्तिर् येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे च भारता इति तेऽभवन् ॥ १२

वैशम्पायनः—

एवमुक्त्वा ततो देवा ऋषयश्च तपोधनाः ।
पतिव्रतेति संहृष्टाः पुष्पवृष्टिं ववर्षिरे ॥ १३

तच्छ्रुत्वा पौरवो वाक्यं व्याहृतं वै दिवौकसाम् ।
सिंहासनात् समुत्थाय प्रणम्य च दिवौकसः ॥ १४

पुरोहितममात्यांश्च [1]प्रहृष्टव्यानब्रवीदिदम् ॥ १४॥

दुष्यन्तः—

शृण्वन्त्वेतद्भवन्तोऽद्य देवदूतस्य भाषितम् ।
शृण्वन्तु देवतानां च महर्षीणां च भाषितम् ॥ १५॥

अहमप्येवमेवैनं जानामि सुतमात्मजम् ॥ १६

यद्येवं वचना[2]देव गृह्णीयामिममात्मजम् ।
भवेद्धि शङ्का लोकस्य नैवं शुद्धो भवेदयम् ॥ १७

वैशम्पायनः—

तं विशोध्य तदा राजा दैवतैस्समहर्षिभिः ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ १८

मूर्ध्नि चैनं समाघ्राय सस्नेहं परिषस्वजे ॥ १८॥

---

1. क-ख-ग-घ—संप्रहृष्टो 2. क-ख-ग—दस्याः घ—घस्याः

सभाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ।
मुदं स परमां लेभे पुत्रस्पर्शनजां नृपः ॥ १९॥

तां चैव भार्यां धर्मज्ञः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥ २०॥

दुष्यन्तः—

लोकस्यायं परोक्षस्तु संबन्धो नौ पुराऽभवत् ।
कृतो लोकसमक्षोऽद्य संबन्धो वै पुरा कृतः ॥ २१॥

तस्मादेतन्मया त्वद्य तन्निमित्तं प्रभाषितम् ॥ २२

शङ्केत [1]वा व लोकोऽथ त्वया भावेऽधिसङ्गतम् ।
तस्मादेतन्मया देवि तच्छुद्ध्यर्थं विचारितम् ॥ २३

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चैव पृथग्विधाः ।
त्वां देवि ! पूजयिष्यन्ति निर्विशङ्कं पतिव्रताम् ॥ २४

पुत्रश्चायं वृतो राज्ये त्वमग्रमहिषी मम ॥ २४॥

यच्च कोपितयाऽत्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत्क्षन्तव्यं मया शुभे ! ॥ २५॥

अनृतं वाप्यनिष्टं वा दुरुक्तं वापि दुष्कृतम् ।
त्वयाप्येवं विशालाक्षि क्षन्तव्यं मम दुर्वचः ॥ २६॥

---

1. क-ख-ग-घ—वाऽयं लोकोऽथ स्त्रीभावान्मयि सङ्गतम् ।

[1]क्षान्त्या पतिकृते नार्यः पातिव्रत्यं व्रजन्ति ताः ॥ २७

वैशम्पायनः—

तामेवमुक्त्वा राजर्षिस् तामनिन्दितगामिनीम् ।
अन्तःपुरं प्रवेश्यैव दुष्यन्तो महिषीं प्रियाम् ॥ २८

वासोभिरन्नपानैश्च पूजयित्वा तु भारत ।
स मातरमुपस्थाय रथन्तर्यामभाषत ॥ २९

मम पुत्रो वने जातस् तव शोकप्रणाशनः ।
ऋणादद्य विमुक्तोऽहम् अस्मि पौत्रेण ते शुभे ॥ ३०

विश्वामित्रसुता चेयं कण्वेन च विवर्धिता ।
स्नुषा तव महाभागे प्रसीदस्व शकुन्तलाम् ॥ ३१

पुत्रस्य वचनं श्रुत्वा पौत्रं सा परिषस्वजे ॥ ३१॥

पादयोः पतितां तत्र रथन्तर्या शकुन्तलाम् ।
परिष्वज्य च बाहुभ्यां हर्षादश्रूण्यवर्तयत् ॥ ३२॥

उवाच वचनं सत्यं लक्षयंल्लक्षणानि च ॥ ३३

तव पुत्रो विशालाक्षि ! चक्रवर्ती भविष्यति ।
तव भर्ता विशालाक्षि ! त्रैलोक्यविजयी भवेत् ॥ ३४

दिव्यान् भोगाननुप्राप्ता भव त्वं वरवर्णिनि ! ॥ ३४॥

---

1. क-ख-ग—क्षम्याः पतिकृतं नार्यः घ—गम्याः पतिकृते नार्यः

एवमुक्ता रथन्तर्या परं हर्षमवाप सा ॥ ३५
शकुन्तलां तदा राजा शास्त्रोक्तेनैव कर्मणा ।
ततोऽग्रमहिषीं कृत्वा सर्वाभरणभूषिताम् ॥ ३६
ब्राह्मणेभ्यो धनं दत्त्वा सैनिकानां च भूपतिः ।
दौष्यन्तिं च ततो राजा पुत्रं शाकुन्तलं तदा ॥ ३७
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥ ३७॥
भरते भारमावेश्य कृतकृत्योऽभवन्नृपः ॥ ३८
ततो वर्षशतं पूर्णं राज्यं कृत्वा नराधिपः ।
[1]कृत्वा दानानि दुष्यन्तस् स्वर्गलोकमुपेयिवान् ॥ ३९

वैशंपायनः—

[2]दुष्यन्त उपरते राज्यं यथान्यायमवाप सः ।
तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः ॥ ४०
भास्वरं दिव्यमजितं लोकसंनादनं महत् ॥ ४०॥
स विजित्य महीपालांश् चकार वशवर्तिनः ॥ ४१
स चचार सतां धर्मं प्राप्य चानुत्तमं यशः ।
स राजा चक्रवर्त्यासीत् सार्वभौमः प्रतापवान् ॥ ४२
ईजे च बहुभिर्यज्ञैर् यथा शक्रो मरुत्पतिः ।
याजयामास तं कण्वो दक्षवद्भूरिदक्षिणम् ॥ ४३

---

1. क-ख-ग—गत्वावनानि घ—दत्त्वा धनानि
2. क-ख-ग—दुष्यन्ताद्भरतो घ—दौष्यन्तिः परमो

श्रीमद्गोविततं नाम वाजिमेधमवाप सः ।
यस्मात् सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ ४४

सोऽश्वमेधशतैरीजे यमुनामनु तीरगः ।
[1]त्रिंशता च सरस्वत्या गङ्गामनु शरच्छतैः ॥ ४५

दौष्यन्तिर्भरतो [2]जज्ञे विद्वाञ्शाकुन्तलो नृपः ।
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ ४६

भरतस्य वरस्त्रीषु पुत्रास्संजज्ञिरे पृथक् ।
नाभ्यनन्दत्तदा राजा नानुरूपा ममेति तान् ॥ ४७

ततो महद्भिः क्रतुभिर् ईजानो भरतस्तदा ।
लेभे पुत्रं भरद्वाजाद् भुमन्युं नाम भारत ॥ ४८

धर्मे प्रणिहितात्मानं मत्वा [3]तं पुरुषोत्तमम् ।
ततः पुत्रिणमात्मानं मत्वा स कुरुपुङ्गव ! ॥ ४९
भुमन्युं भरतः प्रीतो यौवराज्येऽभ्यषेचयत् ॥ ४९॥

ततस्तस्य महीन्द्रस्य वितथं [4]पुत्रतोऽभवत् ।
ततस्स वितथो नाम भुमन्योरभवत्तदा ॥ ५०॥

---

1. क-ख-ग—त्रिशतैश्च सरस्वत्या गङ्गामनु चतुश्शतैः ।
घ—त्रिंशता च सरस्वत्या गङ्गामनु चतुश्शतैः
2. क-ग—यज्ञैरीजे ॥ ख-घ—यज्ञैर्विद्वान्
3. अ—तुम्बुरुणोत्तमम्
4. क-ख-ग—थः पुत्रको घ—वितथे पुत्रजन्मनि ।

सुहोत्रसुतहोतारौ तथा [1]गर्हतरावुभौ ॥ ५१

पुष्करिण्यामुचक्थ्यं वै भुमन्योरभवन्सुताः ।
चत्वारो भारते वंशे सुहोत्रस्तस्य वंशभाक् ॥ ५२

तेषां ज्येष्ठस्सुहोत्रस्तु राज्यं प्राप्य महीक्षिताम् ।
राजसूयाश्वमेधाद्यैर् ईजे च बहुभिर्मखैः ॥ ५३

सुहोत्रः पृथिवीं चेमां बुभुजे सागराम्बराम् । ५३॥

सुहोत्रे तु महीपाले महीं धर्मेण शासति ।
चैत्ययूपाङ्किता भूमिर् बभूवाथ सहस्रशः ॥ ५४॥

पूर्णा हस्तिगवां चैव बभौ रत्नसमाकुला ॥ ५५

सा ममज्जेव पृथिवी भूरिभारावपीडिता ।
हस्त्यश्वरथसम्पूर्णा मनुष्यकलिला भृशम् ॥ ५६

समृद्धसस्यसम्पन्ना सहदेवा व्यरोचत ॥ ५६॥

ऐक्ष्वाक्यां जनयामास सुहोत्रस्त्रीन् सुतान् नृप ।
अजमीढं सदामीढं पुरुमीढं च भारत ॥ ५७॥

[2]अजमीढो वरस्तेषां तस्मिन् वंशः प्रतिष्ठितः ॥ ५८

---

1. क-ख-ग—गर्गनरावुभौ घ—गर्गतरावुभौ
2. क-ख-ग—अजमीढस्तु राजेन्द्र धर्मनित्यो यशस्सु च ।
[अधिकः पाठः]

[1]षट् पुत्रान् सोऽप्यजनयत् तिसृषु स्त्रीषु भारत ॥ ५८॥

ऋक्षं धूमिन्यथो नीली दुष्यन्तपरमेष्ठिनौ ।
केशिन्यजनयज्जह्नुम् उभौ च जनरूपिणौ ॥ ५९॥

विदुस्संवरणं शूरम् ऋक्षाद्राथन्तरीसुतम् ।
तथेमे सर्वपाञ्चाला दुष्यन्तपरमेष्ठिनोः ॥ ६०॥

अन्वयाः [2]कुशिका राजन् जन्होरमिततेजसः ॥ ६१

जनरूपणयोर्ज्येष्ठम् ऋक्षमाहुर्जनाधिपम् ।
ऋक्षात्संवरणो जज्ञे राजन् वंशकरस्तव ॥ ६२

आर्क्षे संवरणे राज्यं प्रशासति महात्मनि ।
संक्षयस्सुमहानासीत् प्रजानामिति शुश्रुमः ॥ ६३

व्यशीर्यत ततो राष्ट्रं दुर्भिक्षैरावृतं तथा ।
क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च महाबलैः ॥ ६४

[3]अभ्यापतन् भारतांश्चैव सपत्नानां बलानि च ।
चालयन्तो धृतिं भीमां जनयन्तो भृशं भयम् ॥ ६५

---

1. क-ख-ग—ऐक्ष्वाक्यां जनयद्राज्ञ्याम् अजमीढो यशस्विनः ।
[अधिकः पाठः]

2. क-ख-ग-घ—कौशिकास्सर्वे जह्नोरपि महात्मनः ।

3. क-ख-ग—अन्वकीर्यन्त भरतास्सपत्नैश्च महाबलैः ।
[अधिकः पाठः]

अभ्ययुस्तं च पाञ्चाला विवृण्वन्तो बलैर्महीम् ।
अक्षौहिणीभिर्दशभिस् तदा तं तरसाऽजयन् ॥ ६६

ततस्सदारस्सामात्यस् सपुत्रस्ससुहृज्जनः ।
राजा संवरणस्तस्मात् पलायत महाभयात् ॥ ६७

ते प्रतीचीं पराजित्य [1]प्रसन्ना भारता दिशम् ।
सिन्धोर्नदस्य महतो गुहायां [2]न्यवसंस्तदा ॥ ६८

शिवे विषमपर्यन्ते पर्वतस्य समीपतः ।
तत्रावसन् प्रतिच्छन्ना भारताश्च भयाच्चिरम् ॥ ६९

तेषां निवसतां तत्र सहस्रं परिवत्सरान् ।
आगच्छद्भगवांस्तत्र वसिष्ठो भरतान्प्रति ॥ ७०

तमागतं प्रयत्नेन अभ्युत्थायाभिवाद्य च ।
अर्घ्यमस्यानयन् प्रीता अजमीढपुरोगमाः ॥ ७१

निवेद्य सर्वमृषये सत्कृत्यैनमुपासत ॥ ७१॥

ततस्संवरणश्श्रेष्ठं राजा वव्रे स्वयं तदा ।
पुरोहितो भवान्नोऽस्तु राज्याय प्रयतेमहि ॥ ७२॥

एवमस्त्विति तं विप्रो भारतं प्रत्यभाषत ।
तमभ्यषिञ्चत्साम्राज्ये सर्वक्षत्रस्य पौरवम् ॥ ७३॥

---

1. ग—पलायनपरोऽभवत्
2. क-ख-ग-घ—न्यविशंस्तदा ।

विषाणभूतं सर्वस्यां पृथिव्यामिति नः श्रुतम् ।
[1]स पुरं भारतस्सर्षिर् अध्यतिष्ठत् पुरातनम् ॥ ७४॥
पुनश्चक्रे बली[2]भूतं पृथिव्यां सर्वपार्थिवान् ।
आजमीढो महायज्ञैर् बहुभिर्भूरिदक्षिणैः ॥ ७५॥
भारतः पृथिवीं प्राप्य पुनरीजे महाबलः ॥ ७६
ततस्संवरणात् सौरी तपती सुषुवे कुरुम् ॥ ७६॥
राजत्वे तं प्रजास्सर्वा धर्मज्ञ इति वव्रिरे ।
महिम्ना तस्य कुरवो लेभिरे प्रत्ययं भृशम् ॥ ७७॥
तस्य नाम्ना च विख्यातम् अभूत्तत् कुरुजाङ्गलं ॥ ७८
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः ॥ ७८॥
अश्ववन्त[3]मभीवन्तं तथा चैत्ररथं मुनिम् ।
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुम ॥ ७९॥
पञ्चैतांश्च महीपुत्रान् व्यजायत मनस्विनी ॥ ८०
अविक्षितः परीक्षित्तु शबलाश्वश्च वीर्यवान् ।
अभिराजो विराजश्च बलाशश्च महाबलः ॥ ८१
चित्रश्रवा धर्मकरो दित्वाष्टिश्चाष्टम स्स्मृतः ॥ ८१॥
[4]न तेषामन्वयः ख्यातस् सर्वेषां नामतो गुणैः ॥ ८२

---

1. घ—स्वपुरं भारतैर्जुष्टं 2. घ—भूतः
3. क-ख-ग—मनश्वन्तमश्वं चित्र
घ—मभिश्वन्तं दात्तं चित्ररथं मुनिम्
4. क-ख-ग—शबलाश्वादयस्सप्त तथैवान्ये महाबलाः ।[अधिकः पाठः]

जनमेजयादयस्सप्त तथैवान्ये महारथाः ।
परीक्षितोऽभवन्पुत्रास् [1]सप्त धर्मार्थकोविदाः ॥ ८३

[2]कक्षसेनोग्रसेनौ तु चित्रसेनस्तथा [3]शिशुः ।
इन्द्रसेनस्सुषेणश्च भीमसेनश्च नामतः ॥ ८४

जनमेजयस्य तनयास् तथा चाष्टौ महाबलाः ॥ ८४॥

धृतराष्ट्रश्च धर्मात्मा तथोभौ पाण्डुबाह्लिकौ ।
निषधश्च महातेजास् तथा जाम्बूनदो बली ॥ ८५॥

[4]कुण्डोदरः पदातिश्च वसातिश्चाष्टमस्स्मृतः ।
सर्वे धर्मार्थकुशलास् सर्वभूतहिते रताः ॥ ८६॥

धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ शुण्डिकः ।
हस्ती विकत्थनः क्रोधः कुण्डलश्चापि पञ्चमः ॥ ८७॥

पर्यश्रवसमिन्द्राभं शराभं वाजिनां युधि ।
अधिराजात्मजानाहुस् तथा शक्रपुरञ्जयौ ॥ ८८॥

ततो धर्मभृतां श्रेष्ठः पर्यश्रवस उच्यते ।
ऋषिं पुण्यकृतां श्रेष्ठं तमेव परमं विदुः ॥ ८९॥

भीमसेनान्महेष्वासः प्रतीपस्समपद्यत ॥ ९०

---

1. क-ख-ग—सर्वे 2. क-ख-ग-घ—कण्व 3. क-ख-ग—शुचिः
4. क-ख-ग—वनोदकोपदानौ च वसतिश्चा

प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ ॥ ९०॥
देवापिश्शन्तनुश्चैव बाह्लीकश्च महायशाः ॥ ९१
देवापिस्तु प्रवव्राज तेषां धर्महितेप्सया ।
शन्तनुश्च महीं लेभे बाह्लीकश्च महारथः ॥ ९२
भरतस्या[1]न्वये राजन् सत्त्ववन्तो महारथाः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥ ९३
एवंविधा[2]श्चाप्यपरे देवकल्पा महारथाः ।
अन्ववाये महाराज ऐलवंशविवर्धनाः ॥ ९४
गङ्गातीरं समागम्य दीक्षितो जनमेजय ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ९५
पुनरीजे महायज्ञैस् समाप्तवरदक्षिणैः ।
अग्निष्टोमातिरात्राणाम् उक्थानां सोमवत्पुनः ॥ ९६
वाजपेयेष्टिसत्राणां सहस्रैश्च सुसंभृतैः ।
इष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान् धनैः ॥ ९७
पुनस्सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ ९७॥
जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः ।
यस्य यूपाश्शतव्यामाः परिणाहेऽथ काञ्चनाः ॥ ९८॥
सहस्रव्याममुद्विद्धास् सेन्द्रैर्देवैस्समुच्छ्रिताः ॥ ९९

---

1. क-ख-ग—न्वयास्त्वेते देवकल्पा घ—न्वये जाताः सत्त्ववन्तो
2. क-ख-ग—महाभागा देवरूपाः प्रहारिणः ।

स्वलङ्कृता भ्राजमानास् सर्वरत्नैर्मनोरमैः ॥ ९९॥
हिरण्यं द्विरदानश्वान् महिषोष्ट्रगजाविकम् ।
दासीदासं धनं धान्यं [1]सवत्सां गां पयस्विनीम् ॥ १००॥
भूमिं यूपसहस्राङ्कां कण्वाय बहुदक्षिणाम् ।
बहूनां ब्रह्मकल्पानां [2]दक्षिणाममितां ददौ ॥ १०१॥
ग्रामान् गृहाणि [3]क्षेत्राणि कोटिशश्शतशस्तथा ॥ १०२
[4]यस्मात्तु भारती कीर्तिर् येनेदं भारतं कुलम् ।
भरतस्यान्वये जाता देवकल्पा महारथाः ॥ १०३
बहवो ब्रह्मकल्पाश्च बहवो राजसत्तमाः ।
तेषामपरिमेयानि नामधेयानि सर्वशः ॥ १०४
तेषां कुले यथा मुख्यान् कीर्तयिष्यामि भारत ।
महाभागान् देवकल्पान् सत्यार्जवपरायणान् ॥ १०५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ७ ॥ संभवपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ शकुन्तलोपाख्यानं समाप्तम् ॥
[अस्मिन्नध्याये १०५ श्लोकाः ।]

---

1. क-ख-ग—गास्सुशीलास्सवत्सकाः ।
2. क-ख-ग—धनं दत्वा क्रतून्बहून् ।
3. क-ख-ग—शुभ्राणि कोटिशोऽददात्तदा ।
4. क-ख-ग-घ—भरताद्

## ॥ एकोननवतितमोऽध्यायः ॥

महाभिषगुपाख्यानम् ॥ १ ॥ महाभिषग्गङ्गयोः शापः ॥ २ ॥ अष्टवसूनां गङ्गायाश्च संवादः ॥ ३ ॥

वैशंपायनः—

इक्ष्वाकूणामन्यतमो राजाऽऽसीत् पृथिवीपतिः ।
महाभिषगिति ख्यातस् सत्यवाक् सत्यविक्रमः ॥ १

सोऽश्वमेधसहस्रेण शतसङ्ख्येन भारत ।
तोषयामास देवेशं स्वर्गं लेभे च सत्प्रभुः ॥ २

[1]ततः कदाचिद्ब्रह्माणम् उपासांचक्रिरे सुराः ।
तत्र राजर्षयो ह्यासन् स च राजा महाभिषक् ॥ ३

अथ गङ्गा सरिच्छ्रेष्ठा समुपायात् पितामहम् ।
तस्या वासस्समुद्धूतं मारुतेन शशिप्रभम् ॥ ४

ततोऽभवन् सुरगणास् सहसाऽवाङ्मुखास्तदा ।
महाभिषक् तु राजर्षिस्[2] तदैको दृष्टवान्नदीम् ॥ ५

सोऽपध्यातो भगवता ब्रह्मणा स महाभिषक् ।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ ६

---

1. क-ख-ग—यौवनं चानुसंप्राप्तं कुमारं वदतां वरम् ।
संस्मरंश्चाक्षयांल्लोकान् विदितांश्च स्वकर्मणा ॥
[अधिकः पाठः]

2. क-ख-ग-घ—रशङ्को

मनुष्येषु चिरं स्थित्वा लोकान् प्राप्स्यसि शोभनान् ॥ ६॥
यया हृतमनाश्चापि गङ्गया त्वं सुदुर्मते ।
सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति ॥ ७॥
यदा ते भविता मन्युस् तदा शापाद्विमोक्ष्यते ॥ ८
स चिन्तयित्वा नृपतिर् नृपान् सर्वांस्तपोधनान् ।
प्रतीपं रोचयामास पितरं भूरिवर्चसम् ॥ ९
सा महाभिषजं दृष्ट्वा नदी धैर्याच्च्युतं नृपम् ।
तमेव मनसा [1]ध्यायन्त्युपावृत्ता सरिद्वरा ॥ १०
सा तु विध्वस्तसङ्काशान् कश्मलाभिहतान् दिवि ।
ददर्श पथि गच्छन्ती वसून् देवान् दिवौकसः ॥ ११
तथारूपांश्च तान् दृष्ट्वा पप्रच्छ सरितां वरा ॥ ११॥

गङ्गा—

किमिदं नष्टरूपास्स्थ कच्चित् क्षेमं दिवौकसाम् ।
[2]किमर्थं मनुजा भूमौ निपतिष्यन्ति दुःखिताः ॥ १२॥

वैशम्पायनः—

तामूचुर्वसवो दीनाश् शप्ता वै सुमहानदि ।
अस्वयंकृतया बुद्ध्या वसिष्ठेन महात्मना ॥ १३॥

---

1. ख-ग-घ—ध्यात्वा उपा
2. क-ग—मुखानि न प्रसन्नानि विवर्णानि कृतानि किम् ।
[अधिकः पाठः]

वयं हि सहसा सर्वे प्रच्छन्नमृषिसत्तमम् ।
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ॥ १४॥
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ॥ १५
न तच्छक्यमकर्तुं च यदुक्तं ब्रह्मवादिना ।
त्वमस्मान् मानुषी भूत्वा सूष्व पुत्रान् वसून् भुवि ॥ १६
न मानुषीणां जठरं प्रविशेम कथञ्चन ।
प्रत्युवाच वसून् गङ्गा तथाऽस्तु समयादिति ॥ १७

गङ्गा—

मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति ॥ १७॥

वसवः—

प्रतीपस्य सुतो विद्वान् शन्तनुर्नाम धार्मिकः ।
त्वत्कृते मानुषे लोके स नः कर्ता भविष्यति ॥ १८॥

गङ्गा—

ममाप्येवं मनो जातं यथा मां वदथानघाः ।
प्रियं तस्य करिष्यामि वचनं च दिवौकसाम् ॥ १९॥

वसवः—

जातान् कुमारान् स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि ।
यथा न चिरकालं नो निष्कृतिस्स्यात् त्रिलोकगे २०॥

गङ्गा—

एवमेव करिष्यामि पुत्रस्तस्य विधीयताम् ॥

नास्य मोघं भवेत् कर्म पुत्रहेतोः कृतं मया ॥ २१॥

वसवः—

तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम् ।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥ २२॥

न संपत्स्यति मर्त्येषु पुनस्तस्य च सन्ततिः ।
अपुत्रस्तु नरव्याघ्रो भविष्यति सुतस्तव ॥ २३॥

वैशंपायनः—

एवं च समयं कृत्वा गङ्गया वसवश्च ते ।
जग्मुः प्रहृष्टमनसो यथासंकल्पमञ्जसा ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

॥ ७ ॥ संभवपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ नवतितमोऽध्यायः ॥

प्रतीपेन गङ्गायाः स्नुषात्वेन परिग्रहः ॥ १ ॥ शन्तनूत्पत्तिः ॥ २ ॥
तस्य राज्येऽभिषेकः ॥ ३ ॥ मृगयार्थं गतस्य शन्तनोर्गङ्गया संवादः ॥

---

वैशंपायनः—

ततः प्रतीपो राजाऽऽसीत् सर्वभूतहिते रतः ।
निषसाद महाबाहुर् गङ्गातीरे जितेन्द्रियः ॥ १

तस्य रूपगुणोपेता लोभनीयतमाकृतिः ।
उत्तीर्य गङ्गा सलिलाद् उद्देशं स्त्री समभ्यगात् ॥ २

अधीयानस्य राजर्षेस् तस्य सा देववर्णिनी ।
दक्षिणं सालसङ्काशम् ऊरुं भेजे शुभानना ॥ ३

प्रतीपस्तु महीपालस् तामुवाच यशस्विनीम् ।
वाक्यं वाक्यविदां श्रेष्ठो धर्मनिश्चयतत्त्ववित् ॥ ४

प्रतीपः—

करवाणि किं ते कल्याणि ! यदर्थं मां त्वमभ्यगाः ॥ ४॥

गङ्गा—

कामये त्वां नरव्याघ्र स कौरव्य भजस्व माम् ।
त्यागः कामयमानानां स्त्रीणां सद्भिर्विगर्हितः ॥ ५॥

प्रतीपः—

नाहं कामात् स्त्रियं भद्रे गच्छेयं वरवर्णिनि ! ।
न चासवर्णां कल्याणि ! धर्म्यमेतद्धि मे व्रतम् ॥ ६॥

गङ्गा—

नाश्रेयस्यस्मि नागम्या नानपत्या कथञ्चन ।
मां वै भजस्व नृपते देहि कामं [1]वरस्त्रियाः ॥ ७॥

प्रतीपः—

समयातीतमेतद्वै यन्मां चोदयसि प्रियम् ।
अन्यथा प्रतिपन्नं मां क्षिणुयाद्धर्मविप्लवः ॥ ८॥

1. घ—वरस्त्रियम् ।

प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने ।
अपत्यानां स्नुषाणां च आसनं विद्धि तच्छुभे ॥ ९॥
सव्योरुः कामिनीभोग्यस् त्वया स च विवर्जितः ।
तस्मादहं नाचरामि त्वयि कामं प्रियंवरम् ॥ १०॥
स्नुषा मे भव कल्याणि! पुत्रार्थे त्वां वृणोम्यहम् ।
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ॥ ११॥

गङ्गा—
एवमप्यस्तु धर्मज्ञ संयोगस्स्यात् सुतेन ते ।
त्वद्भक्त्या तु भजिष्यामि प्रख्यातं भारतं कुलम् ॥ १२॥
पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम् ।
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि ॥ १३॥
कुलस्य [1]यो वः प्रणेता तस्याहं च नरोत्तम ॥ १४
यश्च मेऽभिजनं जातिम् आचारं चापि तद्विभो ।
[2]तत्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् ॥ १५
एवं वसन्ती राजेन्द्र! वर्धयिष्यामि ते प्रियम् ।
पुत्रैः पुण्यैः परं चापि स्वर्गं प्राप्स्यति ते सुतः ॥ १६

1. क-ख-ग—यो वः प्रणेता पतिस्स्यान्मे
घ—यो वः प्रणेता वंशस्य तव पुत्रो नृपोत्तम ।
2. क-ग—न च मीमांस्यते पुत्रः सर्वमेव परंतप ।
ख—न मीमांस्यति ते पुत्रः सर्वमेव परंतप ।
घ—न मीमांस्येत ते पुत्रः सर्वमेव परंतप ।

वैशम्पायनः—

तथेत्युक्त्वा तु सा राजंस् तत्रैवान्तरधीयत ।

अदृश्या राजसिंहस्य पश्यतस्साऽभवत्तदा ॥ १७

पुत्रजन्म प्रतीक्षन् वै स राजा तद्धारयत् ॥ १७॥

एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः।

तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ॥ १८॥

प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ।

श्रिया परमया युक्तश् शरच्छुक्ले यथा शशी ॥ १९॥

ततस्तु दशमे मासि प्राजायत रविप्रभम् ।

कुमारं देवगर्भाभं प्रतीपमहिषी तदा ॥ २०॥

तयोस्समभवत् पुत्रो वृद्धयोस्स महाभिषक् ॥ २१

शान्तस्य जज्ञे सन्तानस् तस्मादासीत्स शन्तनुः ॥ २१॥

तस्य जातस्य कृत्यानि प्रतीपोऽकारयत् प्रभुः ।

जातकर्मादि विप्रेण वेदोक्तैः कर्मभिस्तदा ॥ २२॥

नामकर्म च विप्रास्तु चक्रुः परमसत्कृतम् ।

शन्तनोरवनीपाल ! वेदोक्तैः कर्मभिस्तदा ॥ २३॥

ततस्संवर्धितो राजा शन्तनुर्लोक[1]पालकः ।

स तु लेभे परां निष्ठां प्राप्य धर्मविदां वरः ॥ २४॥

---

1. ख-ग-घ—धार्मिकः ।

धनुर्वेदे च वेदे च गतिं स परमां गतः ।
यौवनं चापि संप्राप्तः कुमारो वदतां वरः ॥ २५॥

संस्मरंश्चाक्षयांल्लोकान् विजितांस्तान् स्वकर्मणा ।
बभूव धर्मकृद्राजा शन्तनुर्भरतर्षभ ॥ २६॥

प्रतीपश्शन्तनुं पुत्रं यौवनस्थमबोधयत् ॥ २७

पुरा स्त्री मां समभ्यागाच् छन्तनो भूतये तव ।
त्वामाव्रजेद्यदि रहस् सा पुत्र वरवर्णिनी ॥ २८

कामयानाऽभिरूपाढ्या दिव्यस्त्री पुत्रकाम्यया ।
[1]सा त्वया नानुयोक्तव्या काऽसि कस्यासि चाङ्गने ॥ २९

यच्च कुर्यान्न तत्कर्म प्रतिषेद्धुं त्वयाऽनघ ।
मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ॥ ३०

एवं संदिश्य तनयं प्रतीपश्शन्तनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा जगाम ह ॥ ३१

स राजा शन्तनुर्धीमान् पार्थिवानां धुरन्धरः ।
बभूव सर्वलोकस्य सत्यवागिति सत्तमः ॥ ३२

पीनस्कन्धो महाबाहुर् मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैस् सर्वैर्नृपतिलक्षणैः ॥ ३३

---

1. क-ख-ग-घ- न प्रष्टव्या त्वया सा वै कासि कस्य सुता त्विति ।

[1]अमर्त्यसंपदोपेतः क्षत्रधर्मविशेषवित् ।
वशे चक्रे महीमेको विजित्य वसुधाधिपान् ॥ ३४

वेदानागमयत् कृत्स्नान् राजधर्मांश्च सर्वशः ।
ईजे च बहुभिस्सत्रैः क्रतुभिर्भूरिदक्षिणैः ॥ ३५

तर्पयामास विप्रांश्च वेदाध्ययनकोविदान् ।
रत्नैरुच्चावचैर्गोभिर् ग्रामैरश्वैर्धनैरपि ॥ ३६

वयोरूपेण संपन्नः पौरुषेण बलेन च ।
ऐश्वर्येण प्रतापेन विक्रमेण धनेन च ॥ ३७

वर्तमानं च सत्येन सर्वधर्मविशारदम् ।
तं महीपं महीपाला राजराजमकुर्वत ॥ ३८

वीतशोकभयाबाधास् सुखस्वप्नप्रबोधनाः ।
श्रिया भरतशार्दूल समपश्यन्त भूमिपाः ॥ ३९

शन्तनुप्रमुखैर्गुप्तं राष्ट्राधिपतिभिर्जगत् ।
नियमैस्सर्ववर्णानां ब्रह्मोत्तरमवर्तत ॥ ४०

ब्राह्मणाभिमुखं क्षत्रं क्षत्रियाभिमुखा विशः ।
ब्रह्मक्षत्रानुलोमाश्च शूद्राः पर्यचरन् विशः ॥ ४१

एवं पशुवराहाणां तथैव मृगपक्षिणाम् ।
शन्तनावथ राज्यस्थे नावर्तत वृथा वधः ॥ ४२

1. क-ख-ग-घ—अमात्य

असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा सर्वेषां भूतानामभवत् पिता ॥ ४३
स हस्तिनाम्नि धर्मात्मा विहरन् कुरुनन्दनः ।
तेजसा सूर्यकल्पोऽभूद् वायुना च समो बले ॥ ४४
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ।
बभूव राजा सुमतिः प्रजानां सत्यविक्रमः ॥ ४५
स वनेषु च रम्येषु शैलप्रस्रवणेषु च ।
चचार मृगयाशीलश् शन्तनुर्वनगोचरः ॥ ४६
स मृगान् महिषांश्चैव विनिघ्नन् राजसत्तमः ।
नदीमन्वचरद्राजा शन्तनुः परया मुदा ॥ ४७
गङ्गां त्रिपथगां पुण्यां सिद्धचारणसेविताम् ।
स कदाचिन्महाराज ददर्श परमां स्त्रियम् ॥ ४८
सा च शन्तनुमभ्यागाद् अलक्ष्मीमपकर्षती ॥ ४८॥
जाज्वल्यमानां वपुषा साक्षा[1]च्छ्रियमिवापराम् ।
सर्वानवद्यां युवतिं दिव्याभरणभूषिताम् ॥ ४९॥
सूक्ष्माम्बरधरां साक्षात् पद्मोदरसमप्रभाम् ।
स्नातमात्रामधोवस्त्रां गङ्गातीररुहे वने ॥ ५०॥
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ।

---

1. क-ख-ग-घ—त्पद्मामिव श्रियम् ।

[1]तां दृष्ट्वा हृष्टरोमाऽभूद् दर्शनादेव शन्तनुः ॥ ५१॥
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ ५२
दृष्ट्वैनं सा च राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ ५३
[2]गङ्गा कटाक्षेण राजानं प्रेक्षमाणा विलासिनी ।
चक्रूर्यताग्रतस्तस्य किन्नरीवाप्सरोपमा ॥ ५४
तां दृष्ट्वा हृष्टरूपोऽभूद् दर्शनादेव शन्तनुः ।
विलासचेष्टितैस्तस्या हृतचेताश्च योषितः ॥ ५५
[3]तामुवाच ततो राजा कामिनीं तु मनोरमाम् ॥ ५५॥

शन्तनुः—
पिबन्तीव च नेत्राभ्यां न तृप्तिं दर्शनेन च ॥ ५६
देवता किन्नरी वा त्वं गन्धर्वी वा सुमध्यमे ।
यक्षी वा मानवी वापि जानीयां कां शुचिस्मिते ॥ ५७

---

1. क-ख-ग—रूपेण वयसा कान्त्या शरीरावयवैस्तथा ।
हासभावविलासैश्च लोचनाञ्चलविक्रियैः ॥
श्रोणीभारेण मध्येन स्तनाभ्यामुरसा दृशा ।
कबरीभरेण पादाभ्यामिङ्गितेन स्मितेन च ॥
कोकिलालापसंल्लापैन्यैक्कुर्वन्तीं त्रिलोकगाम् ।
वाणीं च गिरिजां लक्ष्मीं योषितोऽन्यास्सुराङ्गनाः ॥
[अधिकः पाठः]

2. घ—स्नेहात्कटाक्षेण राजानं वीक्षमाणां विलासिनीम् ।

3. ख—रूपेणातीत्य तिष्ठन्तीं सर्वां राजन्ययोषितः ।
[अधिकः पाठः]

याऽसि काऽसि [1]सुमध्ये त्वं महिषी मे भवानघे!।
त्वद्गता हि मम प्राणा वसु यन्मेऽस्ति किंचन ॥ ५८

वैशंपायनः—

श्रुत्वा तु राज्ञस्सा बाला सस्मितं मृदु वल्गु च ।
यशस्विनी च साऽगच्छच्छन्तनोर्भूतये तदा ॥ ५९

सा च दृष्ट्वा नृपश्रेष्ठं चरन्तं तीरमाश्रितम् ।
स्मृत्वा वसूनां समयम् अभ्यगच्छदनिन्दिता ॥ ६०

प्रजार्थिनी राजपुत्रं शन्तनुं पृथिवीपातिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृप ॥ ६१

कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।
प्रत्युवाच महीपालं ह्लादयन्ती मनो गिरा ॥ ६२

गङ्गा—

भविष्यामि महीपाल महिषी ते वशानुगा ।
न तु त्वं वा द्वितीयो वा ज्ञातुमिच्छेत् कथंचन ॥ ६३

यत्तु कुर्यामहं राजन् शुभं वा यदि वाऽशुभम् ।
नाहं वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम् ॥ ६४

एवं वै वर्तमाने तु त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वां नराधिप ॥ ६५

1. क-ख-ग-घ—सुरप्रख्ये

एष मे समयो राजन् भज मां त्वं यथेप्सितम् ।
अनुनीताऽस्मि ते पित्रा भर्ता मे त्वं भव प्रभो ॥ ६६

वैशम्पायनः—

तथेति राज्ञा साधूक्ता तत्रैव वरवर्णिनी ।
प्रहर्षमतुलं लेभे श्रुत्वा वाक्यमनिन्दिता ॥ ६७

प्रतिज्ञाय तु तत्तस्यास् तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ॥ ६८

सा च शन्तनुमभ्यागात् साक्षाल्लक्ष्मीरिवापरा ।
आसाद्य शन्तनुस्तां च बुभुजे कामवान् सुखी ॥ ६९

न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ॥ ६९॥

स तस्याश्शीलवृत्तेन रूपेण परमेण च ।
सम्यक्चैवोपचारेण सुखमाराधितोऽभवत् ॥ ७०॥

स राजा परमप्रीतः परमस्त्री[1]प्रलोभितः ॥ ७१

दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी ।
मानुषं विग्रहं श्रीमत् कृत्वा वै वरवर्णिनी ॥ ७२

भाग्योपनतकामस्य भार्येवोपस्थिताऽभवत् ।
शन्तनो राजसिंहस्य देवराजसमद्युतेः ॥ ७३

संभोगस्नेहचातुर्यैर् भावलास्यैर्मनोरमैः ।

---

1. क-ख-ग-घ—प्रलालितः ।

राजानं रमयामास यथा रज्येत स प्रभुः ॥ ७४

स राजा रतिसक्तोऽभूद् उत्तमस्त्रीगणैर्वृतः ॥ ७४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

॥ ७ ॥ संभवपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[अस्मिन्नध्याये ७४॥ श्लोकाः ।]

---

## ॥ एकनवतितमोऽध्यायः ॥

---

देवव्रतोत्सर्जनम् ॥ १ ॥

---

वैशंपायनः—

अहोरात्रानृतून् मासान् न बुबोध गतान् बहून् ।
रममाणः प्रियां लब्ध्वा यथाकामं नरेश्वरः ॥ १

दिविष्ठान् मानुषांश्चैव भोगान् भुङ्क्ते स्म वै नृपः ।
आसाद्य शन्तनुश्श्रीमान् मुमुदे च परन्तपः ॥ २

ऋतुकाले तु सा देवी दिव्यं गर्भमधारयत् ।
अष्टावजनयत्पुत्रांस् तस्य चामरवर्णिनः ॥ ३

जातं जातं च सा पुत्रं [1]तास्वप्सु क्षिपति स्म ह ।
सूतके कण्ठमाक्रम्य तान्निनाय यमक्षयम् ॥ ४

---

1. क-ख-ग-घ—स्वास्वप्सु

[1]वृणोतु त्वां नदीत्युक्त्वा सर्वान् स्रोतस्यवासृजत् ।
तस्य तत् त्वप्रियं राज्ञश् शन्तनोरभवत्तदा ॥ ५
उवाच किञ्चिन्न तु तां पितुर्वचनयन्त्रितः ॥ ५॥
अमीमांस्या कर्मयोनिर् आगमश्चेति शन्तनुः ।
स्मरन् पितृवचश्चैव नापृच्छन् पुत्रकिल्बिषम् ॥ ६॥
जाताञ्जातांश्च वै हन्ति सा स्त्री सप्त वरान् सुतान् ।
शन्तनुर्धर्मभङ्गाच्च नापृच्छत्तां कथंचन ॥ ७॥
अष्टमं तु जिघांसन्त्यां चुक्षुभे शन्तनोर्धृतिः ॥ ८
उवाच राजा दुःखार्तः परीप्सन् पुत्रमात्मनः ॥ ८॥
आलभन्तीं तदा दृष्ट्वा तां स कौरवनन्दनः ।
अब्रवीद्भरतश्रेष्ठो वाक्यं परमदुःखितः ॥ ९॥

शन्तनुः—

मा वधीः [2]कस्य काऽसीति किं हिनत्सि सुतानिति ।
पुत्रघ्नि सुमहत्पापम् अकार्षीः कर्म निन्दितम् ॥ १०॥

गङ्गा—

पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥ ११॥
अहं गङ्गा जह्नुसुता महर्षिगणपावनी ।

---

1. क-ख-ग—हनामि त्वां नहीं; घ—प्रीणामि त्वाहमि
2. क-ख-ग-घ—कासि कस्यासि किञ्च हंसि

देवकार्यार्थसिद्ध्यर्थम् उषिताऽहं त्वया सह ॥ १२॥

इमेऽष्टौ वसवो देवा महाभागा महौजसः ।
[1]आपगस्याभिशापेन मानुषेषूपपादिताः ॥ १३॥

तेषां जनयिता नान्यस् त्वदृते भुवि विद्यते ।
जनित्री मद्विधा धात्री नैवास्ति पुरुषाधिप ॥ १४॥

तस्माद्द्विजनने युक्ता त्वत्संयोगमरोचयम् ।
जनयित्वा वसूनष्टौ जिता लोकाश्च पुष्कलाः ॥ १५॥

देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये नियोगान्मानुषेष्विति ॥ १६॥

शप्ताश्शापाद्विमुक्तास्ते त्व[2]त्कृतोऽयं विमुच्यते ।
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥ १७॥

अयं तव सुतस्तेषां वीर्येण कुलनन्दनः ।
संभूतोऽति जनानन्यान् भविष्यति न संशयः ॥ १८॥

एष पर्यायवासस्थो देवस्त्वत्सदृशोऽष्टमः ।
मत्प्रसादाच्च जानीहि गङ्गादत्तमिमं सुतम् ॥ १९॥

तस्माद्देवव्रतश्चैव गङ्गादत्तश्च वीर्यवान् ।

1. क-ख-ग-घ—कोशेषु सर्वत्र आपवः इति दृश्यते ।
2. क-ख-ग-घ—कृतेऽयं न मुच्यते ।

द्विनामा शन्तनोः पुत्रश्च शन्तनोरधिको गुणैः ॥ २०॥
तेषां लोकानवाप्नोति वसूनां वसुधाधिप ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ७ ॥ संभवपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ द्विनवतितमोऽध्यायः ॥

वसुशापकीर्तनम् ॥ १ ॥

---

शन्तनुः—

आपगो नाम कोन्वेष किमृषेस्तस्य दूषितम् ।
शशाप यस्मात् कल्याणि ! स वसूंश्चारुदर्शने ॥ १
यस्याभिशापात्ते सर्वे मानुषीं योनिमागताः ॥ १॥

अनेन च विशेषेण गङ्गादत्तेन किं कृतम् ।
कस्य चैष कृतेनैष चिरमेष वसिष्यति ॥ २॥

ईशानास्सर्वलोकानां वसवः केन हेतुना ।
मनुष्येषूदपद्यन्त तत्समाचक्ष्व जाह्नवि ! ॥ ३॥

वैशंपायनः—

एवमुक्ता वरारोहा राजानमिदमब्रवीत् ।

भर्तारं जाह्नवी देवी शन्तनुं पुरुषर्षभ ॥ ४॥

गङ्गा—

लेभे यं यमुना पुत्रं वरुणाद्राजसत्तम ।
वसिष्ठनामा स मुनिः ख्यात आपग इत्युत ॥ ५॥

तस्याश्रमपदं पुण्यं मृगपक्षिगणान्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकवनावृतम् ॥ ६॥

स वारुणिस्तपस्तेपे तस्मिन् भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठस् स्वादुमूलफलोदके ॥ ७॥

दक्षस्य दुहिता या तु सुरभीत्यभि विश्रुता ।
गां प्रजाता तु सा देवी काश्यपात्कुरुतर्षभ ॥ ८॥

अनुग्रहार्थं जगतस् सर्वकामदुहां वराम् ।
लेभे तां गां तु धर्मात्मा होमधेनुं स वारुणिः ॥ ९॥

सा तस्मिंस्तपसाऽरण्ये वसन्ती ऋषिसेविते ।
चचार रम्ये हर्म्ये च गौरपेतभया तदा ॥ १०॥

ततस्तद्वनमाजग्मुः कदाचित्कुरुतर्षभ ।
अष्टौ च वसवस्सर्वे देवा देवर्षिसेवितम् ॥ ११॥

सभार्यास्तद्वनं सर्वे विचरन्तस्ततस्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ १२॥

एकस्य भार्या राजेन्द्र! वसोर्वासवविक्रम! ।

तां च दोग्ध्रीं वने तस्मिन् गां ददर्श सुदर्शनाम् ॥ १३॥
स्निग्धां वसिष्ठस्य मुनेस् सर्वकामधुगुत्तमाम् ॥ १४
सा विस्मयसमाविष्टा रूपयुक्तां सुनन्दिनी ।
[1]दर्शयामास कल्याणी यातां गां गोवृषविक्रम ॥ १५
सा पीनां च सुदोग्ध्रीं च सुवालधिमुखोदराम् ।
उपपन्नां गुणैस्सर्वैश् शीलेनानुत्तमेन च ॥ १६
एवंगुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास कल्याणी पुरा पौरवनन्दन ॥ १७
द्यौस्तदा तां तु दृष्ट्वैव गां गजे[2]श्वरविक्रम ।
उवाच सा सतां देवि! तस्या रूपगुणान्वयम् ॥ १८

द्यौः—

एषा गौरुत्तमा देवी वारुणेरसितेक्षणा ।
मुनेस्तस्य वरारोहे! यस्येदं वनमुत्तमम् ॥ १९
अस्याः क्षीरं पिबेन्मर्त्यस् स्वादु यो वै सुमध्यमे ।
दशवर्षसहस्राणि स जीवेत् स्थिरयौवनः ॥ २०

वैशम्पायनः—

एतच्छ्रुत्वा तु सा देवी नृपोत्तम! सुमध्यमा ।
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ॥ २१

---

1. क-ख-ग-घ—स्वपत्युर्दर्शयामास 2. क-ख-ग-घ—न्द्रेन्द्र

गङ्गा—

अस्ति मे मानुषे लोके नरदेवात्मजा सखी ।
नाम्ना जितवती नाम रूपयौवनशालिनी ॥ २२

उशीनरस्य राजर्षेस् सत्यसन्धस्य धीमतः ।
दुहिता प्रथिता लोके मानुषे रूपसंपदा ॥ २३

तस्या हेतोर्महाभाग! सवत्सां गां ममेप्सिताम् ।
आनयस्व [1]नरश्रेष्ठ त्वरितं पुण्यवर्धनाम् ॥ २४

यावदस्याः पयः पीत्वा सा सखी मम मानदा ।
मानुषेषु भवेच्चैका जरारोगविवर्जिता ॥ २५

एतन्मम महाभाग कर्तुमर्हसि कर्म वै ।
प्रियात् प्रियतरं ह्यस्मान्नास्ति मेऽन्यत् कंथचन ॥ २६

एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ।
धराद्यैर्भ्रातृभिस्सार्धं द्यौस्तदा तां जहार गाम् ॥ २७

तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ।
ऋषेस्तस्य तपस्तीव्रं न शशाक परीक्षितुम् ॥ २८

हृता गौस्सा तदा तेन प्रपाताऽद्भुतदर्शन ।
तदाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ॥ २९

नापश्यद्गां सवत्सां तां सा हि तस्मिन् वनोत्तमे ।

1. क-ख-ग-घ—सुर

स तस्मिन् मृगयामास वने तामृषिसत्तमः ॥ ३०
नाध्यागच्छच्च मृगयन् स्वां गां मुनिरुदारधीः ॥ ३०॥
ज्ञात्वा तथाऽपनीतां तां वसुभिर्दिव्यदर्शनः ।
स तु कोपवशं प्राप्तश् शशाप च वसूंस्तदा ॥ ३१॥
यस्मान्मे वसवो जह्रुर् गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात् सर्वे जनिष्यन्ति वसवो मानुषेष्विति ॥ ३२॥
एवं शशाप भगवान् वसूंस्तान् मुनिसत्तमः ।
वशं क्रोधस्य संप्राप्त आपगो भरतर्षभ ॥ ३३॥
शप्त्वा च तान् महाभागस् तपस्येव मनो दधे ।
एवं स शप्तवान् राजन् वसूनष्टौ तपोधनः ॥ ३४॥
[1]हरप्रभावो ब्रह्मर्षिर् देवान् रोषसमन्वितः ॥ ३५
एवं शप्तास्ततस्तेन मुनिना यामुनेन वै ।
अष्टौ समस्ता वसवो निजदोषेण सत्तम ॥ ३६
अथाश्रमपदं प्राप्य पुनस्तस्य महात्मनः ।
शप्तास्स्म इति जानन्तस् तमृषिं चाभिचक्रमुः ॥ ३७
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ।
न लेभिरे कृते तस्मात् प्रसादमृषिसत्तमात् ॥ ३८
चकार च न तेषां वै प्रसादं भगवानृषिः ।

---

1. क-ख-ग-घ—महा

आपगः पुरुषव्याघ्र ! सर्वधर्मविशारदः ॥ ३९

उवाच च स धर्मात्मा सप्त राजन् धरादिकाम् ।
अनुसंवत्सराच्छापान्मोक्षध्वमिति भारत ॥ ४०

अयं तु यत्कृते शप्ता मया यूयं स वत्स्यति ।
द्यौस्तु वै मानुषे लोके दीर्घकालं स्वकर्मणा ॥ ४१

नानृतं तच्चिकीर्षामि यस्मिन् क्रुद्धो यदब्रवम् ॥ ४१॥

प्रजां ह्यनृतवाक्येन हिंस्यामप्यात्मनस्तदा ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥ ४२॥

भविष्यति च धर्मात्मा सर्वशास्त्रार्थविद्बली ।
पितुश्चायं प्रियं कुर्वन् स्त्रीभोगान् वर्जयिष्यति ॥ ४३॥

एवमुक्त्वा वसून् सर्वान् जगाम भगवानृषिः ।
ततो मामुपजग्मुस्ते समस्ता वसवस्तदा ॥ ४४॥

अयाचन्त च मां राजन् वरं तेभ्यो ददाम्यहम् ।
जातं जातं क्षिपेत्यूचुस् स्वयं गङ्गे ! त्वदम्भसि ॥ ४५॥

एवं तेषां वरं सम्यक् शप्तानां राजसत्तम ! ।
मोक्षार्थं मानुषाल्लोकाद् यथावत्कृतवत्यहम् ॥ ४६॥

अयं शापादृषेस्तस्य एक एव नृपोत्तम ! ।
द्यौ राजन् मानुषे लोके चिरं वत्स्यति भारत ! ॥ ४७॥

अयं देवव्रतश्चैव गङ्गादत्तश्च मे सुतः ।
द्विनामा शन्तनोः पुत्रश् शन्तनोरधिको गुणैः ॥ ४८॥

अयं कुमारः पुत्रस्ते विवृद्धः पुनरेष्यति ।
इयं च ते भविष्यामि आह्वानोपगता नृप! ॥ ४९॥

वैशंपायनः—

एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमारं तं जगाम च यथेप्सितम् ॥ ५०॥

तस्माद्देवव्रतश्चैव गङ्गादत्तश्च सोऽभवत् ॥ ५१

शन्तनुश्चापि शोकार्तो जगाम स्वपुरं ततः ॥ ५१॥

तस्य कीर्तिं च वृत्तिं च महतो नृप सद्गुणान् ।
शन्तनोः कीर्तयिष्यामि सर्वानेव यथातथम् ॥ ५२॥

महाभागस्य नृपतेर् भारतस्य यशस्विनः ।
यस्येतिहास आख्यातो महाभारत इत्युत ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

॥ ७ ॥ संभवपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः ।]

---

## ॥ त्रिनवतितमोऽध्यायः ॥

देवव्रतयौवराज्याभिषेकः ॥ १ ॥

वैशंपायनः—

एवं स शन्तनुर्धीमान् देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ १

शन्तनोः कीर्तयिष्यामि सर्वानेव गुणानहम् ॥ १॥

दमो दानं क्षमा बुद्धिर् ह्रीर्धृतिस्तेज उत्तमम् ।
[1]न्यवसंश्च महासत्वे शन्तनौ भरतर्षभ ॥ २॥

अमात्यगुणसम्पन्नः क्षत्रधर्मविशेषवित् ।
आसीद्भरतवंशस्य गोप्ता साधुजनस्य च ॥ ३॥

कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
धर्म एव परः कामाद् अर्थाच्चेति व्यवस्थितः ॥ ४॥

[2]एवमासीन्महासत्वश् शन्तनुर्भरतर्षभ ।
न चास्य सदृशः कश्चित् क्षत्रियो धर्मतोऽभवत् ॥ ५॥

वर्तमानं च सद्धर्मे शस्त्रशास्त्रविदांवर ।
तं महीपा महेष्वासं राजराजमकुर्वत ॥ ६॥

---

1. क-ख-ग—नित्यान्यस्मिन् घ—नित्यान्यासन्
2. क-ख-ग—अन्वितः परिपूर्णार्थैस्सर्वैर्नृपतिलक्षणैः। [अधिकः पाठः]

तेन कीर्तिमता शिष्टाः शक्रप्रतिमतेजसा ।
यज्ञदानतपश्शीलास् समपद्यन्त पार्थिवाः ॥ ७॥
शन्तनुप्रमुखैर्गुप्तं राष्ट्राधिपतिभिर्जगत् ।
नियमात् सर्ववर्णानां ब्रह्मोत्तरमवर्तत ॥ ८॥
ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः ।
ब्रह्मक्षत्रानुलोमांश्च शूद्राः पर्यचरन् विशः ॥ ९॥
स हस्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन् सागरपर्यन्ताम् अन्वशासद्वसुन्धराम् ॥ १०॥
स देवराजसदृशो धर्मज्ञस् सत्यवागृजुः ।
दानधर्मपरो योगी श्रिया परमया युतः ॥ ११॥
अरागद्वेषसंयुक्तस् सोमवत् प्रियदर्शनः ।
तेजसा सूर्यसङ्काशो वायुवेगसमो बले ॥ १२॥
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ १३
वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शन्तनौ पृथिवीपाले नावर्तत वृथा तदा ॥ १४
सर्वब्रह्मोत्तरे राज्ये शन्तनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ १५
चकोरनेत्रस्ताम्रास्यस् सिंहर्षभगतिर्युवा ।
गुणैरनुपमैर्युक्तस् समस्तैराभिगामिकैः ॥ १६

गम्भीरस्सत्वसंपन्नः पूर्णचन्द्रनिभाननः ॥ १६॥
देवर्षिपितृयज्ञार्थं बभूवुः पशवो नृणाम् ।
न ह्यधर्मेण केषां चित् प्राणिनामभवद्वधः ॥ १७॥
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा भूतानां सर्वेषामभवत् पिता ॥ १८॥
वीतशोकभयाबाधास् सुखस्वप्ननिबोधनाः ।
श्रिता भारतभर्तारं समपद्यन्त भूमिपाः ॥ १९॥
तस्मिन् नरवरश्रेष्ठे राजराजेश्वरे सति ।
नृणां वागभवत्सत्यं दानार्थमभवद्धनम् ॥ २०॥
[1]स समाष्षोडशाष्टौ च चतस्रोऽष्टौ तथाऽपराः ।
रतिमप्राप्तवान् कांचित् बभूव वनगोचरः ॥ २१॥
[2]तथारूपस्तथाचारस् तथावृत्तस्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभूद् आदावेव तथा वसुः ॥ २२॥
सर्वास्त्रेषु च निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्वो महावीर्यो महायशाः ॥ २३॥
स कदाचिन्मृगान् [3]बद्ध्वा वनादनुससार ह ।

---

1. क-ख-ग-घ—यज्ञार्थं पशवस्सृष्टाः सन्तानार्थं च मैथुनम् । [अधिकः पाठः]

2. घ—तपसा कार्शितोग्रेण जपध्यानपरस्सदा । [अधिकः पाठः]

3. क-ख-ग—विद्ध्वा गङ्गाम; घ—निघ्नन् गङ्गाम

भागीरथीमल्पजलां ददर्श सरितां वराम् ॥ २४॥
तां दृष्ट्वा चिन्तयामास शन्तनुः पुरुषर्षभः ।
स्यन्दते किंन्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ॥ २५॥
ततो निमित्तमन्विच्छन् ददर्श सुमहामनाः ।
कुमारं रूपसंपन्नं बृहन्तं प्रियदर्शनम् ॥ २६॥
दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम् ।
कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ २७॥
तां शरैरावृतां दृष्ट्वा नदीं गङ्गां समन्ततः ।
विस्मितः प्रेक्षते स स्म कर्म तस्यातिमानुषम् ॥ २८॥
जातमात्रं पुरा दृष्टं तं पुत्रं शन्तनुस्तदा ।
न ज्ञातवान् महाभागम् अयं पुत्रो ममेति वै ॥ २८॥
स तु तं पितरं दृष्ट्वा मोहयामास मायया ।
प्रमोह्य च ततः क्षिप्रं तत्रैवान्तरधीयत ॥ ३०॥
तदद्भुतं ततो दृष्ट्वा तत्र राजा स शन्तनुः ।
शङ्कमानस्सुतं गङ्गाम् अब्रवीद्दर्शयेति माम् ॥ ३१॥
[1]दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम् ।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम् ॥ ३२॥
अलङ्कृतामाभरणैर् अरजोवस्त्रवासिनीम् ।

1. ग—अवातिष्ठत्तदा प्राप्य गङ्गा वचनमब्रवीत् । [अधिकः पाठः]

[1]दृष्टपूर्वां सतीं गङ्गाम् अभ्यजानात्स शन्तनुः ॥ ३३॥

गङ्गा—

यं पुत्रमष्टमं राजंस् त्वं पुरा मय्यविन्दथाः ।
स तेऽयं पुरुषव्याघ्र वज्रसंहननो युवा ॥ ३४॥

वेदानधिजगे पूर्वं वसिष्ठाच्चरितव्रतः ।
[2]कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ ३५॥

सुराणां संमतो नित्यम् असुराणां च भारत ।
उशना वेद यच्छास्त्रं तदप्यस्मिन् प्रतिष्ठितम् ॥ ३६॥

[3]महेष्वासमिमं राजन् राजधर्मार्थकोविदम् ।
मया दत्तं निजं पुत्रं वीरं वीर गृहं नय ॥ ३७॥

वैशंपायनः—

इत्युक्त्वा सा महाभागा तत्रैवान्तरधीयत ॥ ३८

---

1. ख-ग—शङ्कमानस्सुतं स्वस्य कर्म तस्यातिमानुषम् ।
[अधिकः पाठः]

2. घ—सकलान्सोपनिषदान् साङ्गोपाङ्गान् यथाविधि ।
[अधिकः पाठः]

3. क-ख-ग-घ—तथैवाङ्गिरसः पुत्रस् सुरासुरनमस्कृतः ।
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन् प्रतिष्ठितम् ॥
तव पुत्रे महाभागे साङ्गोपाङ्गं महात्मनि ।
ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् ॥
यदस्त्रं वेद रामश्च तदप्यस्मिन् प्रतिष्ठितम् ॥
[अधिकः पाठः]

घ—सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
[अधिकः पाठः]

तथैवं समनुज्ञातः पुत्रमादाय शन्तनुः ।
भ्राजमानं यथाऽदित्यम् आययौ स्वपुरं प्रति ॥ ३९

पौरवेषु ततः पुत्रं यौवराज्येऽभ्यषेचयत् ॥ ३९॥

पौरवस्तु पुरीं गत्वा पुरन्दरपुरोपमाम् ।
सर्वकामसमृद्धार्थं मेने चात्मानमात्मना ॥ ४०॥

पौरवाञ्शन्तनोः पुत्रः पितरं च महायशाः ।
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ॥ ४१॥

तथावृत्तसमाचारस् तथाधर्मस्तथाश्रुतः ।
पुत्रो देवव्रतो नाम शन्तनोरधिको गुणैः ॥ ४२॥

सर्वास्त्रेष्वभ्यनुज्ञातः पार्थिवेष्वितरेषु च ।
गुणैर्विशिष्टो बहुभिः पुत्रो देवव्रतोऽभवत् ॥ ४३॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ७ ॥ संभवपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

## ॥ चतुर्नवतितमोऽध्यायः ॥

भीष्मेण स्वपितुः दाशकन्याविवाहार्थं ब्रह्मचर्यप्रतिज्ञा ॥ १ ॥

वैशम्पायनः—

स तथा सह पुत्रेण रममाणो महीपतिः ।
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ॥ १

स कदाचिद्वनं यातो यमुनामभितो नदीम् ।
महीपतिरनिर्देश्यम् अजिघ्रद्गन्धमुत्तमम् ॥ २

तस्य प्रभवमन्विच्छन् विचचार वनं नृपः ।
स ददर्श तदा कन्यां दाशानां देववर्णिनीम् ॥ ३

तामपृच्छत्ततो राजा कन्यामसितलोचनाम् ।
कस्य त्वमसि [1]का चासि किं च भीरु चिकीर्षसि ॥ ४

साऽब्रवीद्दाशकन्याऽस्मि धर्मार्थं वाहये तरिम् ।
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ॥ ५

ज्ञात्वा च पितरं तस्या वरयामास तां तदा ।
रूपमाधुर्यगन्धैस्तां संयुक्तां देववर्णिनीम् ॥ ६
समीक्ष्य राजा दाशेयीं कामयामास शन्तनुः ॥ ६॥
पर्यपृच्छत्ततस्तस्या पितरं चात्मकारणात् ।
संभ्रमात्प्रत्युवाचेदं दाशराजो महीपतिम् ॥ ७॥

दाशः—

याचमानाय वै देया वराय वरवर्णिनी ।
हृदि कामस्तु मे कश्चित् तं निबोध जनेश्वर! ॥ ८॥
यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसे नृप ।
सत्यवागसि सत्येन समयं प्रतिपद्यसे ॥ ९॥
ततो दास्यामि राजेन्द्र तव कन्यामिमां नृप ।

---

1. क-ख-ग-घ—वा कासि किं च ते ह चिकीर्षितम् ।

न हि मे त्वत्समः कश्चिद् वरो जातु भविष्यति ॥ १०॥

शन्तनुः—

श्रुत्वा तव वरं दाश व्यवसायो भविष्यति ।
दातव्यं चेत् प्रदास्यामि न त्वदेयं कथंचन ॥ ११॥

दाशः—

योऽस्यां [1]जायेत च पुमान् स राजा पृथिवीपतिः ।
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन भारत ॥ १२॥

वैशंपायनः—

नाकामयत तं दातुं वरं दाशाय शन्तनुः ।
शरीरजमसह्यं तं दीप्यमानमधारयत् ॥ १३॥

स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धस्तिनपुरं शोकोपहतचेतनः ॥ १४॥

ततः कदाचिच्छोचन्तं शन्तनुं ध्यानमास्थितम् ।
पुत्रो देवव्रतो ह्येत्य पितरं वाक्यमब्रवीत् ॥ १५॥

देवव्रतः—

सर्वत्र भवतः क्षेमं विधेयास्सर्वशत्रवः ।
अकस्माद्राजशार्दूल शोचंस्तु परिदृश्यसे ॥ १६॥

तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ।
कस्मान्न भुङ्क्षे राजंस्त्वं न किञ्चिदपि भाषसे ॥ १७॥

---

1. घ—जातस्तव सुतस्स राजा त्वदनन्तरम्।

[1]न चाश्वेन च निर्यासि विवर्णो हरिणः कृशः।
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै ॥ १८॥

वैशंपायनः—

स तं काममवाच्यं वै दाशकन्यां प्रतीदृशम्।
विवृतं नाशकत्तस्मै पिता पुत्राय शंसितुम् ॥ १९॥

एवमुक्तस्तु पुत्रेण शन्तनुः प्रत्यभाषत ॥ २०

शन्तनुः—

असंशयं महाप्राज्ञ यथैवात्थ तथैव तत्।
अपत्यं नस्त्वमेवैकः कुले महति भारत ॥ २१

अनित्यता च मर्त्यानाम् अतश्शोचामि पुत्रक।
कथंचित्त्वयि गाङ्गेय! विपन्ने नास्ति नः कुले ॥ २२

असंशयं त्वमेवैकश् शतैरपि वरस्सुतः ॥ २२॥

न चाप्यहं वृथा भूयो दारान् कर्तुमिहोत्सहे।
संतानस्याविनाशं तु कामये भद्रमस्तु ते ॥ २३॥

[2]अपुत्रतैकपुत्रत्वम् इत्याहुर्धर्मवादिनः ॥ २४

चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥ २५

---

1. घ—न श्रुतैष कुतो राजंस् त्वं न कश्चित्प्रभाषसे।

[अधिकः पाठः]

2. घ—अपुत्रतैकपुत्रत्वं सममाहुर्मनीषिणः।

अग्निहोत्रं त्रयो वेदा यज्ञाश्च सहदक्षिणाः ।
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ॥ २६

एवमेव मनुष्येषु स्याच्च सर्वं प्रजास्विति ।
यदपत्यं महाप्राज्ञ! तत्र मे नास्ति संशयः ॥ २७

अपत्यादनृणो लोके पितृणां नास्ति संशयः ।
एषा त्रयी पुराणानाम् उत्तमानां च शाश्वती ॥ २८

अपत्यं कर्म विद्या च त्रीणि ज्योतींषि भारत! ॥ २८॥

यदिदं कारणं तात सर्वमाख्यातमञ्जसा ॥ २९

त्वं च शूरस्सदाऽमर्षी शस्त्रनित्यश्च भारत ।
नान्यत्र शस्त्रात्तस्मात्ते निधनं विद्यतेऽनघ ॥ ३०

सोऽस्मि संशयमापन्नस् त्वयि शान्ते कथं भवेत् ।
एतन्मे कारणं तात दुःखमूलमशेषतः ॥ ३१

वैशंपायनः —

स तस्य पितुराज्ञाय मतं समनुचिन्त्य च ।
देवव्रतो महाबुद्धिः प्रयाणमनुचिन्तयन् ॥ ३२

अपत्यफलसंसक्तम् एतच्छ्रुत्वा पितुर्वचः ।
सूतं भूयोऽपि संतप्त आह्वयामास वै पितुः ॥ ३३

सूतस्तु कुरुमुख्यस्य उपयातस्तदाज्ञया ।
तमुवाच महाप्राज्ञो भीष्मो वै सारथिं पितुः ॥ ३४

भीष्मः—

त्वं सारथे पितुर्मह्यं सखाऽसि [1]रथयुग्यतः ।
अपि जानासि यदि वै कस्यां भावो नृपस्य तु ॥ ३५
[2]यथा वक्ष्यसि मे पृष्टः करिष्ये न तदन्यथा ॥ ३५॥

सूतः—

दाशकन्या नरश्रेष्ठ तत्र भावः पितुर्गतः ।
वृतस्स नरदेवेन तदा वचनमब्रवीत् ॥ ३६॥
योऽस्यां पुमान् भवेद्गर्भस् स राजा त्वदनन्तरम् ॥ ३७
नाकामयत तं दातुं पिता तव वरं तदा ॥ ३७॥
स चापि निश्चयस्तस्य न च दद्यामतोऽन्यथा ॥ ३८
एवं ते कथितं वीर कुरुष्व यदनन्तरम् ॥ ३८॥

वैशंपायनः—

ततस्स पितुराज्ञाय मतं सम्यगवेक्ष्य च ।
ज्ञात्वा विमनसं पुत्रः प्रययौ यमुनां प्रति ॥ ३९॥
क्षत्रियैस्सह धर्मात्मा पुराणैर्धर्मचारिभिः ।
उच्चैश्श्रवसमागम्य कन्यां वव्रे यशस्विनीम् ॥ ४०॥
तं दाशः प्रतिजग्राह विधिवत् प्रतिपूज्य च ।
अब्रवीच्चैनमागम्य राजसंसदि भारत ॥ ४१॥

1. क-ख-ग—सरयूर्गतः । घ—रथधूर्गतः ।
2. क-ख-ग-घ—एतदाचक्ष्व

उच्चैश्श्रवाः—

राज्यशुल्का प्रदातव्या कन्येयं याचतां वर ।
अपत्यं यद्भवेत्तस्यास् स राजा ऽस्तु पितुः परम् ॥ ४२॥

त्वमेवात्र महाबाहो शन्तनोर्वंशवर्धनः ।
पुत्रश्शस्त्रभृतां श्रेष्ठः किं नु वक्ष्यामि ते वचः ॥ ४३॥

कुमारिकाणां शुल्केन किंचिद्वक्ष्यामि भारत ।
को हि संबन्धकं श्लाघ्यम् ईप्सितं यौनमीदृशम् ॥ ४४॥

अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ॥ ४५

अपत्यं हीदमार्यस्य यो युष्माकं समो गुणैः ।
यस्य सत्यवती शुक्रात् प्रादुर्भूता यशस्विनी ॥ ४६

तपनेन पिता तत्र बहुशः परिकीर्तितः ।
अर्हतीयं सत्यवती पितरं तेऽब्रवीत्तथा ॥ ४७

अर्थितश्चापि राजर्षिः प्रत्याख्यातस्तदा मया ।
स चाप्यासीत् [1]सत्यवत्या भृशमर्थी महायशाः ॥ ४८

कन्यापितृत्वात् किंचित्तु वक्ष्यामि भरतर्षभ ।
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम् ॥ ४९

भूयांसं त्वयि पश्यामि तद्दोषमपराजित ॥ ४९॥

यस्य हि त्वं सपत्नस्स्या गन्धर्वस्यासुरस्य वा ।

---

1. घ—सत्यवत्यां

न स जातु सुखं विन्देत् त्वयि क्रुद्धे परन्तप ॥ ५०॥

एतावानत्र दोषोऽस्ति नान्यः कश्चन पार्थिव ।
एतज्जानीहि भद्रं ते दानादाने परन्तप ॥ ५१॥

वैशंपायनः—
तदैवमुक्तो गाङ्गेयस् तद्युक्तं प्रत्यभाषत ।
शृण्वतां भूमिपालानां पितुरर्थाय धर्मवित् ॥ ५२॥

देवव्रतः—
इदं वचनमाधत्स्व नास्ति वक्ताऽस्य मत्समः ।
अन्यो जातो न जनिता न च कश्चन संप्रति ॥ ५३॥

एवमेतत्करिष्यामि यथा त्वमिह भाषसे ।
योऽस्यां जनिष्यते पुत्रस् स नो राजा भविष्यति ॥ ५४॥

वैशंपायनः—
इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत ॥ ५५

दाशः—
चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ॥ ५५॥

त्वयैवात्र महाबाहो शन्तनुर्नाम नाथवान् ।
ईश्वरः कारणं च त्वं प्रभुर्दानाय चानघ ॥ ५६॥

इदं च वचनं मह्यं कार्यं वै शृणु भारत ।
कुमारिकाणां शुल्केन वक्ष्याम्यहमरिन्दम ॥ ५७॥

यत् त्वया सत्यमर्थं हि सत्यशील महाबल ।

राज्ञां मध्ये प्रतिज्ञातम् अनुरूपं तथैव तत् ॥ ५८॥

अत एव महाबाहो संशयो नात्र विद्यते । ५९

नास्तिकस्यान्यथाभावस् त्वत्तो रिपुनिबर्हण ।
विद्यते पुरुषव्याघ्र त्वयि सत्यं महाव्रत ॥ ६०

अपत्यं यद्भवेत्तुभ्यं तत्र नस्संशयो महान् ॥ ६०॥

वैशम्पायनः—

तस्य तन्मतमाज्ञाय सर्वशस्त्रभृतां वरः ।
प्रतिज्ञां प्रत्यभिजानात् स पितुः प्रियचिकीर्षया ॥ ६१॥

देवव्रतः—

उच्चैश्श्रवस्समाधत्स्व प्रतिज्ञां जनसंसदि ॥ ६२

ऋषयो वाऽथ वा देवा भूतान्यन्तर्हितानि च ।
यानि यानीह शृण्वन्तु नास्ति वक्ता हि मत्समः ॥ ६३

इदं वचनमादत्स्व सत्येन मम जल्पतः ।
शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते ॥ ६४

राज्यं तावत् पूर्वमेव मया त्यक्तं महाबल ।
अपत्यहेतोरपि च करोम्येष विनिश्चयम् ॥ ६५

अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।
अपुत्रस्यापि मे लोका भवितारो यथेप्सिताः ॥ ६६

न हि जन्मप्रभृत्युक्तं मम किंचिदिहानृतम् । ६६॥

यावत्प्राणा ध्रियन्ते वै मम देहं समाश्रिताः ।
तावन्न जनयिष्यामि पित्रे कन्यां प्रयच्छ मे ॥ ६७॥

परित्यजाम्यहं राज्यं मैथुनं चापि सर्वशः ।
ऊर्ध्वरेता भविष्यामि दाश सत्यं ब्रवीमि ते ॥ ६८॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः ।
ददामीत्येव तं दाशः कुमारं प्रत्यभाषत ॥ ६९॥

ततोऽन्तरिक्षेऽप्सरसो देवास्सर्षिगणास्तदा ।
तद्दृष्ट्वा दुष्करं कर्म प्रशशंसुश्च पार्थिवाः ॥ ७०॥

प्रत्यवर्षन्त कुसुमैर् भीष्मोऽयमिति चाब्रुवन् ॥ ७१

ततोऽस्य पितुरर्थाय तामुवाच यशस्विनीम् ।
अधिरोह रथं मातर् गच्छावस्स्वगृहानिति ॥ ७२

एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीं ।
आगम्य हस्तिनपुरं शन्तनोस्तन्न्यवेदयत् ॥ ७३

तस्य तद्दुष्करं कर्म प्रशशंसुर्नराधिपाः ।
समेताश्च पृथक्चैनं भीष्मोऽयमिति चाब्रुवन् ॥ ७४

तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शन्तनुः ।
बभूव दुःखितो राजा चिररात्राय भारत ॥ ७५

स तेन कर्मणा सूनोः प्रीतस्तस्मै वरं ददौ ।

नाकाममरणं तात! भविष्यति तवेति ह ॥ ७६

न ते प्रभविता मृत्युः यावदिच्छसि जीवितुम् ।
स्वेन कामेन मर्त्योऽसि नाकामस्त्वं कथञ्चन ॥ ७७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
॥ ७ ॥ संभवपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[अस्मिन्नध्याये ७७ श्लोकाः]

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

शन्तनुसत्यवत्योर्विवाहः ॥ १ ॥ चित्राङ्गदविचित्रवीर्ययोः संभवः ॥ २ ॥ विचित्रवीर्यस्य राज्याभिषेकः ॥ ३ ॥

---

वैशंपायनः—

चेदिराजसुतां ज्ञात्वा दाशराजेन [1]वर्धिताम् ।
विवाहं कारयामास शास्त्रदृष्टेन कर्मणा ॥ १

तदा विवाहे निर्वृत्ते स राजा शन्तनुर्नृपः ।
तां कन्यां रूपसंपन्नां स्वगृहे संन्यवेशयत् ॥ २

ततश्शान्तनवो धीमान् सत्यवत्यामजायत ।
पुत्रश्चित्राङ्गदो नाम बलवीर्यसमन्वितः ॥ ३

---

1. अ—भाषिताम्

तथाऽपरं महेष्वासं सत्यवत्यां पुनस्सुतम् ।
विचित्रवीर्यं धर्मात्मा जनयामास वीर्यवान् ॥ ४

अप्राप्तवति तस्मिंश्च यौवनं भरतर्षभ ।
स राजा शन्तनुर्धीरः कालधर्ममुपेयिवान् ॥ ५

स्वर्याते शन्तनौ भीष्मश्चित्राङ्गदमरिन्दमम् ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ ६

स तु चित्राङ्गदो धीमान् सर्वांश्चिक्षेप पार्थिवान् ।
मानुषं न हि मेने स कञ्चित् सममिवात्मनः ॥ ७

तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा ।
गन्धर्वराजो बलवांस् तुल्यनामाभ्ययात्तदा ॥ ८

गन्धर्वः—

त्वं वै सदृशनामासि युद्धं देहि नृपात्मज ! ।
नाम चान्यत् प्रगृह्णीष्व यदि युद्धं न दास्यसि ॥ ९

त्वयाऽहं युद्धमिच्छामि त्वत्सकाशात्तु नामतः ।
आगतोऽस्मि वृथा भाष्यो न गच्छेन्नामतो मया ॥ १०

वैशंपायनः—

इत्युक्त्वा गर्जमानौ तौ हिरण्वत्तीरसंगतौ ।
तेनास्य युद्धं सुमहत् कुरुक्षेत्रे बभूव ह ॥ ११
नद्या कूले हिरण्वत्यास् समास्तिस्रोऽभवद्रणम् ॥ ११॥

तयोर्बलवतोस्तत्र गन्धर्वकुरुमुख्ययोः ।
तस्मिन् विमर्दे तुमुले शस्त्रवृष्टिसमाकुले ॥ १२॥

मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ।
चित्राङ्गदं कुरुश्रेष्ठं विचित्रशरकार्मुकम् ॥ १३॥

चित्राङ्गदो विनिर्जित्य दिवमाचक्रमे पुनः ॥ १४

तस्मिंस्तु नृपशार्दूले निहते भूरिवर्चसि ।
भीष्मश्शान्तनवो धीमान् प्रेतकार्याण्यकारयत् ॥ १५

विचित्रवीर्यं च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुर् अभ्यषिञ्चदनन्तरम् ॥ १६

विचित्रवीर्यस्तु तदा भीष्मस्य वचने स्थितः ।
अन्वशासन्महाराज पितृपैतामहं पदम् ॥ १७

स धर्मशास्त्रकुशलो भीष्मं शान्तनवं नृपम् ।
पूजयामास धर्मेण स चैनं प्रत्यपालयत् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

॥ ७ ॥ संभवपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[अस्मिन्नध्याये १८ श्लोकाः ।]

## ॥ षण्णवतितमोऽध्यायः ॥

भीष्मस्य वाराणसीगमनम् ॥ १ ॥ भीष्मेण राज्ञां पराजयः ॥ २ ॥ अम्बाया भीष्मेण निराकरणम् ॥३॥ अम्बायाः कुमारान्मालालाभः ॥४॥

वैशम्पायनः—

हते चित्राङ्गदे भीष्मो बाले भ्रातरि चानघे ।
पालयामास तद्राज्यं सत्यवत्या मते स्थितः ॥ १

तथा विचित्रवीर्यं तु वर्तमानं सुखेऽतुले ।
संप्राप्तयौवनं पश्यन् भ्रातरं धीमतां वरम् ॥ २
भीष्मो विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ २॥

ततः काशीपतेर्भीष्मः कन्यास्तिस्रोऽप्सरस्समाः ।
शुश्राव सहिता राजंस् तिष्ठन्तीर्वै स्वयंवरे ॥ ३॥

ततस्स रथिनां श्रेष्ठो रथेनैकेन धर्मतः ।
जगामानुमते मातुः पुरीं वाराणसीं प्रति ॥ ४॥

तत्र राज्ञस्समुदितान् सर्वतस्समुपागतान् ।
ददर्श कन्यास्ताश्चैव भीष्मश्शन्तनुनन्दनः ॥ ५॥

तासां कामेन संमत्तास् सहिताः काशिकोसलाः ।
वङ्गाः पुण्ड्राः कलिङ्गाश्च ते जग्मुस्तां पुरीं प्रति ॥ ६॥

कीर्त्यमानेषु राज्ञां तु नामधेयेषु भारत ।

एकाकिनं तदा भीष्मं वृद्धं शन्तनुनन्दनम् ॥ ७॥
सोद्वेगा इव तं दृष्ट्वा कन्याः परमशोभनाः ।
अपाक्रामन्त तास्सर्वा वृद्ध इत्येव चिन्तया ॥ ८॥
वृद्धः परमधर्मात्मा वलीपलितधारितः ।
किं कारणमिहायातो निर्लज्जो भारतर्षभः ॥ ९॥
मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यति भारतम् ।
ब्रह्मचारीति भीष्मो हि वृथैव प्रथितो भुवि ॥ १०॥
इत्येवं प्रब्रुवन्तस्ते हसन्ति स्म नृपाधमाः ।
क्षत्रियाणां वचश्श्रुत्वा भीष्मश्चुक्रोध भारत ॥ ११॥
भीष्मस्तदा स्वयं राजा वरयामास ताः प्रभुः ॥ १२
उवाच च महीपालान् राजञ्जलदनिस्वनः ।
रथमारोप्य [1]तत्कन्या भीष्मो भीमपराक्रमः ॥ १३

भीष्मः—

आहूय दानं कन्यानां गुणवद्भ्यस्स्मृतं बुधैः ।
अलङ्कृत्य यथाशक्ति प्रदाय च धनान्युत ॥ १४
प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि ।
वित्तेन कथितेनान्ये बलादन्येऽ[2]नुमान्य च ॥ १५
प्रमत्तामुपयान्त्यन्ये स्वयं गृह्णन्ति चापरे ।

---

1. क-ख-ग-घ—ताः कन्याः  2. क-ख-ग—अवमन्य च ।

अष्टमं तु मिथोवृत्तं विवाहं कविभिस्स्मृतम् ॥ १६

स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च ।
संप्रमथ्य हृतामाहुर् ज्यायसीं धर्मचारिणः ॥ १७

ता इमाः पृथिवीपाला जिहीर्षामि प्रसह्य वः ।
ते यतध्वं यथाकामं विजयायेतराय वा ॥ १८

स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः ॥ १८॥

वैशंपायनः

एवमुक्त्वा नरश्रेष्ठान् काशिराजं च वीर्यवान् ।
सर्वाः कन्यास्स कौरव्यो रथमारोपयत् स्वकम् ॥ १९॥

आमन्त्र्य प्रययौ क्षिप्रं भीष्मो वै जनमेजय ॥ २०

ततस्ते पार्थिवास्सर्वे समुत्पतुरमर्षिताः ।
संस्पृशन्तश्शनैर्बाहून् सन्दश्य दशनच्छदान् ॥ २१

तेषामाभरणान्याशु कवचानि महान्ति च ।
आमुञ्चतां च वर्माणि संभ्रमस्समपद्यत ॥ २२

ताराणामिव संपातो बभूव जनमेजय ।
भूषणानां च हैमानां कवचानां च सर्वशः ॥ २३

वर्मभिर्भूषणैर्मुख्यैः प्रचार्याभिसमन्ततः ।
सक्रोधामर्षजिह्वास्याः कर्षन्तो दशनांस्तदा ॥ २४

सूतोपक्लृप्तान् सुदृढान् सदश्वैरभिचोदितान् ।

रथानास्थाय ते वीरास् सर्वोपकरणान्विताः ॥ २५

प्रयान्तमेकं कौरव्यम् अनुसस्रुरुदायुधाः ॥ २५॥

ततस्समभवद्युद्धं तेषां तस्य च भारत ।

एकस्य च बहूनां च तुमुलं रोमहर्षणम् ॥ २६॥

ते त्विषून् दशसाहस्रांस् तस्मै युगपदक्षिपन् ॥ २७

अप्राप्तान् सोऽच्छिनत् सर्वास् तदद्भुतमिवाभवत् ॥ २७॥

ततस्ते पार्थिवास्सर्वे सर्वतः पर्यवारयन् ।

महता शरवर्षेण वर्षेणेवाम्बुदा गिरिम् ॥ २८॥

तत्तु बाणमयं वर्षं स तेषामावृणोच्छरैः ।

तांश्च सर्वान् महीपालान् प्रत्यविध्यन् त्रिभिस्त्रिभिः ॥ २९॥

तस्यातिपरुषं कर्म लाघवं रथचारणम् ।

रक्षणं चात्मनस्संख्ये शत्रवोऽप्यभ्यपूजयन् ॥ ३०॥

अक्षतः क्षपयित्वाऽन्यान् असंख्येयपराक्रमः ।

आनिनाय स काश्यस्य सुतास्सागरगासुतः ॥ ३१॥

तान्निहत्य रणे सर्वान् सर्वशस्त्रविदां वरः ।

कन्याभिस्सहितो यातो भारतो भारतान् प्रति ॥ ३२॥

ततस्तं पृष्ठतो राजा साल्वानामीश्वरः प्रभुः ।

अभ्याहनदमेयात्मा भीष्मं शान्तनवं रणे ॥ ३३॥

कुञ्जरं जघने निघ्नन् दन्ताभ्यामपरो यथा ॥ ३४

वाशिता समये मत्तो यूथपो बलिनां वरः ।
स्त्रीकाम तिष्ठ तिष्ठेति साल्वश्चाह स पार्थिवः ॥ ३५
साल्वेनैव अमहाबाहुर् अमर्षेणाभिचोदितः ॥ ३५॥
ततस्स पुरुषव्याघ्रो भीष्मः परमकोपनः ।
साल्वराजं सुसंक्रुद्धो न्यवर्तत परन्तपः ॥ ३६॥
क्रोधेन चापि ज्वलितो विधूम इव पावकः ।
दहन् यथा कृष्णगतिः कक्षं वातेरितः प्रभुः ॥ ३७॥
क्षत्रधर्मं समास्थाय अभीतो राजसत्तमः ।
निवर्तयामास रथं भीष्मः प्रहरतां वरः ॥ ३८॥
निवृत्तं तेन तं दृष्ट्वा हतशेषा हि पार्थिवाः ।
प्रेक्षकास्समपद्यन्त भीष्मसाल्वसमागमे ॥ ३९॥
[1]तौ गजाविव निघ्नन्तौ बलिनौ वाशितान्तरे ।
अन्योन्यमभ्यवर्तेतां गोष्ठेष्विव महर्षभौ ॥ ४०॥
ततः [2]क्रुद्धं शान्तनवो दृष्ट्वा तं नृपमागतम् ।
[3]साल्वेश्वरं स राजानं हतः क्रुद्धोऽभ्यचोदयत् ॥ ४१॥
संस्पृशंश्च धनुश्श्रेष्ठं सज्यं कृत्वा नरर्षभः ।
समवस्थाय दुर्धर्षस् सशरस्सशरासनः ॥ ४२॥
अभ्यद्रवत् साल्वपतिं युद्धाय कुरुपुङ्गवः ॥ ४३

---

1. क-ख-ग-घ—गोवृषाविव नर्दन्तौ
2. घ—क्रुद्धः 3. घ—साल्वेश्वराय त्वरितो हयान्

कवची बद्धनिस्त्रिंशस् तलबन्धः प्रतापवान् ।
तिष्ठ तिष्ठेति राजानं साल्वं शान्तनवोऽब्रवीत् ॥ ४४
कन्यार्थं वै ततस्साल्वं प्रावर्तत महाबलः ॥ ४४॥

ततस्तु युद्धमभवत् तदा राजन् स्वयंवरे ।
भीष्मस्य चैव राजर्षेस् साल्वस्य च तथैव च ॥ ४५॥

ततो भीष्मं शान्तनवं शरैश्चावारयत् प्रभुः ।
साल्वराजो नरश्रेष्ठ बह्वशोभत भारत ॥ ४६॥

विव्याथ च तथा भीष्मं वामपार्श्वे स्तनान्तरे ।
त्वरमाणस्तदा काले क्षत्रियर्षभसत्तमः ॥ ४७॥

दृष्ट्वा तु भीष्मं व्राणिनं राज्ञा साल्वेन ते नृपाः ।
विस्मितास्समपद्यन्त साधु साध्विति चाब्रुवन् ॥ ४८॥

लाघवं तस्य ते दृष्ट्वा पृथिव्यां सर्वपार्थिवाः ।
साल्वं संपूजयामासुर् वाग्भिर्नृपतिसत्तमाः ॥ ४९॥

क्षत्रियाणां तु ताश्श्रुत्वा वाचः परपुरञ्जयः ।
क्रुद्धश्शान्तनवस्साल्वं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ५०॥

सारथिं चाब्रवीद्भीष्मो याहि यत्रैष पार्थिवः ।
यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट् ॥ ५१॥

तदस्त्रं वारुणं सम्यग् योजयामास पार्थिवः ।
तेनाश्वांश्चतुरोऽमृद्नात् साल्वराजस्य पार्थिवः ॥ ५२॥

अस्त्रैरस्त्राणि संवार्य भीष्मस्तस्य परन्तपः ।
ततो नृपतिशार्दूलो न्यहनत्तस्य सारथिम् ॥ ५३॥
अस्त्रेण चास्य साल्वस्य न्यहनत्तुरगोत्तमान् ॥ ५४

साल्वस्तु विरथो राजन् हताश्वो हतसारथिः ।
निक्षिप्य च धनुश्श्रीमान् भूमौ तिष्ठदवाङ्मुखः ॥ ५५

कन्याहेतोर्नरश्रेष्ठो भीष्मश्शान्तनवस्तदा ।
विसर्जयामास नृपं जीवन्तं तं नराधिपः ॥ ५६

ततो विजित्य ताः कन्यास् तिस्रो रूपगुणान्विताः ।
प्रययौ हस्तिनपुरं भीष्मश्शान्तनवस्तदा ॥ ५७
कुरुक्षेत्रं पुण्यतमं यत्र राजा स कौरवः ॥ ५७॥
साल्वोऽपि राजा स्वं राष्ट्रं संप्राप्तो न चिरादिव ॥ ५८

राजानस्तत्र ये चासन् स्वयंवरदिदृक्षवः ।
तेऽपि स्वान्येव राष्ट्राणि हतशेषाः प्रचक्रमुः ॥ ५९
ते वनानि च रम्याणि शैलांश्च सरितस्तथा ।
अतिक्रम्य च राजानस् [1]स्वं स्वं राज्यं प्रचक्रमुः ॥ ६०
भीष्मस्स्वयंवरे कन्या विजित्य कुरुसत्तमः ।
वनानि सरितश्चापि शैलांश्च विविधद्रुमान् ॥ ६१
अक्षतः [2]क्षपयित्वाऽरींस् तानसंख्येयविक्रमः ।

---

1. अ—स्वयं राज्यं
2. क-ख-ग—कम्पयित्वा; घ—क्षतयित्वा

सोऽचिरेणैव कालेन अतिक्रम्य नराधिपः ॥ ६२

आनयामास काश्यस्य सुतास्सागरगासुतः ॥ ६२॥

तास्स्नुषा इव धर्मात्मा भगिनीरनुजा इव ।

यथावद्दुहितृश्चैव प्रगृह्य प्रययौ कुरून् ॥ ६३॥

स तु धर्मेण धर्मज्ञः कर्म कृत्वाऽतिमानुषम् ।

तास्सर्वा गुणसंपन्ना भ्राता भ्रात्रे यवीयसे ॥ ६४॥

भीष्मो विचित्रवीर्याय विक्रम्य मुदितो ददौ ॥ ६५

स तु धर्मेण धर्मज्ञो विधिदृष्टेन कर्मणा ।

भ्रातुर्विचित्रवीर्यस्य विवाहमुपचक्रमे ॥ ६६

सत्यवत्यास्समीपेऽथ कृत्वा नियममात्मवान् ।

विवाहं कारयिष्यन्तं भीष्मं काशीपतेस्सुता ॥ ६७

ज्येष्ठा तासामिदं वाक्यम् अब्रवीज्जनसंसदि ॥ ६७॥

अंबा—

मया साल्वपतिः पूर्वं मनसा हि वृतः पतिः ॥ ६८

तेन चास्मि वृता राजंस् तथाकामश्च मे पतिः ॥ ६८॥

मया वरयितव्योऽभूत् साल्वस्तस्मिन् स्वयंवरे ॥ ६९

एतद्विज्ञाय धर्मज्ञ धर्मतस्त्वं समाचर ॥ ६९॥

वैशम्पायनः—

एवमुक्तस्ततो भीष्मः कन्यया विप्रसंसदि ।

चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ॥ ७०॥
अन्यसक्ता त्वियं कन्या ज्येष्ठा क्षत्रे मया जिता ॥ ७१

वाचा दत्ता मनोदत्ता कृतमङ्गलवाचना ।
निर्दिष्टा तु परस्यैव सा वर्ज्या परचिन्तनी ॥ ७२

इत्युक्त्वा चानुमान्यैव भ्रातरं स्ववशानुगम् ।
स विनिश्चित्य तैस्सार्धं ब्राह्मणैर्धर्मकोविदैः ॥ ७३

अनुजज्ञे ततो ज्येष्ठाम् अम्बां काशीपतेस्सुताम् ॥ ७३॥

अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ॥ ७४॥

तयोः पाणी गृहीत्वा स रूपयौवनदर्पितः ।
विचित्रवीर्यो धर्मात्मा नैनामैच्छत् कथञ्चन ॥ ७५॥

अम्बामन्यस्य कीर्त्यन्तीं अब्रवीच्चारुदर्शनाम् ॥ ७६

विचित्रवीर्यः—

[1]प्रत्यक्षफल एवैष कामोऽसाधु निरर्थकः ॥ ७६॥
[2]परतन्त्रोपभोगे माम् आर्य नायोक्तुमर्हसि ॥ ७७

भीष्मः—

प्रतिष्ठितश्शन्तनोर्वै तात ! यस्य त्वमन्वयः ।

---

1. घ—स पापफल एवैष कामस्साधु निरर्थकः ।
2. घ—परतन्त्रोपभोगे मां नार्यो योक्तुमिहार्हसि ।

अकामवृत्तो धर्मात्मा साधु मन्ये मतं तव ॥ ७८

इत्युक्त्वाऽम्बां समालोक्य विधिवद्वाक्यमब्रवीत् ॥ ७८॥

विसृष्टा ह्यसि गच्छ त्वं यथाकाममनिन्दिते ॥ ७९

नानियोज्ये समर्थोऽहं नियोक्तुं भ्रातरं प्रियम् ।

अन्यभावगतां चापि को नारीं वासयेद्गृहे ॥ ८०

अतस्त्वां न नियोक्ष्यामि अन्यकामासि गम्यताम् ॥ ८०॥

अहमप्यूर्ध्वरेता वै निवृत्तो दारकर्मणि ॥ ८१

न संबन्धस्तदावाभ्यां भाविता वै कथञ्चन ॥ ८१॥

वैशंपायनः—

इत्युक्ता सा तदा तत्र सखीभिः परिपालिता ।

निर्दिष्टा हि शनै राजन् साल्वराजपुरं प्रति ॥ ८२॥

अथाम्बा साल्वमासाद्य साऽब्रवीन्मनसा वृता ॥ ८३

अम्बा—

पुरा निर्दिष्टभावा त्वाम् आगतास्मि वरानन ।

देवव्रतं समुत्सृज्य सानुजं पुरुषर्षभ ॥ ८४

प्रतिगृह्णीष्व भद्रं ते विधिवन्मां समुद्यताम् ॥ ८४॥

वैशम्पायनः—

एवमुक्तस्तु साल्वोऽपि प्रहसन्निदमब्रवीत् ॥ ८५

साल्वः—

निर्जितासीह भीष्मेण मां विनिर्जित्य राजसु ।

अन्येन निर्जितां भद्रे विसृष्टां तेन चालयात् ॥ ८६

न गृह्णामि वरारोहे तत्र चैव तु गम्यताम् ॥ ८६॥

वैशंपायनः—

इत्युक्ता सा समागम्य भीष्मं पुनरथाब्रवीत् ॥ ८७

अम्बा तत्राब्रवीद्भीष्मं त्वयाऽहं सहसा वृता ॥ ८७॥

क्षत्रधर्ममवेक्षस्व भर्ता त्वं मम धर्मतः ॥ ८८

[1]ऊर्ध्वरेतास्त्वहं भद्रे विवाहविमुखोऽभवम् ।
तत्त्वेन साल्वं गच्छ त्वं यः पुरा मनसा वृतः ॥ ८९

अन्यसक्तां किमर्थं त्वम् आत्मानमवदः पुरा ।
अन्यसक्तां वधूं कन्यां वासयेत् स्वगृहे न हि ॥ ९०

नाहमुद्वाहयिष्ये त्वा मम भ्रात्रे यवीयसे ।
विचित्रवीर्याय शुभे यथेष्टं गम्यतामिति ॥ ९१

---

1. क-ख-ग—यां यः स्वयंवरे कन्यां निर्जयेच्छौर्यसम्पदा ।
राज्ञस्सर्वान् विनिर्जित्य स तामुद्वाहयेद्ध्रुवम् ॥
अतस्त्वमेव भर्ता मे त्वयाहं निर्जिता यतः ।
तस्मादुद्वहस्व मां भीष्म निर्जितां संसदि त्वया ॥
ऊर्ध्वरेतास्त्वहमिति प्रत्युवाच पुनः पुनः ।
भीष्मं सा चाब्रवीदम्बा यथाऽजैषीस्तथा कुरु ।
एवमन्वगमद्भीष्मं षट् समाः पुष्करेक्षणा ॥
[अधिकः पाठः]

भूयस्साल्वं समभ्येत्य राजन् गृह्णीष्व मामिति ॥ ९१॥
नाहं गृह्णाम्यन्यजिताम् इति साल्वनिराकृताम् ।
ऊर्ध्वरेतास्त्वहमिति प्रत्युवाच पुनः पुनः ॥ ९२॥
पुनस्सा चाब्रवीद्भीष्मं यथाऽजैषीस्तथा कुरु ॥ ९३
अम्बा भीष्मं पुनस्साल्वं भीष्मं साल्वं पुनः पुनः ।
एवमन्वगमद्भीष्मं षट् समाः पुष्करेक्षणा ॥ ९४
अश्रुभिर् भूमिमुक्षन्ती शोचन्ती तं मनस्विनी ॥ ९४॥
[1]ततोऽन्या द्वादश समा बाहुदामभितो नदीम् ।
पार्श्वे हिमवतो रम्ये तपो घोरं समाददे ॥ ९५॥
संक्षिप्तकरणा तत्र तप आस्थाय सुव्रता ।
पादाङ्गुष्ठेन साऽतिष्ठद् अकम्पन्त ततस्सुराः ॥ ९६॥
तस्यास्तीव्रं तपो दृष्ट्वा सुराणां क्षोभकारणम् ।
विस्मितश्चैव हृष्टश्च तस्यानुग्रहबुद्धिना ॥ ९७॥
अनन्तसेनो भगवान् कुमारस्सर्वतः प्रभुः ॥
मानयन् राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ॥ ९८॥
एषा पुष्करिणी दिव्या यथावत् समुपस्थिता ।

1. ख-ग—पीनोन्नतकुचद्वन्द्वा विशालजघनेक्षणा ।
श्रोणीभारालसगमा राकाचन्द्रनिभानना ।
वर्षत्कादम्बिनीमूर्ध्नि स्फुरन्ती चञ्चलेव सा ।
[अधिकः पाठः]

अम्बे त्वच्छोकशमनी माला भुवि भविष्यति ॥　　९९॥
एतां चैव मया दत्तां यो मालां धारयिष्यति ।
सोऽस्य भीष्मस्य निधने कारणं वै भविष्यति ॥　　१००॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ७ ॥ संभवपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[अस्मिन्नध्याये १००॥ श्लोकाः]

## ॥ सप्तनवतितमोऽध्यायः ॥

अम्बायाश्चरित्रकथनम् ॥ १ ॥

अम्बा—

अन्यपूर्वेति मां साल्वो नाभिनन्दति बालिशः ।
साऽहं धर्माच्च कामाच्च विहीना शोकधारिणी ॥　　१
अपतिः क्षत्रियान् सर्वान् आक्रन्दामि समन्ततः ॥　　१॥
इयं च क्षत्रिया माला या भीष्मं निहनिष्यति ॥　　२
अहं च भार्या तस्य स्यां यो वीरं घातयिष्यति ॥　　२॥

वैशंपायनः—

तस्यां चङ्क्रम्यमाणायां समाः पञ्च गताः पराः ॥　　३
नाभवच्छरणं कश्चित् क्षत्रियो भीष्मजाड्ययात् ॥　　३॥

अगच्छत् सोमकं सा तु पाञ्चालेषु यशस्विनम् ।
सत्यसन्धं महेष्वासं सत्यधर्मपरायणम् ॥ ४॥

सा सभाद्वारमागम्य पाञ्चालैरभिरक्षितम् ।
पाञ्चालराजमाक्रन्दत् प्रगृह्य सुभुजा भुजौ ॥ ५॥

अम्बा—

भीष्मेण हन्यमानां मां मज्जतीमिव च ह्रदे ।
यज्ञसेनाभिधावेह पाणिमालम्ब्य चेश्वर ॥ ६॥

तेन मे सर्वधर्माश्च रतिभोगाश्च केवलाः ।
उभौ च लोकौ कीर्तिश्च समूलौ सफलौ हृतौ ॥ ७॥

क्रोशन्त्येवं न विन्दामि राजन्यं शरणं क्वचित् ॥ ८
किं नु निःक्षत्रियो लोको यत्रानाथोऽवसीदति ॥ ८॥

समागम्य तु राजानो मयोक्ता राजसत्तमाः ।
इक्ष्वाकूणां च ये वृद्धाः पाञ्चालानां च ये मुखाः ॥ ९॥

त्वत्प्रसादाद्विवाहेऽस्मिन् मा धर्मो मा पराजयेत् ।
प्रसीद यज्ञसेनेह गतिर्मे भव सोमक ॥ १०॥

यज्ञसेनः—

जानामि त्वा बोधयामि राजपुत्रि ! विशेषतः ।
यथाशक्ति यथाधर्मं बलं सन्धारयाम्यहम् ॥ ११॥

अन्यस्मात् पार्थिवात्ते यद् भयं स्यात् पार्थिवात्मजे ।

तस्यापनयने हेतुं संविधातुमहं प्रभुः ॥ १२॥

न हि शान्तनवस्याहं महास्त्रस्य प्रहारिणः ।
ईश्वरः क्षत्रियाणां हि बलं धर्मोऽनुवर्तते ॥ १३॥

[1]सा साधु व्रज कल्याणि! न नो वैरं प्रसञ्जय ॥ १४

एवमेव त्वया कार्यम् इति मे प्रतिकाङ्क्षसे ।
न तु तस्यान्यथाभावो दैवमेतन्न मानुषः ॥ १५

अम्बा—

यश्चैनां स्रजमादाय स्वयं[2]कण्ठे प्रमोक्ष्यते ।
स भीष्मं समरे हन्ता मम धर्मप्रणाशनम् ॥ १६

वैशंपायनः—

तां स्रज द्रुपदो राजा कंचित् कालं ररक्ष सः ॥ १६॥

तदा विस्रम्भमास्थाय तूष्णीमेतामुपैक्षत ॥ १७

तां शिखण्डी[3]निबध्नात्तु राजा पितुरजानती ॥ १७॥

---

1. क-ख-ग—सा साधु व्रज कल्याणि न मामभिदहेद्बलात् ।
न प्रत्यगृह्णन् ते सर्वे किमित्येव न वेद्म्यहम् ॥
न तु भीष्मादहं धर्मं शक्तो हातुं कथञ्चन ।
इत्युक्त्वा स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत् ॥
ख्यातां तां सर्वलोकेषु तपसा संशितव्रताम् ।
तामन्वगच्छद्द्रुपदस् सान्त्वञ्जल्पन् पुनः पुनः ॥
स्रजं गृहाण कल्याणि न नो वैरं प्रसञ्जय ।
[अधिकः पाठः]

2. क-ख-ग-घ—वै प्रतिमोक्ष्यते 3. क-ख-ग-घ—ण्डिन्यबध्नात्तु

तां पिता त्वत्यजच्छीघ्रं त्रस्तो भीष्मस्य किल्बिषात् ॥ १८
इषीकं ब्राह्मणं भीता सा ह्यगच्छत्तपस्विनम् ।
गङ्गाद्वारि तपस्यन्तं तुष्टिहेतोस्तपस्विनी ॥ १९
उपचाराभितुष्टस्ताम् अब्रवीदृषिसत्तमः ॥ १९॥
गङ्गाद्वारे विभजनं भविता न चिरादिव ॥ २०
तत्र गन्धर्व[1]राजं तु तं पुरुप्रियदर्शनम् ।
आराधयितुमीहस्व सम्यक् परिचरेर्विभुम् ॥ २१
अहमप्यत्र साचिव्यं कर्तास्मि तव शोभने ॥ २१॥
सा तदाचर भद्रं ते स ते श्रेयो विधास्यति ॥ २२
ततो विभजनं तत्र गन्धर्वाणामपश्यत ।
तत्र द्वाववशिष्येतां गन्धर्वाणां मितौजसौ ॥ २३
तयोरेकस्समीक्ष्यैनां स्त्रीबुभूषुरुवाच ह ॥ २३॥
इदं गृह्णीष्व पुंलिङ्गं वृणे स्त्रीलिङ्गमेव ते ॥ २४
नियमं चक्रतुस्तत्र स्त्री पुमांश्चैव तावुभौ ॥ २४॥
ततः पुमान् समभवच्च् छिखण्डी परवीरहा ॥ २५
स्त्री तु भूत्वाऽपचक्राम स गन्धर्वो मुदा युतः । २५॥
लब्ध्वा तु महतीं प्रीतिं याज्ञसेनिर्महायशाः ।
ततो बुद्बुदकं हत्वा पुनरस्त्राणि सोऽकरोत् ॥ २६॥

---

1. क-ख-ग-घ—राजानं तुम्बुरुं प्रियदर्शनम्

तत्र चास्त्राणि दिव्यानि कृत्वा स सुमहामतिः ।
स्वदेशमभिसंपेदे पाञ्चालं कुलनन्दनः ॥ २७॥

सोऽभिवाद्य पितुः पादौ महेष्वासः कृताञ्जलिः ।
उवाच भवता भीष्मान्न भेतव्यं कथञ्चन ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ७ ॥ संभवपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

---

## ॥ अष्टनवतितमोऽध्यायः ॥

---

विचित्रवीर्यविवाहः ॥ १ ॥ तन्मरणं ॥ २ ॥ अम्बिकाम्बालिकयोः पुत्रोत्पत्तये भीष्मेण तदनभ्युपगमः ॥ ३ ॥

---

वैशम्पायनः—

अम्बायां निर्गतायां तु भीष्मश्शान्तनवस्तदा ।
न्यायेन कारयामास राज्ञो वैवाहिकीं क्रियाम् ॥ १

अम्बिकाम्बालिके चैव परिणीयाग्निसंनिधौ ।
तयोः पाणी गृहीत्वा तु कौरव्यो रूपदर्पितः ॥ २
विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत ॥ २॥

ते चापि वनिते श्लाध्ये नीलकुञ्चितमूर्धजे ।

रक्ततुङ्गनखे श्यामे पीनश्रोणिपयोधरे ॥ ३॥

आत्मरूपानुरूपो नौ लब्धः पतिरिति स्म ते ।
विचित्रवीर्यं कल्याणं पूजयामासतुस्तु ते ॥ ४॥

अन्योन्यं प्रीतिसक्ते च एकभावाविव स्थिते ॥ ५

स चापि रूपसदृशो देवसत्वपराक्रमः ।
[1]सर्वासामेव नारीणां चित्तप्रमथनोऽभवत् ॥ ६

ताभ्यां सह समासक्तो विहरन्नान्यचेतसा ।
[2]विचित्रवीर्यस्तरुणो यक्ष्माणं समपद्यत ॥ ७

सुहृदां यतमानानाम् आप्तैस्सह चिकित्सकैः ।
जगामास्तमिवादित्यः पौरवो यमसादनम् ॥ ८

तस्य प्रेतस्य कार्याणि सम्यक् सर्वाण्यकारयत् ।
राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः ॥ ९

ऋत्विग्भिस्सहितो भीष्मस् सर्वैश्च कुरुजाङ्गलैः ॥ ९॥

ततस्सत्यवती दीना कृपणा पुत्रगर्धिनी ॥ १०

कृत्वा प्रेतस्य कृत्यानि स्नुषाभ्यां सहिता तदा ।
माता सत्यवती भीष्मम् उवाच वदतां वरम् ॥ ११

---

1. घ—ते चापि वनिते श्लाघ्ये नीलकुञ्चितमूर्धजे । [अधिकः पाठः]
2. घ—विचित्रवीर्यो धर्मात्मा कामात्मा चैव भारत ।
स्त्रीसक्तस्तरुणो राजा यक्ष्मणा समपद्यत ॥ [अधिकः पाठः]

धर्मं च [1]पितृवंशं च शोभनं परमास्पदम् ।
सत्यवत्यभिसंप्रेक्ष्य भीष्मं वचनमब्रवीत् ॥ १२

दुःखार्दिता तु शोकेन मज्जतीव च सागरे ।
शन्तनोर्धर्मनित्यस्य [2]पौरवस्य यशस्विनी ॥ १३

सत्यवती—

त्वयि कीर्तिश्च पिण्डश्च सन्तानश्च प्रतिष्ठितः ॥ १३॥
भ्राता विचित्रवीर्यस्ते भूतानामन्तमेयिवान् ॥ १४

यथा कर्म शुभं कृत्वा स्वर्गे च गमनं ध्रुवम् ।
यथा चायुर्ध्रुवं सत्ये त्वयि धर्मस्तथा ध्रुवः ॥ १५

वेत्थ धर्मस्य तत्त्वं च सामान्यस्येतरस्य च ।
विविधाश्च श्रुतीर्वेत्थ वेत्थ शास्त्राणि सर्वशः ॥ १६

व्यवसायं च धर्मेषु कुलाचारं च लक्षये ।
प्रतिपत्तिं च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ॥ १७

तस्मात् सुभृशमैश्वर्यं त्वयि धर्मभृतां वर ।
वक्ष्यामि त्वां यथा प्राज्ञ! तच्छ्रुत्वा कर्तुमर्हसि ॥ १८

मम पुत्रस्तव भ्राता यवीयान् कुलवंशभृत् ।
बाल एव गतस्स्वर्गम् अपुत्रः पुरुषर्षभ ॥ १९

---

1. क-ख-ग-घ—मातृवंशंच शोभनम्
2. क-ख-ग—कौरव्यस्य महात्मनः। घ—कौरव्यस्य यशस्विनः

[1]तस्य देव्यौ भगिन्यौ ते अम्बिकाम्बालिके उभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ २०

धर्ममेतत्परं ज्ञात्वा सन्तानाय कुलस्य च ।
तयोरुत्पादयापत्यं सन्तानकुलवर्धनम् ॥ २१
मन्नियोगान्महाभाग धर्म्यं कर्तुमिहार्हसि ॥ २१॥
राजन् राज्येऽभिषिञ्चस्व भारताननुशाधि च ॥ २२
दारांश्च कुरु [2]कल्याण धर्मस्ते ह पितामहान् ॥ २२॥

वैशम्पायनः—

तथोच्यमानो मात्रा च सुहृद्भिश्च परन्तपः ।
प्रत्युवाच स धर्मात्मा धर्ममेव ततः परम् ॥ २३॥

भीष्मः—

असंशयं परो धर्मस् त्वया मातः प्रकीर्तितः ॥ २४
राज्यार्थे नाभिषिञ्चेयं नोपेयां जातु मैथुनम् ॥ २४॥
भवत्या मतमाज्ञाय कृतमेतद्व्रतं मया ॥ २५
जानीषे यत्तदा वृत्तं शुल्कहेतोस्तदन्तरे ॥ २५॥
स सत्यवति सत्येन पुनरेव ब्रवीमि ते ॥ २६
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ॥ २६॥

---

1. क-ख-ग-घ—तस्य चेमौ महिष्यौ द्वे काशिराजसुते उभे ।
2. क-ख-ग-घ—कौरव्य मा त्वं हिंसीः पितामहान्

यद्वा ह्यधिकमेताभ्यां न तु सत्यं कथञ्चन ॥ २७

त्यजेच्च पृथिवी गन्धम् आपश्च रसमात्मजम् ।
[1]तेजस्तथा त्यजेद्रूपं वायुस्स्पर्शगुणं त्यजेत् ॥ २८

प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्णताम् ।
त्यजेच्छब्दं तथाऽऽकाशं चन्द्रश्शीतांशुतां त्यजेत् ॥ २९

वृत्रहा विक्रमं जह्याद् गर्भं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवस्येयं कथंचन ॥ ३०

तन्नजात्वन्यथा कुर्यां लोकानामपि संक्षये ।
अमरत्वस्य वा हेतोस् त्रैलोक्यसदनस्य वा ॥ ३१

वैशम्पायनः—

तथोच्यमाना पुत्रेण धर्मज्ञेन महात्मना ।
माता सत्यवती भीष्मं पुनरेवाभ्यभाषत ॥ ३२

सत्यवती—

अनुजानामि सर्वं तन्मदर्थं यदभाषथाः ।
[2]आपद्धर्ममवेक्षस्व वह पैतामहीं धुरम् ॥ ३३

यथा तु नः कुलं चैव लोकश्च न पराभवेत् ।

---

1. क-ख-ग-घ—ज्योतिस्तथा

2. क-ख-ग-घ—जानामि त्वयि सर्वज्ञ सत्यं सत्यवतां वर ।
इच्छन् सृजेथास्त्रीन् लोकान् अन्यांश्च स्वेन तेजसा ॥
जानामि चैव सत्यं तन्मदर्थं यदभाषथाः ।
[अधिकः पाठः]

सुहृदश्च सकामास्ते तथा त्वं कर्तुमर्हसि ॥ ३४
आत्मनश्च हितं तात प्रियं च मम भारत ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

॥ ७ ॥ संभवपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[अस्मिन्नध्याये ३४॥ श्लोकाः]

## ॥ एकोनशततमोऽध्यायः ॥

दीर्घतमोनामकमुनेरुपाख्यानम् ॥ १ ॥

वैशम्पायनः—

तां तु लालपतीं दृष्ट्वा कृपणां पुत्रगर्धिनीम् ।
धर्मादपेतं ब्रुवतीं भीष्मो वचनमब्रवीत् ॥ १

भीष्मः—

क्षत्रधर्ममवेक्षस्व मा नस्सर्वान् व्यनीनशः ॥ १॥
धारणेन व्रतस्याहुः क्षत्रियाः परमां धृतिम् ॥ २

शन्तनोरपि सन्तानो यथा स्यात् पुनरेव हि ।
क्षत्रधर्मं प्रवक्ष्यामि क्षत्रियाणां पुरातनम् ॥ ३

श्रुत्वा तं प्रतिपद्येथाः प्राज्ञैस्सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर् लोकधर्ममवेक्ष्य च ॥ ४

जामदग्न्येन रामेण निशाम्य वचनं पितुः ।

पुरा परशुहस्तेन हैहयाधिपतिर्हतः ॥ ५

क्रुद्धेन च महाप्राज्ञ हैहयस्य महात्मनः ।
शतानि दश बाहूनां निकृत्तान्यर्जुनस्य वै ॥ ६

पुनश्च धनुरादाय महास्त्राणि विमुञ्चता ।
निर्दग्धं क्षत्रमेकेन रामेण जयता महीम् ॥ ७

एवमुच्चावचैरस्त्रैर् भार्गवेण महात्मना ।
त्रिस्सप्तकृत्वो रोषेण कृता निःक्षत्रिया मही ॥ ८

ततस्संभूय संभूय क्षत्रियाभिस्समन्ततः ।
उत्पादितान्यपत्यानि ब्राह्मणेभ्य इति श्रुतम् ॥ ९

पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ।
धर्मं मनसि संस्थाप्य ब्राह्मणांस्तास्समभ्ययुः ॥ १०

लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥ १०॥

अथोचथ्य इति ख्यात आसीद्धीमान्महानृषिः ।
भार्या च ममता नाम बभूवास्य महात्मनः ॥ ११॥

उचथ्यस्य यवीयांस्तु पुरोधा यो दिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतां सोऽभ्यमन्यत ॥ १२॥

उवाच ममता तं तु देवरं वदतां वरम् ॥ १३

ममता—

अन्तर्वत्न्यस्मि ते भ्रात्रा ज्येष्ठेनारम्यतामिति ।

अयं च मे महाभाग कुक्षावेव बृहस्पते ॥ १४

औचथ्ये गर्भ आदत्ते षडङ्गं वेदमुत्तमम् ।

अमेयरेतास्त्वं चापि नूनं भवितुमर्हसि ॥ १५

तस्मादेवं गते कार्ये यथा युक्तं तथा कुरु ॥ १५॥

वैशम्पायनः—

एवमुक्तस्तथा सम्यग् बृहत्तेजा बृहस्पतिः ।

कामात्मानं महात्माऽपि नात्मानं सोऽभ्यधारयत् ॥ १६॥

स बभूव ततः कामी तया सार्धमकामया ।

उत्सृजन्तं तु तत्तेजो गर्भस्थो ह्यभ्यभाषत ॥ १७॥

कनीयांस्तात नैवेह संभवो विद्यते त्वया ।

अमोघशुक्रस्त्वं चापि पूर्वं चाहमिहागतः ॥ १८॥

शशाप च ततः क्रुद्ध एवमुक्तो बृहस्पतिः ।

उचथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ॥ १९॥

बृहस्पतिः—

यस्मात् त्वमीदृशे काले सर्वभूतेप्सिते सति ।

एवमात्थ यदा तस्मात् तमो दीर्घं प्रवेक्ष्यसि ॥ २०॥

ततो दीर्घतमा नाम शापादृषिरजायत ।

बृहस्पतेर्बृहत्कीर्तेर् बृहस्पतिरिवौजसा ॥ २१॥

जात्यन्धो वेदवित् प्राज्ञः पत्नीं लेभे स्वविद्यया ।

तरुणीं रूपसंपन्नां प्रद्वेषीं नाम ब्राह्मणीम् ॥ २२॥

ऋषेरुचथ्यस्य महान् सन्तानकुलवृद्धये ।
स पुत्राञ्जनयामास गौतमादीन् महायशाः ॥ २३॥

पुत्रलाभाच्च सा पत्नी न तुतोष पतिं तदा ।
प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत् ॥ २४॥

प्रद्विषन्ती—
पतिर्भार्यानुभरणाद् भर्ता चेति प्रकीर्त्यते ॥ २५
अहं त्वा भरणं कृत्वा जात्यन्धं ससुता सदा ।
नित्यकालं श्रमेणार्ता न भरेयं महातपः ॥ २६

भीष्मः—
तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः ।
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा ॥ २७

दीर्घतमाः—
[1]नीयतां क्षत्रियकुले धनार्थी त्वं भविष्यसि ॥ २७॥

पत्नी—
त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारकम् ।
यथेष्टं कुरु विप्रेन्द्र न भरेयं पुरा यथा ॥ २८॥

दीर्घतमाः—
अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ।
एक एव पतिः पत्न्या यावज्जीवं परायणम् ॥ २९॥

मृते जीवति वा तस्मिन् न परं प्राप्नुयान्नरम् ।

1. अ—नियतां

अभिगम्य परं नारी पतिष्यति न संशयः ॥ ३०॥

अपतीनां तु नारीणाम् अद्यप्रभृति पातकम् ।
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ॥ ३१॥

अकीर्तिः परिवादाश्च नित्यकालं भवन्तु वै ॥ ३२

भीष्मः—

तस्य तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता ।
गङ्गायां नीयतामेष पुत्रा इत्येवमब्रवीत् ॥ ३३

लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
काष्ठे समृद्धे प्रक्षिप्य गङ्गायां समवासृजन् ॥ ३४

न स्यादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म वै ॥ ३४॥

कर्मण्यथ ततः क्रूरे तेषां बुद्धिरजायत ॥ ३५

चिन्तयित्वा ततः क्रूराः प्रतिजग्मुर्यथा गृहान् ॥ ३५॥

सोऽनुस्रोतस्तदा राजन् प्लवमानो मुनिस्तदा ।
जगाम सुबहून् देशान् अन्धस्तेनोडुपेन ह ॥ ३६॥

तं तु राजा बली नाम सर्वधर्मविशारदः ।
अपश्यन्मज्जनगतं स्रोतसोऽभ्याशमागतम् ॥ ३७॥

जग्राह चैनं धर्मात्मा बली सत्यपराक्रमः ॥ ३८

ज्ञात्वा चैनं वरं वव्रे पुत्रार्थे मनुजर्षभ ॥ ३८॥

तं पूजयित्वा राजर्षिर् विश्रान्तं मुनिमब्रवीत् ॥ ३९

राजा—

सन्तानार्थं महाभाग भार्यायां मम मानद ।
पुत्रान् धर्मार्थकुशलान् उत्पादयितुमर्हसि ॥ ४०

भीष्मः—

एवमुक्तस्स तेजस्वी तं तथेत्युक्तवानृषिः ॥ ४०॥
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥ ४१

अन्धं वृद्धं तु तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ ४२

तस्यां कक्षीवदादीन् स शूद्रयोनावृषिर्वशी ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ ४३

कक्षीवदादीन् सर्वांस्तान् साङ्गान् वेदानधीयतः ।
[1]उवाच तमृषिं राजा ममैत इति वीर्यवान् ॥ ४४

नेत्युवाच महर्षिस्तं ममैत इति चाब्रवीत् ॥ ४४॥

शूद्रयोनौ मया ह्यिमे जाताः कक्षीवदादयः ॥ ४५

अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव ।
[2]अवमत्य ददौ मूढा शूद्रां धात्रेयिकां हि मे ॥ ४६

ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।

---

1. क-ख-ग-घ—मुदा च तान् बली राजा दृष्ट्वा कक्षीवदादिकान् ।
[अधिकः पाठः]

2. क-ख-ग-घ—प्राहिणोदवमानान्मे शूद्रां धात्रेयिकां नृप ।

बली सुदेष्णां भार्यां च तस्मै तां प्राहिणोत् पुनः ॥ ४७

तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।

दीर्घतमाः—

भविष्यति कुमारस्ते तेजस्वी सत्यवागिति ॥ ४८

तत्राङ्गो नाम राजर्षिस् सुदेष्णायामजायत ॥ ४८॥

एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ।
जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ॥ ४९॥

[1]एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनशततमोऽध्याय ॥ ९९ ॥

॥ ७ ॥ संभवपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[अस्मिन्नध्याये ५० श्लोका ]

---

1. क-ख-ग—तस्माद्भरतवंशस्य पुनस्सन्तानवृद्धये ।
हेतुं वक्ष्याम्यहं सम्यङ् निर्दोषं नात्र संशयः ॥
ब्राह्मणो गुणवान् कश्चिद्धनेनाप्युपमन्त्र्यताम् ।
विचित्रवीर्यभार्यायां योऽस्यामुत्पादयेत्प्रजा ॥
[अधिकः पाठः]

## ॥ शततमोऽध्यायः ॥

सत्यवत्याः भीष्मेण सह सन्तानार्थं संवादः ॥ १ ॥

वैशंपायनः—

भीष्मस्य वचनं श्रुत्वा धर्महेत्वर्थसंहितम् ।
माता सत्यवती भीष्मं पुनरेवाभ्यभाषत ॥ १

सत्यवती—

औचथ्यमधिकृत्येदम् अङ्ग च यदुदाहृतम् ।
पौराणश्रुतिरस्त्येषां प्राप्तकालमिदं कुरु ॥ २

त्वं हि [1]पुत्रः कुलस्यास्य ज्येष्ठश्श्रेष्ठश्च भारत ।
यथा च ते पितुर्वाक्यं मम [2]कुर्यास्तथाऽनघ ॥ ३

मम पुत्रस्तव भ्राता यवीयान् स प्रियश्च ते ।
बाल एव गतस्स्वर्गं भरतो भरतर्षभ ॥ ४

इमे महिष्यौ तस्येह काशिराजसुते [3]उभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ ५

[4]तमेतं परमं ज्ञात्वा सन्तानाय कुलस्य च ।
आभ्यां मम नियोगात् त्वं धर्मं चरितुमर्हसि ॥ ६

---

1. क-ख-ग-घ—पुत्र
2. क-ख-ग घ—कार्यं तवानघ
3. घ—शुभे
4. क-ख-ग-घ—धर्ममेतं परं

भीष्मः—

असंशयं परो धर्मस् त्वया मातः प्रकीर्तितः ।
त्वमप्येतां प्रतिज्ञां तु वेत्थ या[1]परमा मयि ॥ ७

जानीषे यत्तदा वृत्तं शुल्कहेतोस्त्वदन्तरे ।
तत् सत्यवति सत्यं वै पुनरेव ब्रवीमि ते ॥ ८

[2]तन्मया नान्यथा कार्यं लोकानामपि संक्षये ॥ ८॥

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाऽभ्यधिकमेताभ्यां न च सत्यं परित्यजे ॥ ९॥

त्यजेच्च पृथिवी गन्धम् आपश्च रसमुत्तमम् ।
ज्योतिश्च परमं रूपं वायुः स्पर्शगुणं त्यजेत् ॥ १०॥

त्यजेच्च घोषमाकाशं सोमश्शीतत्वमुत्सृजेत् ।
प्रभां समुत्सृजेदर्को धूमकेतुरथोष्णताम् ॥ ११॥

[3]वृत्रहा विक्रमं जह्याद् धर्मं जह्यात्तु धर्मराट् ॥ १२

अमरत्वस्य वा हेतोस् त्रैलोक्यसदनस्य वा ।
उत्सृजेयमहं प्राणान् न तु सत्यं कथञ्चन ॥ १३

सत्यवती—

जानामि [4]त्वयि धर्मज्ञ सत्यं सत्यपराक्रम ।
इच्छेस्त्वमिह लोकांस्त्रीन् सृजेरन्यानरिन्दम ॥ १४

---

1. क-ख-ग—मयि वर्तते 2 क-ख-ग-घ—तन्न जात्वन्यथा कुर्यां
3. अ-क—पु 4 क-ख-ग—तव

यथा तु वः कुलं चैव [1]धर्मं च न पराभवेत् ।
सुहृदश्च [2]प्रभातास्स्युस् तथा त्वं कर्तुमर्हसि ॥ १५

भीष्मः—

त्वमेव कुलवृद्धाऽसि गौरवं च परं त्वयि ।
सोपायं कुलसन्ताने [3]वक्तुमर्हसि नः परम् ॥ १६
स्त्रियो हि परमं गुह्यं धारयन्ति [4]कुले कुले ॥ १६॥
पुरु[5]षं चापि मायाभिर् बह्वीभिरुपगृह्णते ॥ १७
सा सत्यवति संपश्य [6]कर्म सत्यपरायणे ।
यथा न जह्यां सत्यं च न सीदेच्च कुलं हि नः ॥ १८

वैशंपायनः—

ततस्सत्यवती भीष्मं वाचा वै सज्जमानया ।
प्रवेपमाना सव्रीलम् इदं वचनमब्रवीत् ॥ १९

सत्यवती—

सत्यमेतन्महाबाहो यदात्थ प्रमदां प्रति ।
[7]विश्वासं ते प्रवक्ष्यामि सन्तानाय कुलस्य ते ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ७ ॥ संभवपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. क-ख-ग—तद्धर्मश्च　घ—चैव धर्मश्च
2. क-ख-ग—सुहृष्टास्स्युः　3. घ—वेत्तुं　4. ख-ग—सदा
5. क-ख-ग-घ—षां श्चापि　6. क-ख-ग—धर्मं
7. क-ख-ग—विश्वासात्ते

## ॥ एकोत्तरशततमोऽध्यायः ॥

भीष्मं प्रति सत्यवत्या कन्यात्वावस्थायां स्वस्मिन् व्यासजन्मकथनम् ॥ १ ॥ तस्याः व्यासेन संवादः ॥ २ ॥ अम्बिकाम्बालिकयोर्व्यासेन पुत्रोत्पादनाङ्गीकारः ॥ ३ ॥

---

वैशंपायनः—

एवमुक्त्वा तदा भीष्मं तन्माता प्रत्यभाषत ॥

सत्यवती—

रोचते मे वचस्तुभ्यं ममापि वचनं शृणु ।
न च शक्यमनाख्यातुम् आपद्धीयं तथाविधा ॥ १॥

त्वमेव नः कुले धर्मस् त्वं सत्यं त्वं गतिः प्रभो ।
यत् त्वं वक्ष्यासि तत् कार्यम् अस्माभिरिति मे मतिः ॥ २॥

तस्मान्निशम्य वाक्यं मे [1]वद त्वं यदनन्तरम् ॥ ३

शृणु भीष्म वचो मह्यं धर्मार्थसहितं हितम् ।
न च विस्रम्भकथितं भवान् सूचितुमर्हति ॥ ४

यस्तु राजा वसुर्नाम श्रुतस्ते भरतर्षभ ।
तस्य शुक्लादहं मत्स्याद् धृता कुक्षौ पुरा किल ॥ ५

मातरं मे जलाद्धृत्वा दाशः परमधर्मवित् ।
मां तु स्वगृहमानीय दुहितृत्वे ह्यकल्पयत् ॥ ६

---

1. क-ख-ग-घ—कुरुष्व

धर्मयुक्तस्य धर्मेण पिता चासीत्ततो मम ॥ ६॥
सा कदाचिदहं तत्र गता प्रथमयौवना ॥ ७
अथ धर्मभृतां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं तात तरिष्यन् यमुनां नदीम् ॥ ८
स तार्यमाणो यमुनां मामुपेत्याब्रवी[1]त्तदा ।
सान्त्वपूर्वं [2]महाभागः कामार्तो मधुरं [3]बहु ॥ ९
उक्त्वा जन्म कुले [4]चैव नासि दाशसुता इति ॥ ९॥
[5]तमहं शापभीता च पितुर्भीता च भारत ।
वरैरसुलभैश्चाहं प्रत्यादातुं प्रचक्रमे ॥ १०॥
अभिभूय स मां बालां तेजसा वशमानयत् ॥ ११
[6]तमसा लोकमावृत्य नौगतामेव भारत ।
मत्स्यगन्धो महानासीत् पुरा मम जुगुप्सितः ॥ १२

---

1. क-ख-ग—द्वचः । घ—न्मुनिः । 2 क-ख-ग-घ—मुनिश्रेष्ठः
3. क-ख-ग-घ—वचः । 4. क-ख-ग—मह्यं । घ—लं मह्यं
5. क-ख-ग-घ—आलोक्य च दिशश्चाहं प्रत्याख्यातुं प्रचक्रमे ।
प्रेक्ष्य तांस्तु महाभागान् परे पारे ऋषीन् स्थितान् ॥
यमुनातीरविन्यस्तान् प्रदीप्तानिव पावकान् ।
पुरस्तादरुणश्चैव तरुणस्संप्रकाशते ॥
येनैषा ताम्रवस्त्रे च द्यौर्भूता प्रविजृम्भिता ।
उक्तमात्रो मया तत्र नीहारमसृजद्विभुः ॥
[अधिकः पाठः]
6. ख-घ—पराशरस्सत्यधृतिर्द्वीपे च यमुनाम्भसि । [अधिकः पाठः]

तमपास्य शुभं गन्धम् इमं प्रादात् स मे मुनिः ॥ १२॥

ततो मामाह स मुनिर् गर्भं उत्सृज्यतामयम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥ १३॥

[1]पाराशर्यो महायोगी स बभूव [2]महामतिः ।
सद्योत्पन्नस्स तु महान् सह पित्रा यतो गतः ॥ १४॥

कन्यापुत्रो मम पुरो द्वैपायन इति स्मृतः ॥ १५

यो व्यस्य वेदांश्चतुरस् तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमागतः ॥ १६

सत्यवादी शमपरस् तपसा दग्धकिल्बिषः ।
स नियुक्तो मया व्यक्तं त्वया चाप्यमितद्युते ॥ १७

भ्रातुः क्षेत्रे तु कल्याणम् अपत्यं जनयिष्यति ॥ १७॥

स हि मामुक्तवांस्तत्र स्मर कार्येषु मामिति ॥ १८

---

1. क-ख-ग-घ—कन्यात्वं च ददौ प्रीतः पुनर्विद्वांस्तपोधनः ।
ततः पिता वसुश्चैव पितरश्च तपोधनाः ॥
वसिष्ठेन समानीता याज्ञवल्क्यादयो द्विजाः ।
कृत्वा विवाहं मे सर्वे प्रतिजग्मुर्यथागतम् ॥
तस्य वीर्यमहं दृष्ट्वा तथायुक्तं महात्मनः ।
विस्मिता व्यथिता चैव प्रादामात्मानमेव च ॥
ततस्तदा महात्मा स कन्यायां मयि भारत ।
प्रहृष्टोऽजनयत् पुत्रं *द्वीप एव पराशरः ॥

*घ—द्विज [अधिकः पाठः]

2. क-ख-ग-घ—महानृषिः

स्मरिष्यामि महाबाहो यदि भीष्म त्वमिच्छसि ॥ १८॥

तव ह्यनुमते भीष्म नियतं[1] स महातपाः ।
विचित्रवीर्यक्षेत्रे तु पुत्रानुत्पादयिष्यति ॥ १९॥

वैशंपायनः—

[2]महर्षेः कीर्तने[3]तस्य भीष्मः प्राञ्जलिरब्रवीत् ॥ २०

भीष्मः—

देशकालौ च जानासि क्रियता[4]मिह सिद्धये ॥ २०॥

धर्ममर्थं च कामं च त्रीनेतान् योऽनुपश्यति ॥ २१

अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान् पृथक् पृथक् ॥ २२

[5]यो विचिन्त्य धिया सम्यग् व्यवस्यति स युक्तिमान् ।
सर्ववित् सर्वकर्ता स यद्येवं तत्करोति च ॥ २३

तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ।

---

1. क-ख-ग—तः

2. क-ख-ग-घ—इत्युक्तमात्रे भीष्मस्तु मूर्ध्न्यञ्जलिमथो वहन् ।
[अधिकः पाठः]

3. क-ख-ग—ने तस्य वन्द्य मातुस्तथाब्रवीत् ।
घ—ने तस्य वन्द्यमानस्तथाब्रवीत् ।

4. क-ख-ग-घ—मर्थं

5. क-ख-ग-घ—शुभं शुभानुबन्धं च तांश्चैव त्रिविधान् पुनः ।
पुनः पुनर्यो विचिन्त्य धिया सम्यग्व्यवस्यति ॥
स बुद्धिमान्मनुष्येषु स नरः कृत्स्नकर्मकृत् ।
[अधिकः पाठः]

उक्तं भवत्या यच्छ्रेयः परमं रोचते मम ॥ २४

वैशंपायनः—

ततस्तस्मिन् प्रतिज्ञाते भीष्मेण कुरुनन्दन ।
कृष्णद्वैपायनं काली चिन्तयांमास वै मुनिम् ॥ २५

[1]स वेदान् विब्रुवाणोऽयं मातुर्विज्ञाय चिन्तितम् ।
प्रादुर्बभूव विदितः क्षणेन कुरु[2]नन्दन ॥ २६

तस्मै पूजां ततो दत्वा सुताय विधिपूर्वकम् ।
परिष्वज्य च बाहुभ्यां प्रस्रवैरभिषि[3]च्य च ॥ २७

मुमोच बाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तम् ॥ २७॥

तामद्भिः [4]परिषिच्यार्तां महर्षिरभिसृत्य च ।
मातरं पूर्वजः पुत्रः [5]कृष्णद्वैपायनोऽब्रवीत् ॥ २८॥

भवत्या यदभिप्रेतं तदहं कर्तुमागतः ।
शाधि मां धर्मतत्वज्ञे करवाणि प्रियं तव ॥ २९॥

तस्मै पूजां ततोऽकार्षीत् पुरो[6]धाय परन्तपः ॥ ३०

---

1. क-ख-ग-घ—तस्यास्स चिन्तितं ज्ञात्वा सत्यवत्या महातपाः ।
स वेदान् प्रब्रुवन् सर्वान् कृष्णद्वैपायनः प्रभुः ॥
[अधिकः पाठः]

2. क-ख-ग-घ—संसदि 3. क-ख-ग—स्नुतः; घ—स्नुतम्

4. क-ख-ग—रभिषिञ्चन्तीं महर्षिरभिवाद्य च ।
घ—रभिषिच्यार्तां महर्षिरभिवाद्य च ।

5. क-ख-ग-घ—व्यासो वचनमब्रवीत् ।

6. क-ख-ग-घ—धाः परमर्षये ।

स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्वकम् ॥ ३०॥
[1]पूजितं मन्त्रपूर्वेण विधिना प्रीतमानसम् ।
तमासनगतं माता पृष्ट्वा कुशलमव्ययम् ॥ ३१॥
सत्यवत्यभिवीक्ष्यैनम् उवाचेदमनन्तरम् ॥ ३२

सत्यवती—
माता[2]पित्रोः प्रजायन्ते पुत्रास्साधारणाः कुले ।
तेषां पिता यथा स्वामी तथा माता न संशयः ॥ ३३
विधात्रा विहितस्स त्वं यथा मे प्रथमस्सुतः ।
विचित्रवीर्यो [3]ब्रह्मर्षे तथा मेऽवरजस्सुतः ॥ ३४
य[4]था वै पितृतो भीष्मस् तथा त्वमपि मातृतः ।
भ्राता विचित्रवीर्यस्य यथावा पुत्र मन्यसे ॥ ३५
यवीयसस्तव भ्रातुर् भार्ये सुरसुतोपमे ।
रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ॥ ३६
अयं शान्तनवस्सत्यं पालयन् सत्यविक्रमः ।
बुद्धिं न कुरुतेऽपत्ये तथा राज्यानुशासने ॥ ३७
[5]स त्वं ह्यपेक्षया भ्रातुस् सन्तानाय कुलस्य तु ।
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ॥ ३८

---

1. घ—पूजितो मन्त्रपूतेन विधिना प्रीतमानसः ।
क-ख-ग—पूजितो मन्त्रपूर्वं तु विधिवत्प्रीतिमाप सः ॥
2. क-ख-ग-घ—पितृभ्यां 3. घ—राजर्षिः 4. क-ख-ग-घ—थैव
5. क-ख-ग-घ—तस्य चापेक्षया

अनुक्रोशाच्च [1]भ्रातॄणां सर्वेषां रक्षणाय च ।
आनृशंस्येन यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ॥ ३९
[2]तयो [3]रुत्पादयापत्यं समर्थो ह्यसि पुत्रक ॥ ३९॥
अनु[4]रूपं कुलस्यास्य तेजः [5]प्रशमसंयुतम् ।
वेत्थ धर्मं त्वमेवेह परं चापरमेव च ॥ ४०

व्यासः—

तथा तव महाप्राज्ञे धर्मे प्रणिहिता मतिः ।
नियोगात्तव चैवाहम् एतैरपि च कारणैः ॥ ४१॥
ईप्सितं तत्करिष्यामि दृष्टं ह्येतत् पुरा मया ।
भवत्या यदभिप्रेतं तदहं कर्तुमागतः ॥ ४२॥
भ्रातुः पुत्रान् प्रदास्यामि मित्रावरुणयोस्समान ॥ ४३
[6]व्रतं चरेतां निर्दिष्टं मया संवत्सरं शुभे ।

---

1. क-ख-ग-घ—भूतानां
2. क-ख-ग-घ—यवीयसस्तव भ्रातु भार्ये परमसम्मते ।
रूपयौवनसम्पन्ने पुत्रकामे च धर्मतः ॥
[अधिकः पाठः]
3. क-ख-ग—प्रयच्छ पुत्रांस्त्वं
4. क-ख-ग—कूलान्; घ—रूपान्
5. क-ख-ग-घ—प्रश्रयसंयुतान्;
6. क-ख-ग—व्रतं च चरितव्यं तु निर्दिष्टमिह यन्मया ।
संवत्सरं यथान्यायं ततश्शुद्धे भविष्यतः ॥
न हि मामव्रतोपेता स्पृशते काचिदङ्गना ।
[अधिकः पाठः]

न च मामर्हतः प्राप्तुम् अशुद्धे कोसलात्मजे ॥ ४४
एवं सत्यवती धर्मं परमाज्ञातुमर्हसि ॥ ४४॥

सत्यवती--

[1]तद्यथा प्रतिपद्येतां देव्यौ गर्भं तथा कुरु ॥ ४५
अराजकेषु राज्येषु [2]नास्ति वृष्टिर्न देवता ।
कथं चाराजकं राज्यं शक्यं [3]धारयितुं प्रभो ॥ ४६
तस्माद्गर्भं [4]निषिञ्चस्व भीष्मस्तं वर्धयिष्यति ॥ ४६॥

व्यासः—

यदि पुत्रः प्रदातव्यो मया क्षिप्रमकालिकम् ।
विरूपतां मे सहताम् एतद्धि स्या[5]न्महत्तपः ॥ ४७॥
यदि मे सहते वेषं रूपं गन्धं तथा व[6]पुः ।
अद्यैव गर्भं कौसल्या विशिष्टं प्रतिप[7]त्स्यते ॥ ४८॥
तस्य चापि शतं पुत्रा भवितारो न संशयः ।
गोप्तारः कुरुवंशस्य भवत्याश्शोकनाशनाः ॥ ४९॥
शयने चैव कौसल्या शुचिवस्त्रा स्वलङ्कृता ।

---

1. क-ख-ग-घ—यथा सद्यः प्रपद्येते भार्ये गर्भं तथा कुरु ।
2. क-ख-ग-घ—प्रजाऽनाथा विनश्यति ।
नश्यन्ति च क्रियास्सर्वाः नास्ति वृष्टि र्न देवता ॥
[अधिकः पाठः]
3. क-ख-ग—रञ्जयितुं
4. क-ख-ग-घ—समाधत्स्व
5. क-ख-ग—त्परं व्रतम्
6. ख-ग—यः
7. क-ख-ग-घ—द्य

ममागमनमाकाङ्क्षेद् इत्युक्त्वाऽन्तरधीयत ॥ ५०॥

वैशंपायनः—

[1]अभिगम्य तु सा देवी स्नुषां रहसि संगताम् ।
[2]धर्ममर्थसमायुक्तम् उवाच वचनं [3]मिथः ॥ ५१॥

सत्यवती—

कौसल्ये धर्मतन्त्वं यद् ब्रवीमि त्वां निबोध मे ॥ ५२

भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात् ।
व्यथितां मां च संप्रेक्ष्य पितुर्वंशं च पीडितम् ॥ ५३

[4]भीष्मो बुद्धिं ददौ पौत्रीं वंशस्यास्य पुनर्भवे ।
सा च बुद्धिस्त्व[5]य्यधीना पुत्रभावाय नान्यथा ॥ ५४

नष्टं च भारतं वंशं पुनरेव समुद्धर ।
गर्भं धारय कल्याणि! देवरस्य महात्मनः ॥ ५५

पुत्रं जनय सुश्रोणि देवराजसमप्रभम् ।
स हि राज्यधुरं गुर्वीं [6]धारयिष्यति [7]भारतीम् ॥ ५६

---

1. क-ख-ग—ततोऽभिगम्य सा
2. क-ख-ग-घ—धर्मार्थकामसहितं
3. क-ख-ग-घ—हितम्
4. क-ख-ग-घ—भीष्मो बुद्धिमतां श्रेष्ठः कुरुते बुद्धिमुत्तमाम् ।
5. क-ख-ग-घ—त्वयाकार्यो पुत्रं प्राप्तुं मतिं कुरु ॥
6. क-ख-ग-घ—मुद्वहिष्यति 7. ख-घ—धर्मतः

वैशम्पायनः—

सा धर्मतोऽनुनीयैनां कथं चिद्धर्मचारिणीम् ।
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

॥ ७ ॥ संभवपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[अस्मिन्नध्याये ५७ श्लोकाः ।]

## ॥ द्व्यधिकशततमोऽध्यायः ॥

व्यासात् अम्बिकायां धृतराष्ट्रस्य उत्पत्तिः ॥ १ ॥ अम्बालिकायां पाण्डोरुत्पत्तिः ॥ २ ॥ अम्बिकादास्यां विदुरस्य उत्पत्तिः ॥ ३ ॥

वैशम्पायनः—

ततस्सत्यवती [1]हृष्टा स्नुषां स्नातामलङ्कृताम् ।
संवेशयन्ती शयने शनैर्वचनमब्रवीत् ॥ १

कौसल्ये देवरो देवि स चाद्यानुप्रवेक्ष्यति ।
अप्रमत्ताऽ[2]भिवीक्षेथा निशायामागमिष्यति ॥ २

श्वश्र्वास्तु वचनं श्रुत्वा शयाना शयने शु[3]भा ।

1. क-ख-ग—काले वधूं स्नातामृतौ तदा ।
2. क-ख-ग-घ—प्रतीक्ष्यैनं निशीथे समुपेष्यति ।
3. क-ख-ग—भे

[1]जगाम मनसा भीष्मम् अन्यांश्च भरतांस्तथा ॥ ३

ततस्सुप्तजनप्राये [2]व्यासस्स भगवानृषिः ।
[3]दीप्यमानेषु दीपेषु [4]सदनं प्रविवेश तत् ॥ ४

सत्यवत्या नियुक्तस्तु सत्यवागृषिसत्तमः ।
जगाम तस्याश्शयनं विपुले तपसि स्थितः ॥ ५

[5]तं समीक्ष्य तु कौसल्या दुष्प्रेक्ष्यमतथोचिता ।
विरूपमिति वित्रस्ता संकुच्यासीन्नि[6]मीलिता ॥ ६

[7]विरूपो हि जटी चापि दुरङ्गपरुषः कृशः ।

---

1. क-ख-ग—चिन्तयन्ती तदा भीष्ममन्यांश्च कुरुसत्तमान् ।
2. क-ख-ग—रात्रौ च; घ—ऽर्धरात्रे भगवानृषिः ।
3. क-ग—ततोऽम्बिकायां प्रथमं नियुक्तस्सत्यवागृषिः ।
[अधिकः पाठः]
4. क-ग—निशायां प्रविवेश ह ।
5. क-ग—तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने ।
श्मश्रूणि चैव पिङ्गानि दृष्ट्वा देवी न्यमीलयत् ॥
6. ख—न्नरेश्वर [अधिकः पाठः]
7. क-ग-घ—स बभूव तया रात्रौ मातुः प्रियचिकीर्षया ।
भयात् काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ॥
ततो निष्क्रान्तमासाद्य माता पुत्रमभाषत ।
अप्यस्यां गुणवान् पुत्र राजपुत्रो भविष्यति ॥
निशम्य वचनं मातुर्व्यासः परमधर्मवित् ।
प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः ॥
नागायुतसमप्राणो विद्वान् राजर्षिसत्तमः ।
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ॥

सुगन्धेतरगन्धश्च सर्वथा दुष्प्रधर्षणः । ७
तस्य कृष्णस्य कपिला जटा दीप्ते च चक्षुषी ।
कद्रूणि चापि श्मश्रूणि दृष्ट्वा साऽऽसीन्निमीलिता ॥ ८
संबभूव तया रात्रौ मातुः प्रियचिकीर्षया ।
भयात् काशीसुता तं तु नाशक्नोदभिवीक्षितुम् ॥ ९
ततो निष्क्रान्तमासाद्य तन्माता प्रत्यभाषत ।
अप्यत्र गुणवांस्तात राजपुत्रो भविष्यति ॥ १०
इत्युक्तस्सोऽब्रवीन्मातः कुमारो मातृदोषतः ।
अन्धो नागायुतप्राणो भविष्यत्यम्बिकोदरात् ॥ ११
निशम्य वचनं तस्य तन्माता पुनरब्रवीत् ॥ ११॥

सत्यवती—

अलब्धलाभः पुत्रोऽयं यद्यन्धो वै भविष्यति ॥ १२
[1]तस्माद्वंशस्य गोप्तारं सतां शोकविनाशनम् ।
तस्मादवरजं पुत्रं जनया[2]द्य नराधिपम् ॥ १३
भ्रातुर्भार्याऽपरा चेयं रूपयौवनशालिनी ।

---

पूर्वतोऽनुवृत्तम्—

तस्य चापि शतं पुत्रा भविष्यन्ति महाबलाः ।
किन्तु मातुस्स वैगुण्यादन्ध एव भविष्यति ॥
तस्य तद्वचनं श्रुत्वा माता वचनमब्रवीत् ॥

[अधिकः पाठः]

1. क-ख-ग-घ—अस्य वंशस्य 2. क-ख-ग-घ—न्यं

अस्यामुत्पादयापत्यं मन्नियोगाद्गुणाधिकम्[1] ॥ १४

वैशम्पायनः—

[2]अम्बालिकां समाहूय तस्यां सत्यवती सुतम् ।
भूयो नियोजयामास सन्तानाय कुलस्य वै ॥ १५
विषण्णाम्बालिका साध्वी निषण्णा शयनोत्तमे ।
कोऽन्वेष्यतीति ध्यायन्ती नियता संप्रतीक्षति ॥ १६

ततस्तेनैव विधिना महर्षिस्समपद्यत ॥ १६॥

अम्बालिकामथाभ्यागाद् ऋषिं दृष्ट्वा च साऽपि तम् ।
विषण्णा पाण्डुसङ्काशा समपद्यत भारत ॥ १७॥
तां [3]बालां पाण्डुसंकाशां विषण्णां प्रेक्ष्य पार्थिव ।
व्यासस्सत्यवतीपुत्र इदं वचनमब्रवीत् ॥ १८॥

व्यासः—

यस्मात् पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामसि ।
तस्मादेष सुतस्तुभ्यं पाण्डुरेव भविष्यति ॥ १९॥
नाम चास्य तदेवेह भविष्यति शुभानने ॥ २०

---

1. क-ख-ग—द्वितीयं कुरुवंशस्य राजानं दातुमर्हति ।
वैशंपायनः—
स तथेति प्रतिज्ञाय निश्चक्राम महातपाः ॥
2. अ—अथांबिकां समाधाय । [अधिकः पाठः]
3. क-ख-ग-घ—भीता

वैशंपायनः—

इत्युक्त्वा स निराक्रामद् [1]भगवानृषिसत्तमः ॥ २०॥

[2]तमुवाच ततो माता अप्यत्र भविता शुभः ।

कुमारो ब्रूहि मे पुत्र ऋषिस्तां प्रत्युवाच ह ॥ २१॥

भविष्यति [3]सुतो मातः कुमारो दिक्षु विश्रुतः ।

पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति ॥ २२॥

तस्य पुत्रा महेष्वासा जनिष्यन्तीह [4]पाण्डवाः ॥ २३

इत्युक्त्वा मातरं तत्र सोऽभिवाद्य जगाम ह ॥ २३॥

मुनौ यातेऽम्बिका पुत्रं महाभागमसूयत ।

धृतराष्ट्रं महाप्राज्ञं प्रज्ञाचक्षुषमीश्वरम् ॥ २४॥

अनुजाऽम्बालिका तत्र पुत्रं काले व्यजायत ।

पाण्डुं लक्षणसंपन्नं दीप्यमानं श्रिया वृतम् ॥ २५॥

तयोर्जन्मक्रियास्सर्वा यथावदनुपूर्वशः ।

कारयामास वै भीष्मो ब्राह्मणैर्वेदपारगैः ॥ २६॥

अन्धं दृष्ट्वाऽम्बिकापुत्रं जातं सत्यवती सुतम् ।

कौसल्यार्थे समाहूय पुत्रमन्यमयाचत ॥ २७॥

---

1. क-ख-ग-घ—कृष्णद्वैपायनः प्रभुः

2. क-ख-ग-घ—ततो निष्क्रान्तमालोक्य सत्या पुत्रमभाषत ।
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् ॥
[अधिकः पाठः]

3. क-ख-ग-घ—सुविक्रान्तः    4. क-ख-ग-घ—पञ्च वै

अन्धोऽयमन्यमिच्छामि कौसल्यातनयं शुभम् ॥ २८

एवमुक्तो महर्षिस्तां मातरं प्रत्यभाषत ॥ २८॥

नियता यदि कौसल्या भविष्यति पुनश्शुभा ।
भविष्यति कुमारोऽस्या धर्मशास्त्रार्थतत्त्ववित् ॥ २९॥

तां समाधाय वै भूयस् स्नुषां सत्यवती तदा ।
ऋतुकालं च विज्ञाय देव्या संचोदिताऽम्बिका ॥ ३०॥

सा तु रूपं च गन्धं च महर्षेः प्रतिवीक्ष्य तम् ।
नाकरोद्वचनं देव्या भयात् सुरसुतोपमा ॥ ३१॥

ततस्स्वैर्भूषणैर्दासीं भूषयित्वाऽप्सरोपमाम् ।
प्रेषयामास कृष्णाय ततः काशिपतेस्सुता ॥ ३२॥

दासी ऋषिमनुप्राप्तं प्रत्युत्थायाभिवाद्य च ।
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार सा[1] ॥ ३३॥

[2]वाससोऽपि प्रदानेन गात्रसंस्पर्शनेन च ।
कामोपभोगसंयुक्तो महर्षिर्विस्मितोऽभवत् ॥ ३४॥

तया सहोषितो रात्रिं महर्षिः प्रीयमाणया ।
उत्तिष्ठन्नब्रवीदेनां त्वं भुजिष्या भविष्यसि ॥ ३५॥

एष ते सुभगे गर्भश् श्रीमानुदरमागतः ।
धर्मात्मा विश्रुतो लोके सर्वधर्मभृतां वरः ॥ ३६॥

---

1. क-ख-ग-घ—ह । 2. ख-ग—वाग्भावोपप्रदानेन

[1]जज्ञे स विदुरो नाम कृष्णद्वैपायनात्मजः ।
धृतराष्ट्रस्य च भ्राता पाण्डोश्च[2] पृथिवीपतेः ॥ ३७॥

धर्मो विदुररूपेण शापात्तस्य महात्मनः ।
माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः ॥ ३८॥

क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनादपि ।
जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ॥ ३९॥

तेषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम् ।
कुरवोऽथ कुरुक्षेत्रं सर्वं त्रयमवर्धत ॥ ४०॥

गन्धवत्यास्तथैवो[3]क्त्वा धर्मरूपं सुतं प्रति ।
नाहमस्मिन् पुनर्योक्तुं शक्यो मातस्सु[4]तान् प्रति ॥ ४१॥

स धर्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च ।
तस्यां च सर्वमाख्याय तत्रैवान्तरधीयत ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

॥ ७ ॥ संभवपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[अस्मिन्नध्याये ४२॥ श्लोकाः]

---

1. क-ख-ग-घ—इत्युक्त्वा स निराक्रामत् कृष्णद्वैपायनः प्रभुः ।
[अधिकः पाठः]

2. क-ख-ग-घ—श्चामितबुद्धिमान् ।

3. क-ख-ग-घ—क्तो

4. क-ख-ग-घ—तं

## ॥ त्र्यधिकशततमोऽध्यायः ॥

माण्डव्यचरित्रम् ॥ १ माण्डव्येन यमस्य शापः ॥ २ ॥

जनमेजयः—

किं कृतं कर्म धर्मेण येन शापमुपेयिवान् ।
कस्य शापाच्च [1]धर्मज्ञ शूद्रयोनावजायत ॥ १

वैशंपायनः—

बभूव ब्राह्मणः कश्चिन्माण्डव्यो[2] नाम विश्रुतः ।
एकान्तचारी [3]वश्यश्च सत्ये तपसि च ध्रुवः ॥ २

स तीर्थयात्रां विचरन् [4]आजगाम यदृच्छया ॥ २॥

संनिकृष्टानि तीर्थानि ग्रामाणां यानि कानि चित् ।
तत्राश्रमपदं कृत्वा वसति स्म महामुनिः ॥ ३॥

स त्वाश्रमपदद्वारि वृक्षमूले महायशाः ।
ऊर्ध्वबाहुस्स्थितो योगी मौनी व्रतसमन्वितः ॥ ४॥

केन चित्त्वथ कालेन तथा तपसि तिष्ठतः ॥
त[5]स्याश्रमपदं प्राप्ता दस्यवो लोप्त्रहारिणः ॥ ५॥

---

1. क-ख-ग—ब्रह्मर्षे: 2. क-ख-ग-घ—व्य इति
3. क-ख-ग—वन्यश्च सत्येन तपसि श्रुतः।
घ—वन्यश्च सत्ये तपसि विश्रुतः
4. क-ख-ग-घ—अगाम च 5. अ-दा

[1] * अनुसाधयमानास्ते रक्षिभिर्भरतर्षभ ।
तामेव वसतिं जग्मुस् तद्ग्रामे लोप्त्रहारिणः । ६॥
तस्मिन्निवसथे लोप्त्रं निदधुर्भयमोहिताः ।
अभितस्तत्र संलीना बलमन्वगमच्च तान् ॥ ७॥
ततश्शीघ्रतरं राजंस् तथा गजबलं महत् ॥ ८
यस्मिन्नावसथे शेते स मुनिस्संश्रितव्रतः ।
तत्राजग्मु[2]स्तपोवश्यं तं मुनिं रक्षिणस्तु ते ॥ ९
तमपृच्छंस्तदा राजंस् तथायुक्तं तपोधनम् ॥ ९॥
कतरेण पथा याता दस्यवो मुनिसत्तम ।
तेन गच्छाम वै ब्रह्मन् पथा शीघ्रतरं वयम् ॥ १०॥
तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः ।
न किञ्चिद्वचनं राजन् मुनिस्तान् प्रत्यभाषत ॥ ११॥
ततस्ते राजपुरुषा विचिन्वानास्तदाश्रमम् ।
ददृशुस्तत्र वै लीनांश् चोरांस्तद्द्रव्यमेव च । १२॥
ततश्शङ्का समभवद् रक्षिणां तं मुनिं प्रति ।
संयम्यैनं ततो राज्ञे चोरांश्चै[3]वान्ववेदयन् ॥ १३॥

---

1. घ—चोरैरपहृतं द्रव्यं लोप्त्रमित्यभिधीयते । [अधिकः पाठः]
* क-ख-ग-घ—अनुसार्यमाणास्ते चोराः
2. क-ख-ग—स्ततोपश्यंस्तं
3. क-ख-ग—नं न्य; घ—नं न्यवेदयन्

तं राजा सह चोरैस्तैर् अवद[1]च्छिद्यतामिति ॥ १४

स वध्यघातैराज्ञप्तैश् शूले प्रोतो महातपाः ॥ १४॥

ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपाला धनान्यादाय तान्यथ ॥ १५॥

शूलस्थस्स तु धर्मात्मा कालेन महता [2]अपि ।
निराहार[3]स्तदा राजन् मरणं नाभ्युपागमत् ॥ १६॥

[4]शूलाग्रे तप्यमानेन तदाऽनेन महात्मना ।
सन्तापं परमं जग्मुर् [5]ऋषयो भरतर्षभ ॥ १७॥

[6]ते रात्रौ शकुना भूत्वा तमार्तिं परमां गतम् ।
दर्शयन्तो यथाशक्ति तमापृच्छन् द्विजोत्तमम् ॥ १८॥

ऋषयः—

भगवन् केन दोषेण गन्तासि द्विजसत्तम ।
श्रोतुमिच्छामहे [7]ब्रह्मन् अपापो ह्यसि धर्मतः ॥ १९॥

तत्ते द्विजवरश्रेष्ठ संशयस्तु महान् हि नः ।

---

1. क-ख-ग—हन्यतामिति 2. क-ख-ग-घ—ततः
3. क-ख-ग-घ—रोऽपि विप्रर्षिः
4. क-ख-ग-घ—धारयामास वै प्राणानृषींश्च समुपानयत् । [अधिकः पाठः]
5. क-ख-ग-घ—मुनयोऽथ परन्तप ।
6. ख-घ—दुःखिता ऋषयस्तत्र आश्रमस्थाश्च तं तदा। [अधिकः पाठः]
7. क-ख-ग—ब्रह्मंस्त्वमपापोऽसि

ईदृशस्य [1]नरश्रेष्ठ उभे तपसि वर्ततः ॥ २०॥

वैशम्पायनः—

[2]तदोवाच महाप्राज्ञस् तानृषीन् संशितव्रतान् ॥ २१

दोषतः कं गमिष्यामि न हि मेऽन्योऽपराध्यति ॥ २१॥

तच्छ्रुत्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि ।

न्यवेदयंस्ततो राज्ञे तथावृत्तं नराधिप ॥ २२॥

राजा च हि तथा श्रुत्वा निश्चित्य सह मन्त्रिभिः ।

प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ २३॥

राजा—

यन्मयाऽपकृतं मोहाद् अज्ञानाद्द्विजसत्तम ।

प्रसादये त्वां विप्रेन्द्र न मे त्वं क्रोद्धुमर्हसि ॥ २४॥

वैशंपायनः—

एवमुक्तस्तदा राज्ञा प्रसादमकरो[3]त्तदा ।

कृतप्रसादो राजा तं ततस्समवतारयत् ॥ २५॥

अव[4]तीर्य तु शूलाग्रात् तच्छूलं विनिकृत्य च ।

अशक्नुवन्तो निष्क्रष्टुं शूलं मूलेऽथ चिच्छिदुः ॥ २६॥

स तदान्तर्गतेनैव शूलेन व्यचरन्मुनिः ।

---

1. क-ग—द्विज

2. क-ख-ग-घ—ततस्स मुनिशार्दूलस्तानुवाच तपोधनान् ।

3. क-ख-ग-घ—न्मुनिः ।

4. क-ख-ग-घ—ता

कण्ठपार्श्वान्तरस्थेन शङ्कुना मुनिराचरन् ॥ २७॥
पुष्पभाजनधारी स्याद् इति चिन्तापरोऽभवत् ॥ २८
स तेन तपसा लोकान् विजिग्ये दुर्लभान् परैः ।
तमाहुराणिमाण्डव्यम् इति धर्मे रतं मुनिम् ॥ २९
गत्वा संयमिनीं विप्रो धर्मस्य परमार्थवित् ।
धर्मं धर्मवतां श्रेष्ठं [1]पर्युपालभतानघ ॥ ३०

आणिमाण्डव्यः—

किं [2]मया तत् कृतं कर्म धर्मपापफलोदयम् ।
येनेदं प्राप्तवानस्मि दुःखमप्रतिमं भुवि ॥ ३१
तन्ममाचक्ष्व तत्त्वेन पश्य मे तपसो बलम् ॥ ३१॥

धर्मराजः—

पतङ्गकानां पुच्छेषु इषीका[3]स्त्वं समादधाः ।
अहिंसकानां धर्मज्ञ तेनैतत् प्राप्तवानसि ॥ ३२॥

आणिमाण्डव्यः—

[4]बालो हि द्वादशाद्वर्षाज् जन्मनो यत्करिष्यति ।

---

1. क-ख-ग—पर्यपृच्छत्तदानघ; घ—परिपालयतानध
2. घ—यमः
क-ख-ग—त्वया तत्कृतं कर्म मया कृतमजानता ।
3. क-ख-ग—स्त्वत्प्रवेशिताः
4. क-ख-ग—कस्मिन्काले मया तत्तु कृतं ब्रूहि यथातथम् ।
घ—तेनोक्तो धर्मराजोऽथ बालभावे त्वया कृतम् ॥
[अधिकः पाठः]

न भविष्यत्यधर्मोऽ[1]द्य न प्रज्ञास्यति [2]वै दिशः ॥ ३३॥

अल्पापराधे विपुलो मम दण्डस्त्वया धृतः ।
[3]शूद्रयोनावतो धर्म मानुषस्संभविष्यसि ॥ ३४॥

मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयाम् ॥ ३५

आ चतुर्दशमाद्वर्षान्न भविष्यति पातकम् ।
परेणकुर्वतामेव दोष एव भविष्यति ॥ ३६

वैशंपायनः—

एतेन त्वपराधेन शापात्तस्य महात्मनः ।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ ३७

धर्मे चार्थे च कुशलो [4]भयक्रोधविवर्जितः ।
दीर्घदर्शी [5]महाप्राज्ञः कुरूणां च हितेरतः ॥ ३८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

॥ ७ ॥ संभवपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[अस्मिन्नध्याये ३८ श्लोकाः]

---

1. क-ख-ग-घ—त्र  2. क-ख-ग—वैशसम्
3. क-ख-ग-घ—गरीयान् ब्राह्मणवधस्सर्वभूतवधादपि।[अधिकःपाठः]
4. क-ख-ग-घ—लोभ
5. क-ख-ग—शमपरः; घ- च परमः

## ॥ चतुरधिकशततमोऽध्यायः ॥

पाण्डो राज्याभिषेकः ॥ १ ॥ धृतराष्ट्रादिविवाहः ॥ २ ॥

वैशंपायनः—

धृतराष्ट्रे च पाण्डौ च विदुरे च महात्मनि ।
तेषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम् ॥ १
कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्धत ॥ १॥
यथर्तुवर्षी पर्जन्यो बहुपुष्पफला द्रुमाः ।
वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः ॥ २॥
ऊर्ध्वसस्याऽभवद्भूमिस् सस्यानि फलवन्ति च ।
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥ ३॥
वणिग्भिश्चोपकीर्यन्ते नगराण्यथ शिल्पिभिः ।
शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ॥ ४॥
नाभवत् कृपणः कश्चिन्न काचिद्विधवाऽभवत् ।
नाभवन् दस्यवः केचिन्नाधर्मरुचयो [1]नराः ॥ ५॥
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ॥ ६
तन्महोदधिसंकाशं नगरं बह्वशोभत ॥ ६॥

1. क-ख-ग—जनाः

द्वारतोरणनिर्यूहैश् छन्नमभ्रं घनैरिव ।
प्रासादशतसंबाधं महेन्द्रपुरसन्निभम् ॥ ७॥

नदीपादपषण्डेषु वापी[1]पल्वलसेतुषु ।
काननेषु च [2]दिव्येषु विहरन्ति स्म कौरवाः ॥ ८॥

उत्तरैः कुरुभिस्सार्धं दक्षिणाः कुरवस्तदा ।
स्पर्धमानाश्च दृश्यन्ते चारणर्षिसमागमे ॥ ९॥

दानधर्मक्रियायुक्ता यज्ञव्रतपरायणाः ।
अन्योन्यप्रीतिसंयुक्ता वर्धन्ते स्म प्रजास्तदा ॥ १०॥

मानक्रोधविहीनाश्च प्रजा लोभविवर्जिताः ।
अन्योन्यमभ्यनन्दंस्ता ब्रह्मोत्तरमवर्धत ॥ ११॥

तस्मिञ्जनपदश्रेष्ठे भीष्मेण विधिना कृताः ।
कूपाराम[3]महावप्रा ब्राह्मणावसथास्तदा ॥ १२॥

स्वाहाकारैस्स्वधाभिश्च [4]संनिवास[5]स्सुरक्षितः ।
बभूव परमोपेतो [6]यूपैश्चैत्यधनुर्भुजैः ॥ १३॥

प्रमृज्य परराष्ट्राणि स्वराष्ट्रं [7]परिरक्षता ॥

1. क-ख-ग—कूपादिवल्गुषु 2 क-ख-ग-घ—चित्रेषु
3. क-ख-ग—सभावाप्यो; घ—सभावप्रा
4. क-ख-ग—निवासास्समलङ्कृताः। 5. घ—:कुरूषितः।
6. क-ख-ग—यूपचैत्यवनध्वजैः; ग. —यूपचैत्यधनुर्ध्वजैः।
7. क-ख-ग—पर्यरक्षत; ग—परिरक्षितम्।

भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत ॥ १४॥
क्रियमाणेषु कृत्येषु कुमाराणां यशस्विनाम् ।
पौरजानपदास्सर्वे बभूवुः परमोत्सवाः ॥ १५॥
गृहेषु कुरुमुख्यानां पौराणां च नराधिप ।
दीयता[1]मिज्यतां चेति वाचोऽ श्रूयन्त सर्वशः ॥ १६॥
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महायशाः ।
जन्मप्रभृति भीष्मेण पुत्रवत् परिपालिताः ॥ १७॥
वैदिकाध्ययने युक्तो नीतिशास्त्रे च पारगः ॥ १८
भीष्मेण राजन् कौरव्यो धृतराष्ट्रोऽभिषेचितः ॥ १८॥
धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायाम् अस्त्रेषु विविधेषु च ॥ १९॥
अर्थधर्मप्रधानासु विद्यासु विविधासु च ।
गतः पारं यदा पाण्डुस् तदा सेनापतिः कृतः ॥ २०॥
धृतराष्ट्रस्त्वचक्षु[2]ष्मान् राज्यं न प्रतिपद्यत ।
[3]रक्षाकरश्च विदुरः पाण्डुश्चासीन्महीपतिः ॥ २१॥
अमात्यो मनुजेन्द्रस्य बाल एव यशस्विनः ।
प्रणेता सर्वधर्माणां भीष्मेण विदुरः कृतः ॥ २२॥

---

1. क-ख-ग-घ—स्भु   2. घ—द्वात्
3. क-ख-ग-घ—अवरत्वाच्च

सर्वशास्त्रार्थतत्त्वज्ञो बुद्धिमेधापटुर्युवा ।
भावेनागमर्युक्तेन सर्वं वेदयते जगत् ॥ २३॥

प्रनष्टश्शन्तनोर्वंशो भीष्मेण पुनरुद्धृतः ।
ततो निर्वचनं सत्सु तदिदं परिपठ्यते ॥ २४॥

कौसल्या वीरसूस्स्त्रीणां देशानां कुरुजाङ्गलम् ।
भीष्मो धर्मभृतां श्रेष्ठः पुराणां गजसाह्वयम् ॥ २५॥

ते त्रयः कालयोगेन कुमारा जनमेजय ।
अवर्धन्त महात्मानो नन्दयन्तस्सुहृज्जनान् ॥ २६॥

संस्कारैस्संस्कृतास्ते वै [1]वृत्तैरध्ययनेन च ।
[2]शमव्यायामकुशलास् समपद्यन्त यौवने ॥ २७॥

धनुर्वेदेऽश्वपृष्ठे च [3]तथा युद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥ २८॥

इतिहासपुराणेषु नानाशि[4]ल्पासु चान्विताः ।
वेदवेदाङ्ग[5]तत्त्वज्ञास् सर्वत्र कृत[6]विश्रमाः ॥ २९॥

अतीव बलवानासीद् धृतराष्ट्रोऽम्बिकासुतः ।
पाण्डुर्धनुषि विक्रान्तो नरेभ्यो ह्यधिकोऽभवत् ॥ ३०॥

त्रिषु लोकेषु नत्वासीत् प्राणी विदुरसंमितः ।

---

1. घ—व्रतै 2. क-ख-ग-घ—श्रम 3. क-ख-ग-घ—गदा
4. ग—क्षा 5. क-ख-ग-घ—कुशलास् 6. क-ख-ग—निश्चयाः

धर्मनित्यो हि धर्म[1]ज्ञ बुद्ध्या चैव गतिं गतः ॥ ३१॥
अथ शुश्राव विप्रेभ्यो [2]देवकस्य महीपतेः ।
रूपयौवनसंपन्नां सुतां सागरगासुतः ॥ ३२॥
सुबलस्य च कल्याणीं गान्धाराधिपतेस्सुताम् ।
सुतां च मद्रराजस्य रूपेणाप्रतिमां भुवि ॥ ३३॥

भीष्मः—

गुणैस्समुदितं [3]सर्वम् इदं नः प्रथितं कुलम् ।
अत्यन्यान् पृथिवीपालान् पृथिव्या[4]मपि राजकान् ॥ ३४॥
रक्षितं राजभिः पूर्वैर् [5]धर्मविद्भिर्महात्मभिः ।
[6]नोत्सादमगमच्चेदं कथं चिदिह नः कुलम् ॥ ३५॥
मया च सत्यवत्या च कृष्णेन च महात्मना ।
[7]समवस्थापितं भूयो युष्मासु कुलतन्तुषु ॥ ३६॥
वर्धेत तदिदं पुत्र कुलं सागरवद्यथा ।
तथा मया विधातव्यं त्वया चैव विशेषतः ॥ ३७॥
श्रूयते यादवी कन्या ह्यनुरूपा कुलस्य नः ।
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ॥ ३८॥
कुलीना रूपवत्यश्च नाथवत्यश्च सर्वशः ।

---

1. क-ख-ग—स्य 2. क-ख-ग—यादवस्य
3. क-ख-ग-घ—नित्यम् 4. घ—मधि राजभाक् 5. ख—श्रीमद्भिश्च
6. घ—नोत्साहमगमच्छेदं 7. क-ख—संस्थापितं कुलं

उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रि[1]यर्षभ ॥ ३९॥
मन्ये वरयितव्यास्ता इत्यहं धीमतां वर ।
समानार्थाः[2] कुलस्यास्य यद्वा विदुर मन्यसे ॥ ४०॥

विदुरः—
भवान् पिता भवान् माता भवान् नः परमो गुरुः ।
तस्मात् स्वयं कुलस्यास्य विचार्य कुरु [3]वर्धितम् ॥ ४१॥

वैशंपायनः—
अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ॥ ४२
आराध्य वरदं देवं भगनेत्रहरं हरम् ।
गान्धारी [4]लघु पुत्राणां शतं लेभे वरं शुभा ॥ ४३
इति श्रुत्वा च तत्वेन भीष्मः कुरुपितामहः ।
ततो गान्धारराजस्य ([5]सुतश्शकुनिराव्रजन् ॥ ४४
स्वसारं परया लक्ष्म्या) प्रेषयामास कौरवः ।
अचक्षुरिति तस्याऽऽसीत् सुबलस्य विचारणा ॥ ४५
कुलख्यातिं च वृद्धिं च बुद्ध्या तु प्रसमीक्ष्य च ।
ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ॥ ४६
गान्धारी त्वथ शुश्राव धृतराष्ट्रं त्वचक्षुषम् ।

---

1. क-ख-ग—योत्तमाः; घ—यर्षभाः 2. क-ख-ग—स्ताः
3. क-ख-ग-घ—यद्धितम् । 4. क-ख-ग-घ—किल
5. (—) इदमन्वितम्- See Sloka 49½.

आत्मानं दित्सितां त[1]त्र पितुर्मातुश्च कौरव ॥ ४७

ततस्सा पट्टमा[2]नाय्य कृत्वा बहुगुणं शुभा ।
न [3]पश्यतीति भर्ता मे वेष्टयामास चक्षुषी ॥ ४८

नात्यश्नीयां पतिमहम् इत्येवं कृतनिश्चया ॥ ४८॥

ततो गान्धारराजस्य सुतश्शकुनिराव्रजत् ।
स्वसारं परया लक्ष्म्या युक्तामादाय कौरव ॥ ४९॥

ततो विवाहं चक्रेऽस्या नक्षत्रे कृत्स्नसंमते ।
सौबलस्स महाराजश् शकुनिः प्रियदर्शनः ॥ ५०॥

दत्वा स्वभगिनीं [4]तत्र यथार्हं च परिच्छदम् ।
पुनरागात् स्वनगरं भीष्मेण परिपूजितः ॥ ५१॥

गान्धार्यपि वरारोहा शीलाचारविचेष्टितैः ।
तुष्टिं कुरूणां सर्वेषां जनयामास भारत ॥ ५२॥

गान्धारी सा पतिं दृष्ट्वा प्रज्ञाचक्षुषमीश्वरम् ।
अतिचाराद्भृशं भीता भर्तुस्सा समचिन्तयत् ॥ ५३॥

सा दृष्टिविनिवृत्ता हि भर्तुस्तु सम[5]तामियात् ।
न हि सूक्ष्मेऽप्यतीया[6]याते भर्तुस्सा ववृधे तदा ॥ ५४॥

---

1. क-ख-ग-घ—स्य
2. ख-घ—दाय
3. क-ख-ग-घ—पश्यामीति भर्तारं
4. क-ख-ग-घ—वीरो
5. क-ग-घ—तां ययौ
6. क-ग-घ—चारे

वृत्तेनारा[1]धितान् सर्वान् पतिव्रतपरायणा ।
वाचाऽपि परुषानन्यान् [2]सुव्रता नान्वकीर्तयत् ॥ ५५॥

तस्यास्सहोदराः कन्याः पुनरेव ददौ दश ।
गान्धारराजस्सुबलो भीष्मेण परितस्तदा ॥ ५६॥

सत्यव्रतां सत्यसेनां सुषेणां च सुसंहिताम् ।
तेजश्रवां स्वश्रवां च तथोर्वीं निकृतिं तथा ॥ ५७॥

शम्भुवां च दशार्णां च गान्धारीं दश विश्रुताः ॥ ५८

एकाह्ना [3]चोपयेमे ता धृतराष्ट्रो जनेश्वरः ॥ ५८॥

ततश्शान्तनवो भीष्मो धनुःक्रीतास्ततस्ततः ।
आहरद्धृतराष्ट्राय राजपुत्रीः परश्शतम् ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

॥ ७ ॥ संभवपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

[अस्मिन्नध्याये ५९॥ श्लोकाः]

---

1. क-ग-घ—ध्य
2. क-ग—स्वजनान्न व्यकीर्तयत् ।
घ—स्वजनान्नावकीर्तयत । 3. क-ग-घ—प्रतिजग्राह

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

पृथाया बाल्यचरित्रकथनम् ॥ १ ॥ तस्या दुर्वाससो मन्त्रप्राप्तिः ॥ २ ॥ मन्त्रप्रभावजिज्ञासया आहूतात्सूर्यात् कुन्त्यां कर्णस्योत्पत्तिः ॥ ३ ॥ लोकभयात्कुन्त्या यमुनायां विसृष्टस्य राधाभर्त्रा स्वीकारो वसुषेणेति नामकरणं च ॥ ४ ॥ सङ्ग्रहेण कर्णचरित्रकथनम् ॥ ५ ॥

वैशम्पायनः—

शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि ॥ १

पैतृष्वसेयाय ततस् सोऽनपत्याय वीर्यवान् ।
अग्रायाग्रे प्रतिज्ञाय स्वस्यापत्यं च वीर्यवान् ॥ २

अग्रजातेति तां कन्याम् अग्रानुग्रहकाङ्क्षया ।
अददात् कुन्तिभोजाय शूरो गोपतये सुताम् ॥ ३

सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिभोजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ॥ ४

निगूढं निश्चयं धर्मे दुर्वासा इति यं विदुः ।
[1]तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ ५

1. क-ख-ग—तं मुनिं

[1]स तस्यै प्रददौ धर्मम् आपद्धर्मान्ववेक्षया ।
अभिचाराभिसंयुक्तम् अब्रवीच्चैव तां मुनिः ॥ ६
अभिचारयुतं तस्या आचष्ट भगवानृषिः ॥ ६॥
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादाद्वै पुत्रस्तव जनिष्यते ॥ ७॥
तथोक्ता सा तु मुनिना तस्य कौतूहलात्तदा ।
कन्या सती देवमर्कम् आजुहाव यशस्विनी ॥ ८॥
ततो घनान्तरं कृत्वा स्वमार्गं तपनस्तदा ।
उपतस्थे स तां कन्यां पृथां पृथुललोचनाम् ॥ ९॥
सा ददर्श तमायान्तं विस्मयाल्लोकभावनम् ।
विस्मिता चानवद्याङ्गी दृष्ट्वा तं महदद्भुतम् ॥ १०॥
साऽब्रवीद्भगवन् कस्त्वं प्रादुर्भूतो मम[2]न्तिकम् ॥ ११

सूर्यः—

आहूतोपस्थितं भद्रे ऋषिमन्त्रेण चोदितम् ।
विद्धि मां पुत्रलाभाय देवमर्कं शुचिस्मिते ॥ १२

---

1. क-ख-ग—दध्याज्यकादिभि र्नित्यं व्यञ्जनैः प्रत्यहं शुभा ।
सहस्रसङ्ख्यैर्योगीन्द्रं समुपाचरदुत्तमा ।
दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम् ।
यशस्विन्यै पृथायै स आपद्धर्मान्ववेक्षया ॥
[अधिकः पाठः]

2. क-ख-ग-घ—ग्रतः ।

[1]पुत्रस्ते निर्मितस्सुभ्रु शृणु यादृक्छुभानने ॥ १२॥
आदित्ये कुण्डले बिभ्रत् कवचं चैव मामकम् ।
शस्त्रास्त्राणामभेद्यं च भविष्यति शुचिस्मिते ॥ १३॥
[2]न न किञ्चन देयं तु ब्राह्मणेभ्यो भविष्यति ।
चोद्यमानो मया चापि [3]नाक्षमं चिन्तयिष्यति ॥ १४॥
[4]दास्यत्येव हि विप्रेभ्यो मानी चैव भविष्यति ॥ १५

1. ग—अयमस्म्यसितापाङ्गे ब्रूहि किं करवाणि ते ।

कुन्ति—

कश्चिन्मे ब्रह्मवित्प्रादाद्वरविद्यां च शत्रुहन् ॥
तद्विजिज्ञासयाऽऽह्वानं कृतवत्यस्मि ते विभो ।
एतस्मिन्नपराधे त्वां शिरसाऽभिप्रसादये ॥
योषितो हि सदा रक्ष्यास्त्वपराधेऽपि नित्यशः ।

सूर्यः—

वेदाहं सर्वमेवैतद्यद्दुर्वासा वरं ददौ ॥
सन्त्यज्योभे मानभये क्रियतां सङ्गमो मया ।
अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे ॥
वृथाह्वानाद्धि ते भीरु दोषो हि स्यादसंशयम् ।

वैशम्पायनः—

एवमुक्ता बहुविधं सान्त्वपूर्वं विवस्वता ॥
सा तु नैच्छद्वरारोहा कन्याहमिति पार्थिव ।
बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी ॥
तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ ।

सूर्यः— [अधिकः पाठः]

2. क-ख-ग-घ—नास्य किञ्चिददेयं च
3. क-ख-ग-घ—न क्षमं 4. अ—दाप्यं न चैव विप्रेभ्यः ।

वैशम्पायनः—

एवमुक्ता ततः कुन्ती गोपतिं प्रत्युवाच ह ।
कन्या पितृवशा चाहं पुरुषार्थो न चैव मे ॥ १६

सूर्यः—

यद्येवं मन्यसे भीरु किमाह्वयसि भास्करम् ।
यदि मामवजानासि ऋषिस्स न भविष्यति ॥ १७

मन्त्रदानेन [1]यस्य त्वम् अवलेपेन दर्पिता ।
कुलं च तेऽद्य धक्ष्यामि क्रोधदीप्तेन चक्षुषा ॥ १८

कुन्ती—

प्रसीद भगवन् [2]देव अवलेपो हि नास्ति मे ।
[3]ममैव परिहार्यं स्यात् कन्याभावस्य दूषणम् ॥ १९

सूर्यः—

व्यपयातु भयं तेऽद्य कुमारं [4]प्राप्स्यसे शुभे ।
मया त्वं चाभ्यनुज्ञाता पुनः कन्या भविष्यसि ॥ २०

वैशंपायनः—

एवमुक्ता ततः कुन्ती संप्रहृष्टतनूरुहा ।
संगता च तदा सुभ्रूर् आदित्येन महात्मना ॥ २१

प्रकाशकर्मा तपनः कन्यागर्भं [5]दधौ ततः ।
अजीजनत्ततो [6]वीरं सर्वशस्त्रभृतां वरम् ॥ २२

---

1. क-ख-ग—यस्मात्त्वं　2. क-ख-ग—मह्यं　3. क-ख-ग—त्वयैव
4. क-ख-ग-घ—प्रसमीक्षसे; घ—प्रसविष्यति
5. ख-ग-घ—ददौ　6. क-ख-ग—देवी

आमुक्तकवचश्श्रीमान् कुण्डलाभ्यां समावृतः ।
सोऽजायत तदा वीरस् सर्वलोकेषु विश्रुतः ॥ २३

मञ्जूषां रत्नसंपूर्णां कर्णना[1]माभिसंज्ञिताम् ।
गूहमाना[2]पचारं तं बन्धुपक्षभयात्तदा ॥ २४

उत्ससर्ज जले कुन्ती तं कुमारं सलक्षणम् ॥ २४॥

प्रादाच्च तस्याः कन्यात्वं पुनस्स परमद्युतिः ।
दत्वा च वरदश्रेष्ठो दिवमाचक्रमे पुनः ॥ २५॥

तमुत्सृष्टं तदा गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास भार्यायास्सूतनन्दनः ॥ २६॥

नामधेयं च चक्राते तस्य बालस्य तावुभौ ।
समाहूतोऽयं वसुना वसुषेणेति नामतः ॥ २७॥

स वर्धमानो बलवान् सर्वास्त्रेषूद्यतोऽभवत् ।
[3]आपृष्ठतापाच्चादित्यम् उपतस्थे कृताञ्जलिः ॥ २८॥

यस्मिन् काले [4]तपन्नास्ते स वीरस्सत्यसङ्गरः ।
नादेयं ब्राह्मणायासीत् तस्मिन् काले महात्मनः ॥ २९॥

ततः काले [5]तु कस्मिंश्चित् स्वप्नान्ते कर्णमब्रवीत् ।
आदित्यो ब्राह्मणो भूत्वा शृणु वीर वचो मम ॥ ३०॥

---

1. क-ख-ग—म्ना समाश्रिताम । 2. क-ख-ग—कुमारं तं
3. घ—आपृष्टतापमादित्यं 4 क-ख-ग-घ—ज 5. घ—महः कश्चित्

प्रभातायां रजन्यां त्वाम् आगमिष्यति वासवः ।
न तस्य [1]विप्रदातव्यं विप्ररूपी भविष्यति ॥ ३१॥

निश्चयोऽस्यापहर्तुं ते कवचं कुण्डले तथा ।
अतस्त्वां बोधयाम्येष स्मर्तासि वचनं मम ॥ ३२॥

कर्णः—

शक्रो मां विप्ररूपेण यदि वै याचते द्विज ।
कथं चास्मै न दास्यामि यथा चास्म्यवबोधितः ॥ ३३॥

विप्राः पूज्यास्तु देवानां [2]प्रियं मेऽस्त्विति ब्राह्मणः ।
[3]तदेवमेव जानन् वै न शक्रोऽस्म्यवमन्त्रणे ॥ ३४॥

सूर्यः—

यद्येवं शृणु मे वीर वरं ते सोऽपि दास्यति ।
शक्तिं त्वमपि याचेथास् सर्वश[4]स्त्र[5]विबाधिनीम् ॥ ३५॥

वैशंपायनः—

एवमुक्त्वा द्विजस्स्वप्ने तत्रैवान्तरधीयत ।
कर्णः प्रबुद्धस्तं स्वप्नं चिन्तयानोऽभवत्तदा ॥ ३६॥

तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः ।
कुण्डले प्रार्थयामास कवचं च महाद्युतिः ॥ ३७॥

---

1. क-ख-ग-घ—भिक्षा दातव्या
2. क-ख-ग—रुततं प्रियमिच्छताम् ।
3. क-ख-ग—तं देवदेवं, घ—तमेव देवं
4. ख-ग-घ—त्रु
5. क-ख-ग-घ—विघातिनीम् ।

उत्कृत्याविमनास्स्वाङ्गात् कवचं रुधिरस्रवम् ।
[1]कर्णपाशौ च द्वे छित्वा प्रायच्छत्स कृताञ्जलिः ॥३८॥
अहो साहसमित्येवं मनसा वासवो हसन् ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ ३९॥
न तं पश्यामि को ह्येतत् कर्म कर्ता भविष्यति ।
प्रीतोऽस्मि कर्मणा तेन वरं वृणु यमिच्छसि ॥ ४०॥

कर्णः--

इच्छामि भगवद्दत्तां शक्तिं शत्रुनिबर्हिणीम् ॥ ४१

वैशंपायनः—

शक्तिं तस्मै ददौ शक्रो विस्मितो वाक्यमब्रवीत् ॥ ४१॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
यस्मै क्षेप्स्यसि रुष्टस्सन् सोऽनया न भविष्यति ॥ ४२॥
हत्वैकं समरे शत्रुं ततो मामागमिष्यति ॥ ४३
पुरा नाम तु तस्याऽऽसीद् वसुषेण इति स्मृतम् ।
ततो वै कर्तनःकर्णस् स तस्मात्कारणादि[2]तः ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ७ ॥ संभवपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[अस्मिन्नध्याये ४४ श्लोकाः]

---

1. क-ख-ग—स्तु कुण्डले छित्वा
2. क-ख-ग-घ—ति

## ॥ षडधिकशततमोऽध्यायः ॥

कुन्तीविवाहः ॥ १ ॥ माद्रीविवाहः ॥२॥ पाण्डोर्दिग्विजयः ॥ ३ ॥ मृगयार्थमरण्यं गतस्य पाण्डोः किन्दमेन शापः ॥ ४ ॥

वैशंपायनः—

रूपशीलगुणोपेता धर्मकामा नरर्षभ ।
दुहिता कुन्तिभोजस्य कुन्ती राष्ट्रे पतिंवरा ॥ १

सिंहदंष्ट्रं महास्कन्धम् ऋषभाक्षं महास्वनम् ।
पतिं वव्रे महेष्वासं पाण्डुं कुन्ती यशस्विनी ॥ २

भूमिपालसहस्राणाम् अग्रतस्स तया वृतः ।
युयुजे भरतश्रेष्ठः पौलोम्या मघवानिव ॥ ३

यात्वा देवव्रतेनापि मद्राणां पुटभेदनम् ।
विश्रुता त्रिषु लोकेषु माद्री मद्रपतेस्सुता ॥ ४

सर्वराजसु विख्याता रूपेणासदृशी भुवि ।
पाण्डोरर्थे धनुष्क्रीता मद्रराजेश्वरात्मजा ॥ ५

विवाहं कारयामास भीष्मः पाण्डोर्महात्मनः ॥ ५॥

सिंहोरस्कं महेष्वासं वृषभाक्षं महास्वनम् ।
दृष्ट्वा पाण्डुं नरव्याघ्रं व्यस्मयन्त नरा भुवि ॥ ६॥

कृतोद्वाहस्ततः पाण्डुर् बलोत्साहसमन्वितः ।

गोप्ता भरतवंशस्य पाण्डुस्सर्वास्त्रकोविदः ॥ ७॥
[1]जिहीर्षमाणो वसुधां ययौ शत्रूननेकशः ॥ ८
पूर्वमागस्कृतो गत्वा दशार्णास्समरे हृताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ ९
ततस्सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
समृद्धहयपादाताम् अप्रमेयहयद्विपाम् ॥ १०
हत्वा काशिषु वङ्गेषु [2]सुह्मेषु च नराधिपान् ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ ११
आगस्कृत् सर्ववीराणां वैरी सर्वकुरुक्षिताम् ।
बहूनामागसां कर्ता वैरी सर्वमहीक्षिताम् ॥ १२
गोप्ता मगधवंशस्य दार्वो राजगृहे हृतः ॥ १२॥
ततः कोशं समादाय वाहनानि बलानि च ।
पाण्डुना मिथिलां यात्वा मैथिलास्समरे जिताः ॥ १३॥
तं शरौघं महावेगम् अस्त्रज्वलितपावकम् ।
पाण्डुमासाद्य राजानो न शेकुरतिवर्तितुम् ॥ १४॥
ते ससेनाः स्म यानेन विध्वंसितमहाबलाः ।
पाण्डुना पृथिवीपालाः कुरुकर्मसु योजिताः ॥ १५॥

---

1. क-ख-ग—जिगीषमाणो
2. क-ख-ग-घ—पौण्ड्रेषु च नराधिपाः।

तेन ते निर्जितास्सर्वे पृथिव्यां सर्वपार्थिवाः ॥ १६

तमेकं मेनिरे शूरं देवेष्विव पुरन्दरम् ।
ते कृताञ्जलयश्शूरम् आसाद्य वसुधाधिपाः ॥ १७

आजह्रुर्धनधान्यानि रत्नानि विविधानि च ।
मणिप्रवालमुक्तानि सुवर्णरजतं तथा ॥ १८

गोरत्नानि च मुख्यानि रथरत्नानि कुञ्जरान् ।
खरोष्ट्रमाहिषान् गाश्च यच्च किञ्चिदजाविकम् ॥ १९

तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ १९॥
तदादाय ययौ पाण्डुर् भृशं मुदितवाहनः ॥ २०

हर्षयन् सर्वराष्ट्राणि पुरं च गजसाह्वयम् ॥ २०॥

शन्तनो राजसिंहस्य भरतस्य च धीमतः ।
नष्टा कीर्तिस्स्ववंशस्य पाण्डुना पुन[1]राहृता ॥ २१॥

ये पूर्वं परराष्ट्राणि जह्रुः परधनानि च ।
ते नागपुरसिंहेन पाण्डुना वशगाः कृताः॥ २२॥

इत्यभाषन्त राष्ट्राणि भूमिपालाश्च संगताः ।
अभ्यनन्दंश्च वै पाण्डुम् आशीर्वादैः पृथग्विधैः ॥ २३॥

प्रसन्नमनसो भूत्वा बान्धवाः कुरुभिस्सह ।

1. क-ख-ग-घ—रुद्धृता ।

प्रत्युद्ययुस्तं संप्राप्तं सर्वे भीष्मपुरस्सराः ॥ २४॥
ते तु दीर्घमिवायान्तं गत्वा नागपुरालयाः ।
आवृतं ददृशुर्लोकं हृष्टा बहुविधैर्धनैः ॥ २५॥
नानायानसमानीतै रत्नैरुच्चावचैस्तथा ॥ २६
अजाविकाश्वसङ्घानाम् उष्ट्रगोमहिषस्य च ।
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥ २७
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथार्हं मानयामास पौरजानपदानपि ॥ २८
प्रमथ्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमासाद्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥ २९
स तूर्यशतसङ्घैश्च भेरीणां च महास्वनैः ।
हर्षयन् सर्वभूतानि विवेश गजसाह्वयम् ॥ ३०
धृतराष्ट्राभ्यनुज्ञातम् स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रेवोपजहार तत् ॥ ३१
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ ३२
ततस्सत्यवती भीष्मः कौसल्या च यशस्विनी ।
शुभैः पाण्डुजितै रत्नैर् भृशं तुतुषुराहृतैः ॥ ३३
ननन्द मनसा कौसल्या तमप्रतिमतेजसम् ।

जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ॥ ३४

तस्य वीरस्य विक्रान्तैस् [1]सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ ३५

संप्रयुक्तश्च कुन्त्या च माद्र्या च संतत नृपः ।
जितेन्द्रियस्तदापाण्डुर् बभूव वनगोचरः ॥ ३६

हित्वा प्रासादपङ्क्तीश्च शुभानि शयनानि च ।
चापपाणिर्मृगान्निघ्नन् बभूव मृगयापरः ॥ ३७

स चरन् दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः ।
उवास गिरिश्रृङ्गेषु महासालवनेषु च ॥ ३८

बभूव कुन्त्या माद्र्या च पाण्डुस्सह वनेचरः ।
द्विपराजः करेणुभ्यां यथा मध्यगतस्तथा ॥ ३९

चरन्तं सह भार्याभ्यां बाणखड्गधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ॥ ४०
देवोऽयमित्यमन्यन्त चरन्तो वनवासिनः ॥ ४०॥

तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।
अनुजह्रुर्वनान्तेषु धृतराष्ट्रप्रचोदिताः ॥ ४१॥

तदासाद्य महारण्यं मृगव्यालनिषेवितम् ।

---

1. क-ग—ःपाण्डोर्बाहुविनिर्जितैः ।
असंख्येयै धनै राजा सहस्रशतदक्षिणैः ॥ [अधिकः पाठः]

तत्र मैथुनकालस्थं ददर्श मृगयूथपम् ॥ ४२॥

स च तं च मृगीं चैव रुक्मपुङ्खैस्सवाजिभिः ।
निर्बिभेद शरैस्तूर्णं पाण्डुः पञ्चभिरायसैः ॥ ४३॥

स च राजन् महातेजा ऋषिपुत्रस्तपोयुतः ।
भार्यया सह तेजस्वी मृगरूपेण संगतः ॥ ४४॥

[1]स संयुक्तस्तथा मृग्या मानुषीं वाचमीरयन् ।
क्षणेन पतितो भूमौ विललापातुरो मृगः ॥ ४५॥

मृगः—

काममन्युवशं प्राप्ता बुद्ध्यान्तरगता अपि ।
वर्जयन्ति नृशंसानि पापेष्वभिरता नराः ॥ ४६॥

न विधिं ग्रसते प्रज्ञा प्रज्ञां तां ग्रसते विधिः ।
विधिपर्यागतानर्थान् प्रज्ञया परिपश्यति ॥ ४७॥

तस्माद्धर्मात्मनो मुख्ये कुले जातस्य भारत ।
कामलोभाभिभूतस्य कस्मात्ते छलिता मतिः ॥ ४८॥

पाण्डुः—

या वै शत्रुवधे वृत्तिस् सा मृगाणां वधे ध्रुवा ।
[2]राज्ञां मृगवनानीह किं त्वं मोहाद्विगर्हसे ॥ ४९॥

---

1. क-ग—मृगो ऋषि र्मृगी भार्या उभौ तौ तपसाऽन्वितौ ।
रेमाते विपिने भूत्वा निरङ्कुशरतेक्षणौ ॥ [अधिकः पाठः]
2. घ—नरा मृग विजानीहि किं त्वं मोहाद्विकत्थसे ।

अमायया ह्यच्छलेन मृगाणामिषुधारिभिः ।
वध एव भवेद्धर्मस् तद्विद्वान् किं विगर्हसे ॥　　५०॥

अगस्त्यस्सत्रमासीनश् चचार मृगयामृषिः ।
आरण्यान् सर्वदेवत्यान् पशून् प्रेक्ष्य महावने ॥　　५१॥

प्रमाणदृष्टं धर्मस्य शास्त्रं किं त्वं विगर्हसे ।
अगस्त्यस्याभिचारेण युष्माकं हि वपा हुता ॥　　५२॥

मृगानेव समुद्दिश्य विमुञ्चन्ति पुनश्शरान् ।
न रिपूणां समाधानं परीक्षन्ते पुरातनाः ॥　　५३॥

रन्ध्र एषां विशेषेण वधकालः प्रशस्यते ॥　　५४

प्रमत्तमप्रमत्तं वा निकृत्या घ्नन् विषेण च ।
उपायैरिषुभिस्तीक्ष्णैर् मृग कस्माद्विगर्हसे ॥　　५५

मृगः—
नाहं घ्नन्तं मृगान् राजन् विगर्हे त्वामधर्मणा ।
मैथुनं संप्रतीक्ष्यं मे त्वया स्यादानृशंस्यवत् ॥　　५६

सर्वभूत[1]हितः कालस् सर्वभूतहितश्च सः ।
नृशंसं कर्म सुमहत् सर्वलोकविगर्हितम् ॥　　५७
पुरुषार्थफलं कालं यत्त्वया वितथः कृतः ॥　　५७॥

---

1. घ—हितं काले सर्वभूतेप्सितं तथा ।

[1]नीतिमार्गप्रतिष्ठस्य भरतस्य महात्मनः ।
वंशे जातस्य राजेन्द्र नानुरूपमिदं तव ॥ ५८॥

अस्वर्ग्यमयशस्यं च अधर्मिष्ठं च भारत ।
को हि विद्वान् मृगं हन्याच्चरन्तं मैथुनं वने ॥ ५९॥

स्त्रीभोगानां विशेषज्ञश् शास्त्रधर्मार्थतत्त्ववित् ।
नार्हस्यमरसंकाश कर्तुमाचारमीदृशम् ॥ ६०॥

त्वया नृशंसं कर्तारः पापाचाराश्च ये नराः ।
निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्जिताः ॥ ६१॥

किं कृतं ते नरश्रेष्ठ निघ्नतो मामनागसम् ।
मुनिं मूलफलाहारं मृगवेषधरं नृप ॥ ६२॥

वसमानमरण्येषु नित्यं शमपरायणम् ॥ ६३

त्वयाऽहं निहतो यस्मात् तस्मात्त्वामप्यनागसम् ।
द्वयोर्नृशंसकर्तारम् अवशं काममोहितम् ॥ ६४

जीवितान्तकरो भावो मैथुने समुपेष्यति ॥ ६४॥

अहं हि किन्दमो नाम तपसाऽप्रतिमो मुनिः ॥ ६५

अपत्रपाभिभूतानां नराणां मैथुनं प्रियम् ।
मृगो भूत्वा मृगीष्वेव मैथुने विचराम्यहम् ॥ ६६

1. क-ग—राजर्षीणां पुराणानां तेषामक्लिष्टकर्मणाम् ।
ख—सर्वधर्मार्थतत्त्वज्ञ कुरूणां कीर्तिवर्धन ॥ [अधिकः पाठः]

[1]न हि ते ब्रह्महत्येयं भविष्यति न जानतः ।
मृगरूपधरं हत्वा मामेवं काममोहितम् ॥ ६७
अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि ।
प्रियया सह संवासं प्राप्य कामविमोहितः ॥ ६८
त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि ॥ ६८॥
अन्तकाले च संवासं यया गन्तासि कान्तया ॥ ६९
प्रेतराजवशं प्राप्तं सर्वभूतदुरत्ययम् ।
भक्त्या भक्तिमतां श्रेष्ठा सा वै त्वामनुयास्यति ॥ ७०
वर्तमानस्सुखे दुःखं यथाऽहं प्रापितस्त्वया ।
तथा सुखं त्वं संप्राप्य दुःखमभ्यागमिष्यसि ॥ ७१
एवमुक्त्वा सुदुःखार्तो जीवितात् स व्ययुज्यत ।
मृगः पाण्डुश्च शोकार्तः क्षणेन समपद्यत ॥ ७२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ७ ॥ संभवपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[अस्मिन्नध्याये ७२ श्लोकाः]

---

1. क-ग—गजाश्वमहिषादीनां लज्जा नास्ति चतुष्पदाम् ।
लज्जाशङ्काभीतिहीनं मैथुनं परमं सुखम् ॥
तत्सुखं द्विपदां नास्ति विद्यते यच्चतुष्पदाम् ।
नृपाणां मृगया धर्मस्तत्रापि न वधस्स्मृतः ॥
मैथुनासक्तचित्तस्य मृगद्वन्द्वस्य भूमिप । [अधिकः पाठः]

## ॥ सप्ताधिकशततमोऽध्यायः ॥

पाण्डोर्वानप्रस्थाश्रमप्रवेशः ॥ १ ॥ पाण्डोस्तपश्चरणम् ॥ २ ॥ विदुरस्य विवाहः ॥ ३ ॥ पुत्रोत्पत्तिश्च ॥ ४ ॥

वैशम्पायनः—

तमतीतमुपक्रम्य राजा स्वमिव बान्धवम् ।
सभार्यश्शोकमोहार्तः पर्यदेवयदातुरः ॥ १

पाण्डुः—

सतामपि कुले जाताः कर्मणा चातिदुर्गतिम् ।
प्राप्नुवन्ति दुरात्मानः कामजालप्रमोहिताः ॥ २

कुले धर्मात्मनां जातः कामात्मा किल भारतः ।
जीवितान्तमनुप्राप्तो बालभावे पिता मम ॥ ३

तस्य कामात्मनः क्षेत्रे राज्ञस्संय[1]मवानृषिः ।
कृष्णद्वैपायनस्साक्षाद् भगवान् मामजीजनत् ॥ ४

तस्य मे व्यसने बुद्धिस् संजातेयमिहाधमा ।
त्यक्तस्य दैवैर्विषमान्मृगयायां दुरात्मनः ॥ ५

मोक्ष एव व्यवस्यामि बद्धं हि व्यसनं महत् ।
सद्वृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ६

1. क-ख-ग-घ—त

अतीव तपसाऽऽत्मानं योजयिष्याम्यसंशयम् ॥ ६॥
तस्मादेकाहमेकाहम् एकैकस्मिन् वनस्पतौ ।
चरन् भिक्षां मुनिर्मुण्डश् चरिष्यामि महीमिमाम् ॥ ७॥
पांसुना च प्रतिच्छन्नश् शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ ८॥
न शोको न प्रहर्षश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ॥ ९॥
न जात्वभिहसन् किञ्चिन्नकुर्वन् भ्रुकुटीं क्वचित् ॥ १०
प्रसन्नवदनो नित्यं सर्वप्राणभृतः पुनः ।
जङ्गमाजङ्गमं सर्वं अविहिंसंश्चतुर्विधम् ॥ ११
प्रजावर्गे स्ववर्गस्थस् समस्सर्वप्रजाः प्रति ।
एककालं चरन् भिक्षां कुलानि द्वे च पञ्च च ॥ १२
असंभवे वा भैक्षस्य चरन्ननशनान्यपि ।
अल्पमल्पं यथा भोज्यं पूर्वलाभं च जातु चित् ॥ १३
नित्यं नातिचरन् लाभे अलाभे सप्त पूरयन् ॥ १३॥
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं ध्यायन्नुभययोरपि ॥ १४॥
याःकाश्चिज्जीवता शक्याः [1]त्यक्तं नित्यं क्षमाः क्रियाः ।

1. अ—तित्यक्षताः क्रियाः।

तास्सर्वास्समतिक्रम्य निमेषादिष्ववस्थिताः ॥ १५॥

न जिजीविषुवत् किञ्चिन्न मुमूर्षुवदाचरन् ।
मरणं जीवितं चोभे नाभिनन्दन् न च द्विषन् ॥ १६॥

तासु चाप्यनवस्थासु त्यक्तसर्वक्रियेन्द्रियः ।
संपरित्यक्तसर्वास्थस् सुनिर्णिक्तात्मकिल्बिषः ॥ १७॥

विमुक्तस्सर्वपापेभ्यो व्यतीतस्सर्ववागुराः ।
न वशे कस्य चित्तिष्ठन् सधर्मा मातरिश्वनः ॥ १८॥

एतया सततं वृत्त्या चरन्नेकप्रकारया ।
देहं संस्कारयिष्यामि निर्भयं स्थानमाश्रितः ॥ १९॥

नाहं श्वाचरिते मार्गे निर्वीर्यकृपणोचिते ।
स्वधर्मात् सततापेते रमेयं धीरवर्जिते ॥ २०॥

सत्कृतोऽसत्कृतो वापि योऽन्यं कृपणचक्षुषा ।
उपैति वृत्तिकामत्वात् [1]स शुनां वर्तते पथि ॥ २१॥

वैशंपायनः—

एवमुक्त्वा तु दुःखा[2]र्तम् अपश्यत्कुरुतर्षभः ।
अवेक्षमाणः कुन्तीं च माद्रीं च समभाषत ॥ २२॥

पाण्डुः—

कौसल्या विदुरः क्षत्ता राजा च सह बन्धुभिः, ।

1. क-ग—सिद्धिमिच्छन्सनातनीम् ।
2. क-ख-ग-घ—र्तौ निश्श्वसन् भरतर्षभ ।

आर्या सत्यवती भीष्मस् ते च राजपुरोहिताः ॥ २३॥
ब्राह्मणाश्च महाभागे सोमपास्संशितव्रताः ।
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः ॥ २४॥
प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्राजितो वनम् ॥ २५

वैशंपायनः—

श्रुत्वा च वचनं भर्तुस् त्यागधर्मकृतात्मनः ।
तत्समं वचनं कुन्ती माद्री च समभाषताम् ॥ २६

कुन्तीमाद्र्यौ—

[1]अन्येऽपि ह्याश्रमास्सन्ति ये शक्या भरतर्षभ ।
आवाभ्यां सह संवस्तुं धर्ममाश्रित्य चिन्तिताः ॥ २७
आवाभ्यां धर्मपत्नीभ्यां सह तप्त्वा महत्तपः ।
[2]वसेह भविता सार्थस् स्वर्गस्यापि न संशयः ॥ २८
प्रणिधायेन्द्रियग्रामं भर्तृलोके नरर्षभ ।
त्यक्तकामसुखे ह्यावां राजंस्तप्स्यावहे तपः ॥ २९
यदि वाऽऽवां महाभाग त्यक्ष्यस्येव विशां पते ।
अद्यैवाऽऽवां प्रहास्यावो जीवितं भरतर्षभ ॥ ३०

पाण्डुः—

यदि व्यवसितं त्वेवं युवाभ्यां धर्ममिश्रितम् ।

---

1. क-ग—अन्यस्तव ह्याश्रमोऽस्ति यश्शक्यो भरतर्षभ ।
2. क-घ—त्वमेव भविता योग्यः

सद्वृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ३१
त्यक्तग्राम्यसमाचारस् तप्यमानो महत्तपः ।
वल्कली फलमूलाशी चरिष्यामि महावने ॥ ३२
अग्निं जुह्वदुभौ कालावुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश् चीरधर्मजटाधरः ॥ ३३
शीतवातातपसहः क्षुत्पिपासाश्रमाहितः ।
तपसा विधियुक्तेन शरीरं परिशोषयन् ॥ ३४
एकान्तशीलो विमृशन् पक्वापक्वेन वर्तयन् ।
पितॄन् [1]देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ ३५
वानप्रस्थजनस्यापि दर्शयन् कुलवासिनः ।
नाप्रियाणि चरञ्जातु किं पुनर्ग्रामवासिनः ॥ ३६
एवमारण्यशास्त्राणाम् उक्तमुग्रं तपोविधिम् ।
सेवमानः प्रतीक्षिष्ये देहस्यास्य विमोक्षणम् ॥ ३७

[2]वैशंपायनः—

एवमुक्त्वा स भार्ये ते राजा कौरववंशजः ।

---

1. क-ग—देवानृषीन् पितॄंश्चैव मन्त्रैरद्भिरतर्पयन् ।

2. कुन्ती—

क-ग-घ—आवाभ्यां धर्मपत्नीभ्यां यत्तप्यं तन्महत्तपः ।
त्वमेव भव नस्साधं धर्मेण तेन नित्यशः ॥
प्रणिधायेन्द्रियग्रामं भर्तृलोकसुखाय च ।
त्यक्तकामसुखे ह्यावां राजंस्तप्यावहे तपः ॥
[अधिकः पाठः]

ततश्चूडामणिं निष्कान् अङ्गदे कुण्डलानि च ॥ ३८
मकुटं हारसूत्रं च कटिबन्धं तथैव च ।
वासांसि विमलाः खड्गास् स्त्रीणामाभरणानि च ॥ ३९
वाहनानि च मुख्यानि शस्त्राणि विविधानि च ।
हेमभाण्डानि दिव्यानि पर्यङ्कास्तरणानि च ॥ ४०
मणिमुक्ताप्रवालानि वसूनि विविधानि च ।
आसनानि च मुख्यानि बहूनि विविधानि च ॥ ४१
प्रदाय सर्वं विप्रेभ्यः पाण्डुः पुनरभाषत ॥ ४१॥

पाण्डुः—

गत्वा नागपुरं वाच्यं पाण्डुः प्रव्राजितो वने ॥ ४२
अर्थं कामं रतिं चैव रत्नानि विविधानि च ।
[1]व्रतस्थस्सर्वमुत्सृज्य सभार्यो [2]भरतर्षभ ॥ ४३

वैशम्पायनः—

ततस्तस्यानुयातारस् सर्वे च परिचारकाः ।
श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः ॥ ४४
भीममार्तस्वरं कृत्वा हा हेति परिचुक्रुशुः ॥ ४४॥
उष्णमास्रं प्रमुञ्चन्तस् तमालोक्य यशस्विनम् ।
ययुर्नागपुरं तूर्णं सर्वमादाय तद्धनम् ॥ ४५॥

---

1. क-ग-घ—प्रतस्थे　　2. ख-ग-घ—दुःखमोहितः ।

ते गत्वा नगरं राज्ञे यथावृत्तं महात्मने ।
कथयाञ्चक्रिरे सर्वं धनं च विविधं ददुः ॥ ४६॥

गृहीत्वा धृतराष्ट्रस्तु धनं भरतसत्तम ।
कृपायुक्तो महाबाहुः पाण्डुमेव स्म शोचति ॥ ४७॥

राजपुत्रस्तु कौरव्यो मुनिर्मूलफलाशनः ।
जगाम सह भार्याभ्याम् आशु नागसहं गिरिम् ॥ ४८॥

स चैत्ररथमासाद्य [1]वारिषेणमवाप्य च ।
[2]वारिषेणमतिक्रम्य गत्वा गन्धरजोवहम् ॥ ४९॥

रक्ष्यमाणो महाभूतैस् सिद्धैश्च परमर्षिभिः ।
उवास सततं राजा समेषु विषमेषु च ॥ ५०॥

इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च ।
शतशृङ्गे महाप्राज्ञस् तापसस्समपद्यत ॥ ५१॥

तत्रापि तपसि श्रेष्ठे वर्तमानः परन्तपः ।
सिद्धचारणसंघानां बभूव परमप्रियः ॥ ५२॥

शुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः ।
स्वर्गं गन्तुं पराक्रान्तस् स्वेन वीर्येण भारत ॥ ५३॥

केषांचिदभवद्भ्राता केषांचिदभवत् सखा ।
ऋषिभिस्त्वभवत्कैश्चित् पुत्रवत् परिरक्षितः ॥ ५४॥

---

1. क-ग-घ—पा 2. क-ग-घ—पा

स तु कालेन महता प्राप्य निष्कल्मषं तपः ।
ब्रह्मर्षिसदृशः पाण्डुर् अभवद्भरतर्षभ ॥ ५५॥

अमावास्यां तु सहिता ऋषयस्संशितव्रताः ।
ब्रह्माणं द्रष्टुकामास्ते संप्रतस्थुर्मनीषिणः ॥ ५६॥

संप्रस्थितानृषीन् दृष्ट्वा पाण्डुर्वचनमब्रवीत् ॥ ५७

पाण्डुः—

भवन्तः क्व गमिष्यन्ति ब्रूत मे वदतां वराः ॥ ५७॥

ऋषयः—

समवायो महानद्य ब्रह्मलोके महात्मनाम् ।
देवानां च ऋषीणां च पितॄणां च महात्मनाम् ॥ ५८॥

वयं तत्र गमिष्यामो द्रष्टुकामास्स्वयम्भुवम् ॥ ५९

वैशम्पायनः—

पाण्डुमुत्थाय सहसा गन्तुकामं मनीषिभिः ।
स्वर्गमार्गं तितीर्षन्तं शतशृङ्गादुदङ्मुखम् ॥ ६०

प्रस्थितं सह भार्याभ्याम् अब्रुवंस्ते तु तापसाः ॥ ६०॥

उपर्युपरि गच्छन्तश् शैलराजमुदङ्मुखाः ।
प्रपश्यामो गिरिं तस्मिन् दुर्गान् देशान् बहून् वयम् ॥ ६१॥

यक्षराक्षसगुप्तानि गन्धर्वचरितानि च ।
आक्रीडितान्यप्सरोभिस् सह देवगणैस्सदा ॥ ६२॥

सदनानि कुबेरस्य हृद्यानि च मृदूनि च ।
तेषां नदं नितम्बांश्च घोरांश्च गिरिगह्वरान् ॥ ६३॥

सन्ति नित्यहिमा देशा निवृत्तमृगपक्षिणः ।
सन्ति केचित् सदावर्षा घोररूपा दुरासदाः ॥ ६४॥

पक्षिणां न गतिस्तत्र कथमेवापरे मृगाः ।
वायुरेवात्र संयाति सिद्धा यक्षाश्च चारणाः ॥ ६५॥

गच्छन्त्यौ शैलराजेऽस्मिन् राजपुत्र्यौ कथं त्विमे ।
न सीदेतामदुःखार्हे मा गमो भरतर्षभ ॥ ६६॥

पाण्डुः—

अप्रजस्य किल स्वर्गम् अद्वारं संप्रचक्षते ।
स हि सन्तापतप्तोऽहम् अप्रजश्च ब्रवीमि वः ॥ ६७॥

सोऽहमुग्रेण तपसा सभार्यस्त्यक्तजीवितः ।
अनपत्योऽपि विन्देयं स्वर्गमुग्रेण कर्मणा ॥ ६८॥

तापसाः—

अस्ति वै तव धर्मात्मन् विदुर्देवोपमं शुभम् ।
अपत्यमनघं त्विष्टं पश्यामो दिव्यचक्षुषा ॥ ६९॥

दैवादिष्टं मनुष्येन्द्र कारणेनोपपादय ।
अरिष्टं क्षिप्रमव्यग्रो विन्देथाः परमां गतिम् ॥ ७०॥

तस्मादिष्टफले तात कुरु यत्नं यथागमम् ।

अपत्यं गुणसंपन्नं लब्ध्वा प्रीतिमवाप्स्यसि ॥ ७१॥

वैशंपायनः—

तच्छ्रुत्वा तापसवचः कौरव्यस्समचिन्तयन् ।
मृगशापादपहृताम् आत्मनो ह्रीन्द्रियक्रियाम् ॥ ७२॥
अथ [1]पारशवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स शुश्रावापगासुतः ॥ ७३॥
ततस्तु वरयित्वा ताम् आनाय्य पुरुषर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ ७४॥
तस्यां चोत्पादयामास विदुरः कुरुनन्दनः ।
पुत्रान् विनयसंपन्नान् आत्मनस्सदृशान् गुणैः ॥ ७५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ७ ॥ संभवपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[अस्मिन्नध्याये ७५॥ श्लोकाः ]

---

## ॥ अष्टाधिकशततमोऽध्यायः ॥

गान्धार्यां धृतराष्ट्राद्गर्भोत्पत्तिः ॥ १ ॥ पुत्रजनने पाण्डोश्चिन्ता ॥२॥
व्युषिताश्वोपाख्यानम् ॥ ३ ॥

---

वैशंपायनः—

ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वेश्यायाम् एकश्चैव शतात् परः ॥ १

---

1. घ—दाशरवीं

कथञ्चित् सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ।
वर्तमानं प्रियेष्वेव धृतराष्ट्रोऽन्ववर्तत ॥ २

पाण्डोः कुन्त्यां च माद्र्यां च पञ्च पुत्रा महारथाः ।
समपद्यन्त देवेभ्यस् सन्तानाय कुलस्य च ॥ ३

[1]जनमेजयः—

एतत् सर्वं यथावृत्तं विस्तरेण तपोधन ।
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ॥ ४

कथं चापि स वेश्यायाम एकश्चैव शतात् परः ॥ ४॥

कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ।
वर्तमानां प्रियेष्वेव धृतराष्ट्रोऽन्ववर्तत ॥ ५॥

वैशम्पायनः—

तृषितं बुभुक्षितं शान्तं द्वैपायनमुपस्थितम् ।
तोषयामास गान्धारी स तु तस्यै वरं ददौ ॥ ६॥

सा वव्रे सततं भर्तुः पुत्राणां शतमात्मनः ।
ततः कालेन सा गर्भम् अगृह्णाज् ज्ञानचक्षुषः ॥ ७॥

गान्धार्यामाहिते गर्भे पाण्डुरम्बालिकासुतः ।

---

1. क-ग-घ—कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
किंयता वापि कालेन तेषामायुश्च किं परम् ॥
कथं च शप्तस्य ततः पाण्डोस्तेन महात्मना ।
समुत्पन्ना दैवतेभ्यः पञ्च पुत्रा महारथाः ॥
[अधिकः पाठः]

अगच्छत् परमं दुःखम् अपत्यार्थमरिन्दम ॥ ८॥

गर्भिण्यामथ गान्धार्यां पाण्डुः परमदुःखितः ।
मृगाभिशापादात्मानं शोचन्नुपहतक्रियः ॥ ९॥

स गत्वा तपसा सिद्धिं विश्वामित्रो यथा भुवि ।
देहन्यासे कृतमना इदं वचनमब्रवीत् ॥ १०॥

पाण्डुः—

चतुर्भिर्ऋणवानित्थं जायते मनुजो भुवि ।
पितृदेवमनुष्याणाम् ऋषीणामथ भारत ॥ ११॥

एतेभ्यस्तु यथाकालं यो न मुच्येत [1]कालवित् ।
न तस्य लोकास्सन्तीति तथा लोकविदो विदुः ॥ १२॥

यज्ञेन देवान् प्रीणाति स्वाध्यायैस्तपसा ऋषीन् ।
पुत्रैश्श्राद्धैरपि पितॄन् आनृशंस्येन मानवान् ॥ १३॥

ऋषिदेवमनुष्याणाम् अतिमुक्तोऽस्मि सर्वदा ।
पितॄणां तु न मुक्तोऽस्मि तच्च तेभ्यो विशिष्यते ॥ १४॥

देहनाशे ध्रुवो नाशः पितॄणामथ निश्चयः ।
इतरेषां त्रयाणां तु नाशे ह्यात्मा विनश्यति ॥ १५॥

पितॄणामृणनाशाद्धि न प्रजा नाशमृच्छति ।
इह तस्मात् प्रजालाभे प्रयतन्ते द्विजोत्तमाः ॥ १६॥

---

1. क-ख-ग-घ—धर्मवित् ।

यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना ।
तथैवास्मिन् मम क्षेत्रे कथं सृज्येत वै प्रजाः ॥ १७॥

वैशम्पायनः—

स समानीय कुन्तीं च माद्रीं च भरतर्षभः ।
आचष्ट पुत्रलाभस्य व्युष्टिं सर्वक्रियाधिकाम् ॥ १८॥

उत्तमादवराः पुंसः काङ्क्षन्ते पुत्रमापदि ।
अपत्यं धर्मफलदं श्रेष्ठादिच्छन्ति साधवः ॥ १९॥

अनुनीय तया सम्यङ्महाब्राह्मणसंसदि ।
ब्राह्मणं गुणवन्तं वै चिन्तयामास धर्मवित् ॥ २०॥

सोऽब्रवीद्विजने कुन्तीं धर्मपत्नीं यशस्विनीम् ॥ २१

पाण्डुः—

अपत्यस्य सुखं योगम् आपदि प्रसमर्थये ।
नानपत्यस्य मे लोके प्रतिष्ठा धर्मसंहिता ॥ २२

इति कुन्ति विदुर्धर्मं शाश्वतं धर्मचारिणः ॥ २२॥

इष्टं दत्तं तपस्तप्तं नियमाश्च स्वनुष्ठिताः ।
सर्वमेवानपत्यस्य मोघं भवति निश्चयम् ॥ २३॥

सोऽहमेवं व्यवसितं प्रेक्ष्यात्मानं न संक्षमे ।
अनपत्यो हि मरणं कामये नात जीवितम् ॥ २४॥

मृगाभिशापाज्जानासि प्रजने मम केवलम् ।

नृशंसं कर्मणा कृत्स्नं यथाह्युपगतं तथा ॥ २५॥
षडेव बन्धुदायादा [1]निर्विष्टास्ताञ्छृणु प्रिये ॥ २६
स्वयं जातः क्षेत्रिकश्च परिक्रीतश्च यस्सुतः ।
पौनर्भवेयः कानीनो जारि[2]ण्याश्चैव जायते ॥ २७
दत्तः क्रीतोपहितकावुपगच्छेत्तथा स्वयम् ।
सहोढो जातरेताश्च भिन्नयोनिधृतश्च यः ॥ २८
पूर्वं पूर्वमसंभावे मत्वा लिप्सेत वै सुतम् ॥ २८॥
उत्तमादवरं जन्म काङ्क्षन्ते धर्मचारिणः ।
फलं महदपत्यस्य तस्य भूतिरनुग्रहः ॥ २९॥
आपद्यपत्यजननं मनुस्स्वायम्भुवोऽब्रवीत् ।
तस्मात् त्वां प्रहिणोम्यद्य पाहि मां प्रजनात्स्वयम् ॥ ३०॥
क्षत्रियाच्छ्रेयसो वापि सूष्वापत्यं यशस्विनि ॥ ३१
या हि ते भगिनी साध्वी श्रुतसेना तपस्विनी ।
[3]उवाह यां तु कैकेयश् शारदण्डायनिर्महान् ॥ ३२
सा वीरपत्नी स्वजनैर् नियुक्ताऽपत्यकर्मणि ।
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ॥ ३३

---

1. क-ग-घ—पुत्रास्सद्धर्मदर्शिनः ।
षडेव बन्धुदायादा निर्दिष्टास्तान्श्रृणु प्रिये ॥
2. क-ख-ग-घ—ण्यां यश्च [अधिकः पाठः]
3. क-ग-घ—उदावहत्तां

अपत्यार्थे प्रजालाभे अन्वगच्छच्छुभव्रता ।
वरयित्वा द्विजं देवी कृते पुंसवने पुरा ॥ ३४
कर्मण्यवसिते तस्मिन् सा तेनैव सहावसत् ।
सा त्रीन् वीरानजनयद् दुर्जयादीन् महारथान् ॥ ३५
तथा त्वमपि कल्याणि ब्राह्मणं तपसाऽधिकम् ।
मन्नियोगात् कुरु क्षिप्रम् अपत्योत्पादकं महत् ॥ ३६

वैशंपायनः—

एवमुक्ता महाराज कुन्ती तं प्रत्यभाषत ।
कुरूणामृषभं वीरं तदा भूमिपतिं पतिम् ॥ ३७

कुन्ती—

न मामर्हसि धर्मज्ञ वक्तुमेवं कथं चन ।
धर्मपत्नीं च पत्नीं च राजन् राजीवलोचन ॥ ३८
त्वमेव हि महाबाहो मय्यपत्यानि भारत ।
तथा वीर्योपपन्नानि संपादयितुमर्हसि ॥ ३९
स्वर्गं मनुजशार्दूल गच्छावो वा तवेप्सितम् ।
अपत्याय च मां गच्छ त्वमेव कुरुपुङ्गव ॥ ४०
नह्यावां मनसाऽप्यन्यं गच्छाव पुरुषर्षभ ।
[1]त्वत्तः प्रतिविशिष्टस्सन् को योऽन्यो भुवि मानवः ॥ ४१

---

1. क-ग—त्वत्तो यः प्रविशिष्टस्सः कोऽन्योऽस्ति

इमां धर्म्यां धर्म्यकथां [1]मम चैव निबोधय ।
पौराणिकीं विशालाक्ष कीर्तयिष्यामि भारत ॥ ४२
व्युषिताश्व इति ख्यातो बभूव भुवि पार्थिवः ।
पुरा परमधर्मज्ञः पूरोर्वंशविवर्धनः ॥ ४३
तस्मिंश्च यजमाने वै धर्मात्मनि महात्मनि ।
अगच्छंस्त्रिदशास्सर्वे सेन्द्रास्सर्वमहर्षिभिः ॥ ४४
अमाद्यदिन्द्रस्सोमेन तुतुषुर्गुरवो धनैः ।
व्युषिताश्वस्य राजर्षेस् तदा यज्ञे महात्मनः ॥ ४५
व्युषिताश्वो मनुष्येन्द्रश् शुशुभे यज्ञसंपदा ।
सर्वभूतेषु राजेन्द्र शरत्काल इवांशुमान् ॥ ४६
स विजि[2]त्वा गृहीत्वा तु नृपतीन् राजसत्तमः ।
प्राच्यानुदीच्यान् मत्स्यांश्च दक्षिणा अभ्यकल्पयत् ॥ ४७
अश्वमेधशतैरिष्ट्वा व्युषिताश्वः प्रतापवान् ।
बभूव नृपशार्दूलो दशनागबलः किल । ४८
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
अप्रमेयमपर्यन्तं व्युषिताश्वो धनं ददौ ॥ ४९
व्युषिताश्वस्समुद्रान्तां विजित्येमां वसुन्धराम् ।
अपालयत् सर्ववर्णान् पिता पुत्रानिवौरसान् ॥ ५०

---

1. क-ग—कथयामि निबोध मे । 2. क-ख-घ—त्य

यजमानो महायज्ञैर् ब्राह्मणेभ्यो महद्धनम् ।
अनन्तामखिलां तत्र पृथिवीमददात्ततः ॥ ५१

[1]सुषाव च बहून् सोमान् सोमसंस्थां तथैव च ॥ ५१॥

आसीत् काक्षीवती तस्य भार्या परमसंमता ।
भद्रा नाम मनुष्येन्द्र ! रूपेणासदृशी भुवि ॥ ५२॥

कामयामासतुश्चैव परस्परमिति श्रुतम् ॥ ५३

स तस्यां कामसंसक्तो यक्ष्मणा समपद्यत ।
अचिरेणैव कालेन जगामास्तमिवांशुमान् ॥ ५४

तस्मिन् वृत्ते मनुष्येन्द्र भार्या काक्षीवती तदा ।
अपुत्रा पुरुषव्याघ्र विललापेति नश्श्रुतिः ॥ ५५

भद्रा परमदुःखार्ता तन्निबोध नृपोत्तम ॥ ५५॥

भद्रा—

नारी परमधर्मज्ञा सर्वा पुत्रविनाकृता ।
पत्या विना जीवति या न सा जीवत्यसंशयम् ॥ ५६॥

पत्या विना मृतं श्रेयो नार्याः क्षत्रियपुङ्गव ।
तद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम् ॥ ५७॥

त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे ।
प्रसादं कुरु मे राजन् इतः क्षिप्रं नयस्व माम् ॥ ५८॥

---

1. क-ग-घ—सुषुवे

पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च ।
त्वामहं नरशार्दूल गच्छन्तमनिवर्तिनम् ॥　५९॥
छायेवानुगता राजंस् तवाहं वशवर्तिनी ।
भविष्यामि नरव्याघ्र! नित्यं प्रियहितैषिणी ॥　६०॥
अद्यप्रभृति मे राजन् कष्टा हृदयशोषणाः ।
आधयो हि भविष्यन्ति त्वदृते पुष्करेक्षण ॥　६१॥
अभाग्यया मया नूनं विमुक्तास्सहचारिणः ।
संयोगा [1]विप्रयोगाश्च पूर्वदेहे न संशयः ॥　६२॥
तदिदं कर्मभिः पापैः पूर्वदेहेषु संचितैः ।
दुःखं मामनुसंप्राप्तं राजंस्त्वद्विप्रयोगजम् ॥　६३॥
एषाहमद्य राजेन्द्र! कुशानास्तीर्य शायिनी ।
दर्शयस्व मनुष्येन्द्र साधु मां पुष्करेक्षण ॥　६४॥
विक्रोशन्तीं सतीं दुःखाद् देहमास्तां नरेश्वर ॥　६५

वैशम्पायनः—

एवं बहुविधास्तस्या विलपन्त्याः पुनः पुनः ।
तस्मिन् छवशरीरे वाक् तां किलान्तर्हिताऽब्रवीत् ॥　६६
उत्तिष्ठ भद्रे गच्छ त्वं ददानि हि वरं तव ।
जनयिष्याम्यपत्यानि त्वय्येवाहं वराङ्गने ॥　६७
आत्मीये तु वरारोहे शयने [2]मां चतुर्दशीम् ।

---

1. क-ग-घ—द्विप्रमुक्ताश्च　　2. क-ग-घ—त्वं

अष्टमीं वाप्यृतुस्नाता सं[1]भवेथाऽशुचिस्मिते ॥ ६८

कुन्ती—

एवमुक्ताथ सा देवी तच्चकार यशस्विनी ।
तथा कमलपत्राक्षी यथोक्तं पुत्रगर्धिनी ॥ ६९
सा तेन सुषुवे देवी [2]क्रमेण मनुजाधिप ।
त्रीन् साल्वांश्चतुरो मद्रान् पुत्रान् भरतसत्तम ॥ ७०
तथा त्वमपि मय्येव मनसा भरतर्षभ ।
शक्तो जनयितुं राजन् अपत्यं तपसो बलात् ॥ ७१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ७ ॥ संभवपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[अस्मिन्नध्याये ७१ श्लोकाः]

---

## ॥ नवाधिकशततमोऽध्यायः ॥

उद्दालककथा ॥ १ ॥ उद्दालकपुत्रेण श्वेतकेतुना कृता स्त्रीपुरुष मर्यादा ॥ २ ॥ गुणाधिकात् द्विजात् पुत्रोत्पादनार्थं पाण्डोराज्ञा ॥ ३ ॥ कुन्त्या स्वस्य दुर्वाससस्सकाशान्मन्त्रप्राप्तिकथनम् ॥ ४ ॥

---

वैशंपायनः—

एवमुक्तस्तया राजा तां देवीं वाक्यमब्रवीत् ।
धर्मविद्धर्मसंयुक्तम् इदं वचनमुत्तमम् ॥ १

---

1. क-ख-ग-घ—विशो 2. क-ग—शवेन; घ-शापेन

पाण्डुः—

एवमेव वरारोहे व्युषिताश्वश्चकार ह ।
त्वया यथोक्तं कल्याणि ! सह्यासीदमरोपमः ॥ २

अथ त्विमं प्रवक्ष्यामि धर्मं चैव निबोध मे ।
पुराणमृषिभिर्दृष्टं[1] वत्सधर्मविदां वरैः ॥ ३

अनावृताः किल पुरा स्त्रिय आसन् वराङ्गने ।
कामचारप्रचारिण्यस् स्वतन्त्राश्चारुहासिनि ॥ ४

कामान् व्युच्चरमाणानां कौमारान् सुभगे पतीन् ।
नासीदधर्मस्तु तदा स हि धर्मस्सनातनः ॥ ५

तं चैव धर्मं धर्मज्ञे तिर्यग्योनिगताः प्रजाः ।
पालयन्ति वरारोहे यथावदसितेक्षणे ॥ ६

उत्तरेष्वपि रम्भोरु कुरुष्वद्यापि वर्तते ।
स्त्रीणामनुग्रहो धर्मस् स एव हि सनातनः ॥ ७

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकस्सर्वभूतानां न पुंसां वामलोचना ॥ ८

एवं तृष्णा तु नारीणां पुरुषात् पुरुषान् प्रति ।
अगम्यागमनं स्त्रीणां नास्ति नित्यं शुचिस्मिते ॥ ९

पुत्रं वा किल पौत्रं वा कासांचिद्भ्रातरं तथा ।

1. घ—सर्वधर्मप्रवर्तिभिः ।

रहसीह नरं दृष्ट्वा योनिरुत्क्लिद्यते स्त्रियाः ॥ १०
एतत् स्वाभाविकं स्त्रीणाम् अनिमित्तं तु तद्भवेत् ।
अस्मिंस्तु न चिराल्लोके मर्यादेयं यशस्विनि ॥ ११

[1]बभूवोद्दालको नाम महर्षिरिति नश्श्रुतम् ।
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ॥ १२

मर्यादा स्थापिता येन मानुषेषु विशेषतः ।
[2]कोपात् कमलपत्राक्षि यदर्थं तन्निबोध मे ॥ १३

[3]श्वेतकेतुस्तदा देवि तप उग्रं समास्थितः ।
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वभ्रोदकाशनः ॥ १४

शिशिरे जलमध्यस्थस् सह पत्न्या महातपाः ।
उद्दालकं तपस्यन्तं नियमेन समाहितम् ॥ १५

तस्य पुत्रश्श्वेतकेतुः परिचर्यां चचार ह ।
अभ्यगच्छद्द्विजः कश्चिद् वलीपलितसन्ततः ॥ १६

तं दृष्ट्वैव मुनिः प्रीतः पूजयामास शास्त्रतः ।
स्वागतेन च पाद्येन मृदुवाक्यैश्च भामिनी ॥ १७

शाकमूलफलाद्यैश्च वन्यैरन्यैरपूजयत् ।

---

1. क-ग-घ—स्थापिता येन यस्तां च तत्ते विस्तरतश्शृणु । [अधिकः पाठः]
2. घ—मनुष्यव्यतिरिक्तेषु लोकेष्वद्यापि दृश्यते । [अधिकः पाठः]
3. घ—येनेदं मानुषे लोके गर्हितं ते निबोध मे । [अधिकः पाठः]

क्षुत्पिपासाश्रमैकार्तः पूजितस्तु महर्षिणा ॥ १८
विश्रान्तो मुनिमासाद्य पर्यपृच्छद्द्विजस्तदा ।
उद्दालक महर्षे त्वं सत्यं मे ब्रूहि माऽनृतम् ॥ १९
ऋषिपुत्रः कुमारोऽयं दर्शनीयो विशेषतः ।
तव पुत्रमिमं मन्ये कृतकृत्योऽसि तद्वद ॥ २०

उद्दालकः—

मम पत्नी महाप्राज्ञ! कुशिकस्य सुता मता ।
मामेवानुगता पत्नी मम नित्यमनुव्रता ॥ २१
अरुन्धतीव पत्नीनां तपसा कर्शितस्तनी ।
[1]अस्यां जातः श्वेतकेतुर् मम पुत्रो महातपाः ॥ २२
वेदवेदाङ्गविद्विप्र मच्छासनपरायणः ।
लोकज्ञस्सर्वलोकेषु विश्रुतस्सत्यवाग्घृणी ॥ २३

द्विजः—

अपूर्वा भार्यया[2]चास्मि वृद्धोऽहं मन्दचाक्षुषः ।
पित्र्यादृणादनिर्मुक्तः पूर्वमेवाकृताश्रयः ॥ २४
प्रजारिणी तु पत्नी ते कुलशीलसमाधिनी ।
सदृशी मम गात्रेण वहाम्येनां क्षमस्व वै । २५

1. घ—इयं प्रजारिणी मह्यं धर्मस्यैवारणिर्ध्रुवा ।
कालेऽप्यस्मिन् ममैवेयं छायेवानुगता सती ॥
2. क-ख-ग—चार्थी　　[अधिकः पाठः]

पाण्डुः—

[1]इत्युक्त्वा मृगशावाक्षीं चीरकृष्णाजिनाम्बराम् ।
यष्ट्याधारस्स्रस्तगात्रो मन्दचक्षुरबुद्धिमान् ॥ २६
[2]सव्यापाराम‍क्षमां ताम् अचित्तामात्मनि द्विजः ।
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ॥ २७
जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत् ॥ २७॥
ऋषिपुत्रस्ततः कोपं चकारामर्षितस्तदा ॥ २८
स मातरं तथा दृष्ट्वा नीयमानां बलादिव ।
तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे ॥ २९
सङ्गृह्य मातरं हस्ते श्वेतकेतुरभाषत ॥ २९॥

श्वेतकेतुः—

दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम् ।
अयं पिता मे ब्रह्मर्षिः क्षमावान् ब्रह्मवित्तमः ॥ ३०॥
शापानुग्रहयोश्शक्तस् तूष्णींभूतो महाव्रतः ।
तस्य पत्नी दमोपेता मम माता विशेषतः ॥ ३१॥
पतिव्रतां तपोवृद्धां साध्वाचारैरलङ्कृताम् ।
प्राणदानेन ते ब्रह्मन् मातृभूतां विमुञ्च मे ॥ ३२॥

वैशम्पायनः—

एवमुक्त्वा तु याचन्तं विमुञ्चेति मुहुर्मुहुः ।

---

1. घ—पुत्रमेकं समुत्पाद्य पितॄणामृणमोचकम् ।
प्रदास्यामि पुनस्तेऽहं प्रजारणिमिमां मुने ॥ [अधिकःपाठः]
2. क-ख-ग-घ—स्व

प्रत्यवोचद्द्विजो राजन् अप्रगल्भमिदं वचः ॥ ३३॥

द्विजः—

अपत्यार्थं श्वेतकेतो वृद्धोऽहं मन्दचाक्षुषः ।
पिता ते ऋणनिर्मुक्तस् त्वया पुत्रेण काश्यपः ॥ ३४॥
ऋणादहमनिर्मुक्तो वृद्धोऽहं विगतस्पृहः ।
मम को दास्यति सुतां कन्यां सम्प्राप्तयौवनाम् ॥ ३५॥
प्रजारणीमिमां पत्नीं विमुञ्च त्वं महातपः ।
एकया प्रजया प्रीतो मातरं ते ददाम्यहम् ॥ ३६॥

पाण्डुः—

एवमुक्तश्श्वेतकेतुर् लज्जया क्रोधमेयिवान् ।
तं क्रुद्धं वै पिता ज्ञात्वा श्वेतकेतुमुवाच ह ॥ ३७॥

उद्दालकः—

मा तात कोपं कार्षीस्त्वम् एष धर्मस्सनातनः ।
अनावृता हि वर्णानां सर्वेषामङ्गना भुवि ॥ ३८॥
यथा गावस्स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः ॥ ३९
तथैव वै कुटुम्बेषु न [1]प्रमाद्यन्ति कर्हि चित् ।
ऋतुकाले तु सम्प्राप्ते भर्तारं न जहुस्तदा ॥ ४०

पाण्डुः—

एवमुक्तो महाबाहुश् श्वेतकेतुर्न चक्षमे ॥ ४०॥
चकारैव च मर्यादाम् इमां स्त्रीपुंसयोर्भुवि ॥ ४१

[1]मानुषेष्वसितापाङ्गे न त्वेवान्येषु जन्तुषु ।
तदाप्रभृति मर्यादा स्थापितेयमिति श्रुतिः ॥ ४२
व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् ।
भ्रूणहत्याकृतं पापं भविष्यत्यसुखावहम् ॥ ४३
अद्याप्यनुविधीयन्ते कामद्वेषविवर्जिताः ।
उत्तरेषु महाभागे कुरुष्वेवं यशस्विनि ॥ ४४
पुराणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ॥ ४४॥
भार्यां तथा व्युच्चरतः कौमारीं ब्रह्मचारिणीम् ।
पतिव्रतामेतदेव भविता पातकं भुवि ॥ ४५॥
पत्या नियुक्ता या चैव पत्न्यपत्यार्थमेव च ।
[2]न करिष्यति तस्याश्च भविष्यत्येतदेव हि ॥ ४६॥
इति तेन पुरा भीरु मर्यादा स्थापिताऽबले ।
उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना ॥ ४७॥
तेन भूयस्ततो दृष्टं यस्मिन्नर्थे निबोध तत् ॥ ४८
नियुक्ता पतिना भार्या यद्यपत्यस्य कारणात् ।
न कुर्यात्तत्तथा भीरु सैनस्सुमहदाप्नुयात् ॥ ४९

---

1. घ—मर्यादेयं मनुष्येषु न चान्येषु सुरेषु च ।
2. घ—न भविष्यति तस्याघं भविष्यत्यन्यथैव हि ।
अयं च नियमस्तिष्ये वर्ज्यः प्रोक्तो मनीषिभिः ॥
तिष्ये न वर्तते ह्रीयं मर्यादा पापगौरवात् ॥ [अधिकः पाठः]

सौदासेन च रम्भोरु नियुक्ताऽपत्यकर्मणि ।
मदयन्ती जगामर्षिं वसिष्ठमिति नश्श्रुतम् ॥ ५०
तस्माल्लेभेऽथ सा पुत्रम् अश्मकं नाम भामिनि ॥ ५०॥
भार्या कल्माषपादस्य भर्तुः प्रियचिकीर्षया ॥ ५१
अस्माकमपि वै जन्म विदितं पङ्कजेक्षणे ।
कृष्णद्वैपायनाद् भीरु कुरूणां वंशवृद्धये ॥ ५२
तस्मादेतानि सर्वाणि कारणानि निरीक्ष्य तु ।
सम्प्रधार्य मयोक्तं यत् तत् त्वं वै कर्तुमर्हसि ॥ ५३
ऋतावृतौ राजपुत्रि स्त्रिया भर्ता शुभेक्षणे ।
नातिवर्त्य इति त्वेवं धर्मं धर्मविदो विदुः ॥ ५४
शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति॥ ५४॥
धर्मं चैव जनास्सन्तः पुराणं परिचक्षते ॥ ५५
भर्ता स्त्रियं राजपुत्रि शुभं वा यदि वाऽशुभम् ।
कार्ये नियुञ्ज्यात् सुश्रोणि! कर्तव्यं तदकालिकम् ॥ ५६
विशेषतः पुत्रगृध्नुर् हीनः प्रजननात् स्वयम् ।
यथाऽहमनवद्याङ्गि पुत्रदर्शनलालसः ॥ ५७
अयं रक्ताङ्गुलितलः पद्मपत्रनिभश्शुभः ।
प्रसादनार्थं सुश्रोणि! शिरस्यभ्युद्यतोऽञ्जलिः ॥ ५८
मन्नियोगात् सुकेशान्ते मत्तश्श्रेयस्तरैर्द्विजैः ।

अपत्यानि विशिष्टानि कैश्चिदुत्पादयाबले ॥ ५९
त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिम् ॥ ५९॥

वैशंपायनः—

एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयम् ।
प्रत्युवाच वरारोहा भर्तुः प्रियचिकीर्षया ॥ ६०॥

कुन्ती—

अधर्मस्सुमहानेष स्त्रीणां भरतसत्तम ।
[1]यत् प्रसादयते भर्ता प्रसाद्यः क्षत्रियर्षभ ॥ ६१॥
शृणु चेदं महाबाहो मम प्रीतिकरं वचः ॥ ६२
[2]पितृवेश्मन्यहं बाला नियुक्ता तिथिभोजने ।
उग्रं पर्यचरं पूर्वं ब्राह्मणं संशितव्रतम् ॥ ६३
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ॥ ६३॥
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयम् ॥ ६४
स मे [3]ह्याचारसंयुक्तम् आचष्ट भगवान् मुनिः ।
मन्त्रग्रामं च मे प्रादाद् अब्रवीच्चैव मामिदम् ॥ ६५
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।

---

1. घ—या प्रसादयते भर्त्रा प्रसाद्येन नृपोत्तम ।
2. घ—नावाहयाम्यहं लोके मानुषे कं च मानकम् ।
ब्राह्मणं क्षत्रियं वापि वैश्यं शूद्रमथापि वा ॥ [अधिकः पाठः]
3. क-ख-ग—ऽभिचार

अकामो वा सकामो वा [1]स समेष्यति ते वशम् ॥ ६६

इत्युक्ताऽहं तदा तेन पितृवेश्मनि भारत ।

ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽयमागतः ॥ ६७

अनुज्ञाता त्वया देवम् आह्वयेयं परन्तप ॥ ६७॥

यां मे विद्यां महाराज अददात् स महायशाः ।

[2]तयाऽऽहूतस्सुरः पुत्रं प्रदास्यति सुरोपमम् ॥ ६८॥

अनपत्यकृतं यस्ते शोकं हि व्यपनेष्यति ॥ ६९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

॥ ७ ॥ संभवपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[अस्मिन्नध्याये ६९ श्लोकाः]

---

## ॥ दशाधिकशततमोऽध्यायः ॥

यमवाय्वोः प्रसादाद् युधिष्ठिरभीमयोरुत्पत्तिः ॥ १ ॥

---

कुन्ती—

अपत्यकाम एवं स्यान्ममापत्यं भवेदिति ॥ ॥

विप्रं वा गुणसम्पन्नं सर्वभूतहिते रतम् ।

---

1. घ—वशमेष्यत्यसंशयः ।

2. घ—परावरज्ञो मेधावी कृपया परिपृच्छतः । [अधिकः पाठः]

अनुजानीहि भद्रं ते दैवतं हि पतिस्त्रियाः ॥ १॥
यं त्वं वक्ष्यसि धर्मज्ञ देवं ब्राह्मणमेव वा ।
यथोद्दिष्टं त्वया वीर तत्कर्तास्मि महाभुज ॥ २॥
देवात्पुत्रफलं सद्यो विप्रात् कालान्तरे भवेत् ॥ ३
आवाहयामि कं देवं कदा वा भरतर्षभ ।
तत् त्वदाज्ञां प्रतीक्षन्तीं विद्ध्यस्मिन् कर्मणीप्सिते ॥ ४

पाण्डुः—

धन्योऽस्म्यनुगृहितोऽस्मि त्वं नो धात्री कुलस्य हि ।
नमो महर्षये तस्मै येन दत्तो वरस्तव ॥ ५
न चाधर्मेण धर्मज्ञे शक्याः पालयितुं प्रजाः ॥ ५॥
तस्मात् त्वं पुत्रलाभाय सन्तानाय ममैव च ।
प्रवरं सर्वदेवानां धर्ममावाहयाबले ॥ ६॥

वैशंपायनः

पाण्डुना समनुज्ञाता भारतेन यशस्विना ।
मतिं चक्रे महाराज धर्मस्यावाहने तदा ॥ ७॥

पाण्डुः—

अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि ।
धर्ममावाहय शुभे स हि देवेषु मुख्यभाक् ॥ ८॥
अधर्मेण न धर्मो वै संयुज्येत कदा चन ।
लोकश्चापि वरारोहे धर्मोऽयमिति मंस्यते ॥ ९॥

धार्मिकश्च कुरूणां स भविष्यति न संशयः ।
दत्तस्य तस्य धर्मेण नाधर्मे रंस्यते मनः ॥ १०॥

[1]धर्मादिकं हि धर्मज्ञे धर्मान्तं धर्ममध्यमम् ।
प्रशस्तमिष्टं लोकेषु यशःकीर्तिविवर्धनम् ॥ ११॥

ततो धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते ।
आकाराचारसम्पन्ना भजस्वाराधय स्वयम् ॥ १२॥

वैशम्पायनः—

सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना ।
अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमथाकरोत् ॥ १३॥

संवत्सरोषिते गर्भे गान्धार्यां जनमेजय ।
आजुहाव ततो धर्मं कुन्ती गर्भार्थमच्युतम् ॥ १४॥

सा बलिं त्वरिता देवी धर्मायोपजहार ह ।
जा[2]नन्ती धर्ममग्र्यं वै मन्त्रैर्वशमुपानयत् ॥ १५॥

आहूतो नियमात् कुन्त्या सर्वभूतैर्नमस्कृतः ।
ददर्श भगवान् धर्मस् सन्तानार्थाय पाण्डवे । १६॥

तस्मिन् बहुमृगे रम्ये शतशृङ्गे नगोत्तमे ।
पाण्डोरर्थे महाभाग कुन्ती धर्ममुपागमत् ॥ १७॥

---

1. घ—धर्मादिं धर्ममध्यं च धर्मान्तं धर्मरूपिणम् ।
2. क-ग—नाति; घ—जानती

ऋतुकाले शुचिस्स्नाता शुक्लवस्त्रा यशस्विनी ।
शय्यां जगाम सुश्रोणी सह धर्मेण सुव्रता ॥ १८॥
धर्मेण सह सङ्गम्य योगमूर्तिधरेण सा ।
लेभे पुत्रं महाभागं सर्वप्राणभृतां हितम् ॥ १९॥
ऐन्द्रे चन्द्रमसा युक्ते मुहूर्तेऽभिजितेऽष्टमे ।
दिवा मध्यं गते सूर्ये तिथौ पुण्येऽभिपूजिते ॥ २०॥
समृद्धयशसं कुन्ती [1]सुषाव समये सुतम् ॥ २१
जातमात्रे ततस्तस्मिन् वागुवाचाशरीरिणी ।
एष धर्मभृतां श्रेष्ठो भवितेति विनादिनी ॥ २२
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजस्सुतः ।
अभवत् प्रथितो राजंस् त्रिषु लोकेषु वीर्यवान् ॥ २३
यशसा तेजसा चैव वृत्तेन च समन्वितः ॥ २३॥
संवत्सरे द्वितीये तु गान्धार्या उदरं महत् ।
न च प्राजायत तदा ततस्तां दुःखमाविशत् ॥ २४॥
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदरस्यात्मनस्स्थैर्यम् उपालभ्य च सौबली ॥ २५॥
कौरव्यस्यापरिज्ञातं यत्नेन महता स्वयम् ।
उदरं घातयामास गान्धारी शोकमूर्छिता ॥ २६॥

---

1. क-ग—सुषुवे

ततो जज्ञे मांसपेशी साष्ठीला जनमेजय ।
द्विवर्षसम्भृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ २७॥

ततो द्वैपायनो राजन् आजगाम यदृच्छया ।
तां च मांसमयीं पेशीं ददर्श वदतां वरः ॥ २८॥

ततोऽब्रवीत् सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सर्वं शशंस परमर्षये ॥ २९॥

ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदम् उदरं घातितं मया ॥ ३०॥

शतं च किल पुत्राणां दत्तवानसि मे प्रभो ।
इयं मांसमयी पेशी जाता पुत्रशताय मे ॥ ३१॥

व्यासः—

एतावदेतद्गान्धारि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कदा चन ॥ ३२॥

घृतपूर्णं कुण्डशतं क्षिप्रमानीयतामिति ।
शीताभिरद्भिराष्ठीलाम् इमां च परिषिञ्च च ॥ ३३॥

वैशम्पायनः—

संसिच्यमाना साष्ठीला [1]ह्यभवच्छतधा तथा ॥ ३४

अङ्गुष्ठपर्वमात्राणां गर्भाणां पुनरेव तु ।

---

1. घ—बभूव शतधा नृप ।

एकाधिकशतं पूर्णं यथायोगं विशाम्पते ॥ ३५

ततः कुण्डशतं तत्र आनाय्य तु महानृषिः ।
मांसपेश्यास्तदा राजन् क्रमशः कालपर्ययात् ॥ ३६

ततस्तांस्तेषु कुण्डेषु गर्भान् सर्वान् समादधात् ॥ ३६॥

स्वनुगुप्तेषु देशेषु [1]रक्षां चैषां व्यधापयत् ॥ ३७

[2]शशास चैव कृष्णो हि गर्भाणां रक्षणं तथा ।
उवाच चैनां भगवान् कालेनैव तथा पुनः ॥ ३८

व्यासः—

घटमानेषु कुण्डेषु जाताञ्जानीहि शोभने ।
अष्टोत्तराः कुमारास्ते कुण्डेभ्यस्तु समुत्थिताः ॥ ३९

तेनैवैषां क्रमेणासीज् ज्येष्ठानुज्येष्ठता तदा ।
जन्मतश्च प्रमाणेन जेष्ठः कुन्तीसुतोऽभवत् ॥ ४०

वैशंपायनः—

एवं सन्दिश्य कौरव्यं कृष्णद्वैपायनस्तदा ।
जगाम पर्वतायैव तपसे संशितव्रतः ॥ ४१

धार्मिकं तं सुतं दृष्ट्वा पाण्डुस्तां पुनरब्रवीत् ॥ ४१॥

पाण्डुः—

प्राहुः क्षत्रबलं ज्येष्ठं बलज्येष्ठं सुतं वृणे ॥ ४२

---

1. घ—गर्भांश्चैवाभ्यधारयत् ।
2. घ—व्यासश्शशास गर्भाणां धात्रीस्संरक्षणाय च ।

ततः कुन्तीमभिक्रम्य शशासातीव भारत ॥ ४२॥
वायुमावाहयस्वेति स देवो बलवत्तरः ॥ ४३

अश्वमेधः क्रतुश्रेष्ठो ज्योतिश्श्रेष्ठो दिवाकरः ।
ब्राह्मणो द्विपदां श्रेष्ठो बलश्रेष्ठस्तु मारुतः ॥ ४४

मारुतं मरुतां श्रेष्ठं सर्वप्राणिभिरीडितम् ।
आवाहय त्वं नियमात् पुत्रार्थं वरवर्णिनि ॥ ४५

स नो यं दास्यति सुतं स प्राणबलवान् नृषु ।
भविष्यति वरारोहे बलज्येष्ठो हि भूमिपाः ॥ ४६

वैशम्पायनः—

तथोक्तवति सा काले वायुमेवाजुहाव च ।
द्वितीयेनोपहारेण तेनोक्तविधिना पुनः ॥ ४७

तैरेव नियमैस्स्थित्वा मन्त्रग्राममुदीरयत् ।
आजगाम ततो वायुः किं करोमीति चाब्रवीत् ॥ ४८

लज्जान्विता ततः कुन्ती पुत्रमैच्छन्महाबलम् ।
तथाऽस्त्विति च तां वायुस् समालभ्य दिवं गतः ॥ ४९

तस्माज्जज्ञे महावीर्यो भीमो भीमपराक्रमः ।
तमप्यतिबलं जातं वागुवाचाशरीरिणी ॥ ५०

सर्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत ॥ ५०॥

[1]जातमात्रे कुमारे तु सर्वलोकस्य पार्थिवाः ।
मूत्राम्बु सुस्रुवुस्सर्वे व्यथिताश्च प्रपेदिरे ॥ ५१॥
वाहनानि विशीर्यन्ते विमुञ्चन्त्यश्रुबिन्दवः ॥ ५२
यथाऽनिलस्समुद्धूतस् समर्थः कम्पने भुवः ।
तथा मन्युपरीताङ्गो भीमो भीमपराक्रमः ॥ ५३
इदं चाद्भुतमित्यासीज् जातमात्रे वृकोदरे ।
यदङ्कात् पतितो मातुश् शिलां गात्रैरचूर्णयत् ॥ ५४
कुन्ती तु सह पुत्रेण यात्वा सुरुचिरं सरः ।
स्नात्वा तु सुतमादाय दशमेऽहनि यादवी ॥ ५५
दैवतान्यर्चयिष्यन्ती निर्जगामाश्रमात् पृथा ।
[2]शैलस्यान्तेन गच्छन्त्यास् तदा भारतसत्तम ॥ ५६
[3]निश्चक्राम महान् व्याघ्रो जिघांसन् गिरिगह्वरात् ॥ ५६॥
तमापतन्तं शार्दूलं विकृष्याथ कुरूत्तमः ।
निर्बिभेद शरैः पाण्डुस् त्रिभिस्त्रिदशविक्रमः ॥ ५७॥

---

1. घ—नागायुतबलप्राणस् साहसी रणपण्डितः ।
बह्वाशी वज्रसङ्काशो लोकेऽप्रतिमपौरुषः ॥ [अधिकः पाठः]
2. क-ख-ग-घ—शैलाभ्याशेन; घ—शिलान्तरेण ।
3. घ—अदृष्टवेगस्संरम्भाज् जिघांसुस्तामदूरगाम् ।
निर्जगाम महान् व्याघ्रो विवृतास्योन्नताननः ॥
[अधिकः पाठः]

नादेन महता तां तु पूरयन्तं गिरेर्गुहाम् ।
दृष्ट्वा शैलमुपारोढुम् ऐच्छत् कुन्ती भयात्ततः ।। ५८।।

त्रासेनास्यास्सुतस्त्वङ्कात् पपात भरतर्षभ ।
[1]पर्वतस्योपरिस्थाया अधस्तादपतच्छिशुः ।। ५९।।

[2]स शिलाश्चूर्णयामास वज्रवद्भिश्चोदितम् ।। ६०

[3]पुत्रस्नेहात्ततः पाण्डुर् अभ्यधावद्गिरेस्तटम् ।
पपात तेन शतधा शिला गात्रैर्विचूर्णिता ।। ६१

शिलां च चूर्णितां दृष्ट्वा परं विस्मयमागमत् ।। ६१।।

[4]स तु जन्मनि भीमस्य विनदन्तं विनादितम् ।
ददर्श गिरिशृङ्गस्थं व्याघ्रं व्याघ्रपराक्रमः ।। ६२।।

दारसंरक्षणार्थाय रक्षमाणस्तथाऽऽत्मजम् ।
सदा बाणधनुष्पाणिर् अभवत् कुरुनन्दनः ।। ६३।।

मघे चन्द्रमसा युक्ते सिंहे चाभ्युदये गुरौ ।

---

1. घ—अधस्तादपतद्वेगाद्यन्त्रोत्क्षिप्त इवाचलः ।
2. घ—शिलां संचूर्णयामास वज्रवद्भिश्चोदितम् ।
3. घ—भग्ना भूमौ शिला चापि क्रोशमात्रमथोऽपि वा ।
[अधिकः पाठः]
4. घ—स्थूलास्तरणशायीव सुखं सुष्वाप सोऽर्भकः ।
वटच्छदानुशायीव युगान्ते प्रलयेऽर्भकः ।।
प्रत्यागत्य पुनः पाण्डुः सुतमादाय विस्मितः ।
दत्त्वा कुन्त्यै शिशुं सुप्तमक्षतं वज्रदेहिनम् ।। [अधिकः पाठः]

दिवा मध्यगते सूर्ये तिथौ पुण्ये त्रयोदशे ॥ ६४॥
मैत्रे मुहूर्ते सा कुन्ती सुषुवे भीममच्युतम् ॥ ६५
यस्मिन्नहनि भीमस्तु जज्ञे भीमपराक्रमः ।
तामेव रात्रिं पूर्वं तु जज्ञे दुर्योधनो नृपः ॥ ६६
दुर्योधने जातमात्रे दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन् घोराश् शिवाश्चाशिवनिस्वनाः ॥ ६७
ववर्ष रुधिरं देवो भयमावेदयन् महत् ॥ ६७॥
एतस्मिन्नन्तरे राजा धृतराष्ट्रोऽम्बिकासुतः ।
समाहूय बहून् विप्रान् विदुरं चेदमब्रवीत् ॥ ६८॥

धृतराष्ट्रः—

श्रुतं मया यथा जातो ज्येष्ठः पाण्डोस्सुतः किल ।
[1]स तु दुर्योधनाच्छ्रेष्ठस् तस्मिन् राज्यं न संशयः ॥ ६९॥
अयं त्वनन्तरं तस्माद् राजा भवितुमर्हति ।
एतं विब्रूत मे प्रश्नं यद्वाऽस्मिन् दृश्यते फलम् ॥ ७०॥
अस्मिञ्जाते निमित्तानि संशयन्त्यशिवं महत् ।
अतो ब्रवीमि विदुर द्रुतं मां भयमाविशत् ॥ ७१॥

वैशंपायनः—

वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणादन् घोराश् शिवाश्चाशिवशंसिनः ॥ ७२॥

---

1. घ—स च दुर्योधनो ज्येष्ठस् तस्मिन् राज्ये प्रतिष्ठितम्।

लक्षयित्वा निमित्तानि तानि सर्वाणि भारत ।
तेऽब्रुवन् ब्राह्मणा राजन् विदुरश्च महामतिः ॥ ७३॥

विदुरः—

अयं कुलान्तकृज्जातो यस्माच्च कुलपांसनः ।
तस्य त्यागेन शान्तिस्स्यात् पुष्टिस्स्वपनये भवेत् ॥ ७४॥
शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
एकेन कुरु नः क्षेमं लोकस्य च कुलस्य च ॥ ७५॥
[1]त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ७६॥

[2]वैशंपायनः—

स तथा विदुरेणोक्तस् तैश्च विप्रैर्जनाधिपः ।
[3]न चकार तदा राजा पुत्रस्नेहसमन्वितः ॥ ७७॥
ततः पुत्रशतं सर्वं धृतराष्ट्रस्य भारत ।
अह्नां शतेन संजज्ञे कन्या चैका [4]शतात् परा ॥ ७८॥
गान्धार्यां क्लिश्यमानायां वर्धमाने तथोदये ।
वेश्या सा त्वम्बिकापुत्रं कन्या परिचचार ह ॥ ७९॥
तया समभवद्राजा धृतराष्ट्रो यदृच्छया ।

---

1. क-ख-ग—त्यजेत्कुलार्थे पुरुषं ।
2. घ—त्यागेनास्य कुलस्यैव ग्रामस्य च नृपोत्तम ।
शान्तिर्जनपदस्यास्य कुलवृद्धिर्भवेद्ध्रुवम् ॥ [अधिकः पाठः]
3. घ—नानुमेने सुतं त्यक्तुं पुत्रस्नेहवशं गतः ।
4. क-ख-ग—च दुश्शला; घ—शतात्परम्

तस्यामजनयत् पुत्रं युयुत्सुं नाम भारत ॥ ८०॥

इत्थमेकशतं जज्ञे पुत्राणां भरतर्षभ ।
महारथानां वीराणां कन्या चैकाऽथ दुश्शला ॥ ८१॥

धृतराष्ट्रस्य राजेन्द्र यथा ते कथितं मया ॥ ८२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

॥ ७ ॥ संभवपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[अस्मिन्नध्याये ८२ श्लोकाः ।]

---

## ॥ एकादशाधिकशततमोऽध्यायः ॥

---

गान्धार्यां दुश्शलाया उत्पत्तिः । २ ॥

---

जनमेजयः—

धृतराष्ट्रस्य पुत्राणाम् आदितः कथितं त्वया ।
ऋषेर्मतात् पुत्रशतं न तु कन्याऽत्र कीर्तिता ॥ १

वैश्यापुत्रो युयुत्सुश्च एतदेकशतं द्विज ।
जन्मापि धार्तराष्ट्रस्य उक्तमेतन्महर्षिणा ॥ २

कथं हि सम्भवस्तस्माद् दुश्शलाया ब्रवीहि मे ॥ २॥

वैशंपायनः—

साध्वयं प्रश्न उद्दिष्टः पाण्डवेय ब्रवीमि ते ॥ ३

[1]तां मांसपेशीं तु तदा स्वयमेव महामुनिः ।
शीताभिरद्भिरसिञ्चन् वै भागं भागमधारयत् ॥ ४
यो यथा कल्पयते भागस् तं तु धात्र्यस्य वै पृथक् ।
घृतपूर्णेषु कुण्डेषु एकैकं प्राक्षिपत्तदा ॥ ५
एतस्मिन्नन्तरे साध्वी गान्धारी सुमहायशाः ।
नाब्रवीच्च ऋषिं किञ्चिद् गौरवाच्च यशस्विनी ॥ ६
मनसा चिन्तयद्देवी एतत् पुत्रशतं मम ।
भविष्यति न सन्देहो न चर्षिर्भाषतेऽन्यथा ॥ ७
मम वै परमा तुष्टिर् दुहिता मे भवेद्यदि ।
एका शताधिका बाला शतस्यापि कनीयसी ॥ ८
ततो दौहित्रजांल्लोकान् अवाप्नस्स्यात् पतिर्मम ।
अहं च कृतकृत्या स्यां दुहित्रा सह सङ्गता ॥ ९
अधिकं किल नारीणां प्रीतिर्जामातृभिर्भवेत् ।
अपत्यं युवतिं चापि दृष्ट्वा प्रीतिमवाप्नुयाम् ॥ १०
यदि सत्यं तपो वा मे गुरवस्तोषिता यदि ।
सुकृतं चेह लोकेऽस्ति तथाऽस्तु दुहिता मम ॥ ११
एतस्मिन्नेव काले तु कृष्णद्वैपायनस्स्वयम् ।
व्यभजत्सहसा विप्रस् तां पेशीं गर्भसम्भवाम् ॥ १२

1. घ—स्वयमेव मांसपेशीं तु तदा व्यासो मुनीश्वरः ।

गण्यमानेषु कुण्डेषु शते पूर्णे महात्मना ।
अभवच्चापरं खण्डं वामहस्ते तदा किल ॥ १३

पूर्णं पुत्रशतं ह्येव न मिथ्या वागुदीरिता ।
दैवयोगात्त्वयं भाग एको दृष्टश्शतात् परः ॥ १४

एषा ते सुभगे कन्या भविष्यति यथेप्सिता ॥ १४॥

[1]ततोऽन्यद्घृतकुण्डं तु आनाय्य सुमहातपाः ।
प्राक्षिपत्तं तदा राजन् कन्याभागं परन्तप ॥ १५॥

सम्भूता चैव कालेन सर्वेषां च यवीयसी ॥ १६

एतत्ते कथितं वीर दुश्शलाजन्म चैव तु ।
ब्रूहि राजेन्द्र किं भूयः कथये पाण्डुनन्दन ॥ १७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ७ ॥ संभवपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[अस्मिन्नध्याये १७ श्लोकाः]

---

1. घ—गान्धारीमेवमुक्त्वैव धात्रीमेव पुनर्वशी ।
धात्र्यानयापरं कुण्डं घृतपूर्णं मनोहरम् ॥
घृतपूर्णे तया नीते कुम्भे तं भागमाक्षिपत् ।
इयमेका भवेत्पुत्री कन्या पुत्रशतात् परम् ॥
इत्युक्त्वा प्राक्षिपद्भागं कन्यागर्भं परन्तप ।
[अधिकः पाठः]

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

दुर्योधनादीनां नामधेयकथनम् ॥ १ ॥ दुश्शलापरिणयः ॥ २ ॥

जनमेजयः—

ज्येष्ठानुज्येष्ठतां चैव नामधेयानि चापि भो ।
धृतराष्ट्रस्य पुत्राणाम् आनुपूर्व्येण कीर्तय ॥ १

वैशंपायनः—

[1]दुर्योधनो [2]युयुत्सुश्च राजन् [3]दुश्शासनस्तथा ।
[4]दुर्धर्षो [5]दुर्मुखश्चैव [6]जलसन्धि[7]स्सह[8]स्समः ॥ २
[9]विन्दा[10]नुविन्दौ [11]दुष्षाहस् [12]सुबाहु[13]र्दुष्प्रधर्षणः ।
*[14]दुर्मद[15]श्चित्रयोधी च [16]दुष्कर्णः [17]कर्ण एव च ॥ ३
[18]विविंशति [19]र्विकर्णश्च [20]जलसन्ध[21]स्सुलोचनः ।
†[22]चित्रो [23]विचित्र[24]श्चित्राक्षश् [25]चारुचित्र[26]श्शरासनः ॥ ४
[27]दुर्मर्षणो [28]दुष्प्रधर्षो [29]विवित्सु[30]र्विकट[31]श्शमः ।
[32]ऊर्णनाभ[33]स्सुनाभश्च तथा [34]नन्दो[35]पनन्दकौ ॥ ५
[36]सेनापति[37]स्सुषेणश्च [38]कुण्डोदर[39]महोदरौ ।
[40]चित्रध्वज[41]श्चित्ररथश्[42]चित्रबाहु[43]रमित्रजित् ॥ ६

---

* क-ख-ग—दुष्षन्त; घ—दुर्मतिः
† क-ग—चित्रश्च उरुचित्रः; ख—चित्राश्च उरुचित्रः

[44]चित्रबाण[45]श्चित्रवर्मा [46]सुवर्मा [47]दुर्विमोचनः ।
[48]चित्रसेनश्च [49]विक्रान्तस् [50]सुचित्र[51]श्चित्रवर्मवान् ॥ ७
[52]अपराजितः [53]कुण्डितको [54]विशालाक्षो [55]दुरावरः ।
[56]अजितश्च [57]जयन्तश्च [58]जयत्सेनोऽथ [59]दुर्जयः ॥ ८
[60]दृढहस्त[61]स्सुहस्तश्च [62]वातवेग[63]सुवर्चसौ ।
[64]आदित्यकेतु[65]र्बह्वाशी [66]नागदन्तो[67]ग्रशायिनौ ॥ ९
[68]कवची [69]निषङ्गी [70]पाशी च [71]कुण्डधारो [72]धनुर्ग्रहः ।
[73]उग्रो [74]भीमरथो [75]भीमो [76]भीमबाहु[77]रलोलुपः ॥ १०
[78]भीमकर्मा [79]सुबाहुश्च [80]भीमविक्रान्त एव च ।
[81]अभयो [82]रूढकर्मा च तथा [83]दृढरथश्च यः ॥ ११
[84]अनाधृष्यः [85]कुण्डभेदी [86]विरावी [87]दीर्घलोचनः ।
[88]दीर्घध्वजो [89]दीर्घजङ्घ [90]अदीर्घो [91]दीर्घ एव च ॥ १२
[92]दीर्घबाहु[93]र्महाबाहुर् [94]व्यूढोरुः [95]कनकध्वजः ।
[96]महाकुण्डश्च [97]कुण्डश्च [98]कुण्डज[99]श्चित्रजस्तथा ॥ १३
[100]असन[101]श्चित्रकश्चैव [102]दुश्शला चैव भारत ।
एतदेकशतं राजन् कन्या चैका प्रकीर्तिता ॥ १४
नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप ॥ १४॥
सर्वेऽप्यतिरथाश्शूरास् सर्वे युद्धविशारदाः ।
सर्वे वेदविनीताश्च नानाशास्त्रेषु चाभवन् ॥ १५॥

सर्वे संसक्तविद्यास्तु मुख्याभिजनशोभिताः ॥ १६
सर्वेषामनुरूपं च कृतदाराः कृतश्रमाः ।
धृतराष्ट्रेण समये समीक्ष्य विधिवत्तदा ॥ १७
दुश्शलां समये राजा सिन्धुराजाय भारत ।
जयद्रथाय प्रददौ सौबलानुमतात्तदा ॥ १८
इति पुत्रशतं राजन् युयुत्सुश्च तथाऽपरः ।
कन्यका दुश्शला चैव यथावत् कीर्तितं मया ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ ७ ॥ संभवपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

अर्जुनजननम् ॥ १ ॥

---

वैशम्पायनः—

जाते बलवतां श्रेष्ठे पाण्डुश्चिन्तापरोऽभवत् ।
कथमन्यो मम सुतो लोके श्रेष्ठो भवेदिति ॥ १
दैवं पुरुषकारश्च यत्र लोकः प्रतिष्ठितः ।
ततो दैवात्तु तपसा लप्स्ये पुत्रं महाबलम् ॥ २

इन्द्रो हि राजा देवानां प्रधान इति मे श्रुतः ।
अप्रमेयबलोत्साहो वीर्यवानुत्तमद्युतिः ॥ ३

तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम् ।
यं दास्यति स नः पुत्रं स प्रधानो भविष्यति ॥ ४

अमानुषान् मानुषांश्च स सङ्ग्रामे हनिष्यति ।
तपसा कर्मणा चैव तस्मात्तप्स्ये महत्तपः ॥ ५

ततः पाण्डुस्तु राजर्षिः मन्त्रयित्वा महर्षिभिः ।
आदिश्य कुन्त्याः कौरव्य व्रतं सांवत्सरं शुभम् ॥ ६

आत्मनश्च महावीर्य एकपादस्थितोऽभवत् ॥ ६॥

उग्रं तपस्स आतस्थे परमेण समाधिना ।
आरिराधयिषुश्चैवं त्रिदशानां तमीश्वरम् ॥ ७॥

सूर्येण सह धर्मात्मा पर्यवर्तत भारत ।
तं तु कालेन महता वासवः प्रत्यभाषत ॥ ८॥

इन्द्रः—

पुत्र तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् ।
मित्रेभ्यो ब्राह्मणेभ्यश्च सुहृद्भ्यश्चार्थसाधकम् ॥ ९॥

सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम् ॥ १०

वैशम्पायनः—

इत्युक्तस्तु महेन्द्रेण कौरवः कुरुवर्धनः ।

कुन्तीं राजसुतां पाण्डुर् अपत्यार्थेऽभ्यचोदयत् ॥ ११
धर्मे बलं च निश्चित्य यथा स्यादिति भारत । ११॥

पाण्डुः—

नीतिमन्तं महात्मानम् आदित्यसमतेजसम् ।
दुराधर्षं रणे शूरं देवराजमिवानघम् ॥ १२॥
पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम् ।
लब्धः प्रसादो देवेन्द्रात् तमाह्वय शुचिस्मिते ॥ १३॥

वैशम्पायनः—

जातेषु धृतराष्ट्रस्य कुमारेषु महात्मसु ।
कुन्ती पुनरपत्याय देवराजमुपाह्वयत् ॥ १४॥
ततः पर्यचरत्तेन बलिना भगवानपि ।
अथाजगाम देवेन्द्रो जनयामास चार्जुनम् ॥ १५॥
उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा ।
जातस्तु फाल्गुने मासि तेनासौ फल्गुनस्स्मृतः ॥ १६॥
जातमात्रे कुमारे तु सर्वभूतप्रहर्षिणी ।
सूतके वर्तमानानां वागुवाचाशरीरिणी ॥ १७॥
मेघगम्भीरनिर्घोषा नभो नादयती तदा ॥ १८
कार्तवीर्यसमः पुत्रो देवतुल्यपराक्रमः ।
एष शक्र इवाजय्यः प्रापयिष्यति ते यशः ॥ १९

अदित्या विष्णुना प्रीतिर् यथा समभिवर्धिता ।
तथा विष्णुसमः प्रीतिं वर्धयिष्यति तेऽर्जुनः ॥ २०

एष मद्रान् वशे कृत्वा कोसलान् सह केकयैः ।
चेदिकाशिकरूशांश्च कुरूणां लक्ष्म धास्यति ॥ २१

एतस्य भुजवीर्येण त्रासितास्सुरशात्रवः ।
निवातकवचा[1]स्संख्ये प्रहास्यन्ते च जीवितम् ॥ २२

हिरण्यपुरमारुह्य निहनिष्यति संयुगे ।
पुलोमजायास्तनयान् कालकेयांश्च सर्वशः ॥ २३

गत्वोत्तरां दिशं वीरो विजित्य युधि पार्थिवान् ।
धनरत्नौघममितम् आनयिष्यति पाण्डवः ॥ २४

एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः ।
मेदसा सर्वभूतानां तुष्टिं यास्यति वै पराम् ॥ २५

ग्रामणीश्च महीपालान् एष जित्वा महाबलः ।
भ्रातृभिस्सहितो वीरस् त्रीन् मेधानाहरिष्यति ॥ २६

जामदग्न्यसमः कुन्ति शिबेरौशीनरात् परः ।
एवं वीर्यवतां श्रेष्ठो महाभागो भविष्यति ॥ २७

एष चास्त्राणि दिव्यानि निखिलेन हरिष्यति ।
विप्रनष्टां श्रियं चायम् आहर्ता भरतर्षभ ॥ २८

---

1. क-ख-ग-घ—सर्वे

एतदत्यद्भुतं राजन् कुन्त्याः पार्थस्य सूतके ।
उक्तवान् वायुराकाशे कुन्ती शुश्राव भारत ॥ २९

वाचमुच्चरितामुच्चैस् तां निशम्य यशस्विनीम् ।
[1]बभूव परमो हर्षश् शतशृङ्गनिवासिनाम् ॥ ३०

ततो देवनिकायानां सेन्द्राणां च दिवौकसाम् ।
आकाशे दुन्दुभीनां च बभूवातुलनिस्वनः ॥ ३१

उदतिष्ठन्महामेघाः पुष्पवृष्टिभिरावृताः ।
समवेत्य च देवानां गणः पार्थमपूजयत् ॥ ३२

काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा ।
प्रजानां पतयस्सर्वे सप्त चैव महर्षयः ॥ ३३

भरद्वाजः काश्यपो गौतमश्च
विश्वामित्रो जमदग्निर्वसिष्ठः ।
यश्चोदितो भास्करोऽभूत् प्रनष्टः
सोऽप्यत्रिरत्र भगवान् संबभूव ॥ ३४

मरीचिराङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः ।
दक्षप्रजापतिश्चैव [2]मरीचिः प्रीतिमाप्तवान् ॥ ३५

गन्धर्वाप्सरसश्चैव किन्नरास्समवादयन् ॥ ३५॥

1. अवाप प्रीतिमतुलामानन्दभरिताभवत् ।　　[अधिकः पाठः]
2. अ—गन्धर्वान् समचोदयत् ।

दिव्यमाल्याम्बरधरास् सर्वालङ्कारभूषिताः ।
[1]ते च प्रकाशा मर्त्येषु सर्वोपस्कारसंभृताः ॥ ३६॥

उपगायन्ति बीभत्सुम् उपनृत्यन्ति चैव हि ॥ ३७

ततो गन्धर्वतूर्येषु प्रणदत्सु विहायसि ।
बहुभिस्सह गन्धर्वैर् अगायत च तुम्बुरुः ॥ ३८

भीमसेनोग्रसेनौ च पूर्णायुरनघस्तदा ।
गोमासुर्धृतराष्ट्रश्च सूर्यवर्चास्तथाऽष्टमः ॥ ३९

युगपस्तुर्णपः कार्ष्णी नन्दी चित्ररथस्तथा ।
त्रयोदश[2]स्स्थूलशिराः पर्जन्यश्च चतुर्दशः ॥ ४०

कलिः पञ्चदशश्चात्र किन्तुनारस्तु षोडशः ।
किन्नरा देवगन्धर्वा उपगायन् धनञ्जयम् ॥ ४१

[3]सद्वान्बृहद्वान् बृहकः कराळश्च महायशाः ।
ब्रह्मचारी बहुगुणः सुपर्णश्चेति विश्रुतः ॥ ४२

विश्वावसुर्भुमन्युश्च सुचन्द्रो दशमस्स्मृतः ।
इत्येते देवगन्धर्वा उपगायन् धनञ्जयम् ॥ ४३

हाहा हूहूश्च गन्धर्वो हंसश्च भरतर्षभ ।
इत्येते देवगन्धर्वा उपगायन् धनञ्जयम् ॥ ४४

1. घ—मुक्तामाणिक्यसंपूर्णहेमपात्राग्रपाणयः । [अधिकः पाठः]
2. क-ख-ग—इशालि
3. क-ख-ग—सुन्वा बृहन्वा

तथैवाप्सरसो हृष्टास् सर्वालङ्कारभूषिताः ।
ननृतुश्च वरारोहा जगुरायतलोचनाः ॥ ४५

अनूचानानवद्याङ्गी क्रियामुख्या गुणावरा ।
[1]अतिकेशा तथा साची दीर्घकेशी त्वलम्बुसा ॥ ४६

मरीचिश्शुशुका चैव विद्युद्वर्णा तिलोत्तमा ।
अद्रिका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥ ४७

उर्वशी [2]चैव राजेन्द्र ननृतुर्गीतनिस्वनैः ॥ ४७॥

असिता च सुबाहुश्च सुमनास्सुवपुस्तथा ।
पुण्डरीका सुगन्धा च सुरथा च प्रमाथिनी ॥ ४८॥

काम्या शारद्वती चैव ननृतुस्तत्र सङ्घशः ॥ ४९

मेनका सहजन्या च वर्णिका पुञ्जिकस्थला ।
घृताची चैव विश्वाची पूर्वाचित्तिः क्रतुस्तथा ॥ ५०

[3]प्रम्लोचन्ती च विख्याता अनुम्लोचन्ती च तादृशी ।
उर्वश्येकादशीत्येता जगुरायतलोचनाः ॥ ५१

---

1. घ—अन्तकेशी तथा साची नीला मांसी त्वलम्बुसा ।
2. घ—मेनका विद्युत् सुकेशी केशशालिनी ।
विश्वाची च घृताची च प्रम्लोचन्ती सुराङ्गना ॥
मिश्रकेशी सुकेशी च घृताची पुञ्जिकस्थला ।
दशाश्वमेधिका चूली ननृतुर्गीतनिस्वनैः ॥ [अधिकः पाठः]
3. क-ख-ग—विम्लोचेत्यभिविख्याता प्रम्लोचेति च तादृशी ।

धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमस्मृतः ॥ ५२
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः।
इत्येते द्वादशादित्या ज्वलन्तस्सूर्यवर्चसः। ५३
महिमानं पाण्डवस्य कुर्वन्तस्तस्थुरम्बरे ॥ ५३॥
मृगव्याधश्च शर्वश्च निरृतिश्च महायशाः।
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ॥ ५४॥
भवनोऽथेश्वरश्चैव कपाली च विशाम्पते।
स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे ॥ ५५॥
धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः।
प्रत्यूषश्च प्रभासश्च वसवश्चावतस्थिरे ॥ ५६॥
[1]यथैव वसवस्त्वष्टौ मरुतश्च महाबलाः।
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ॥ ५७॥
तौ चाश्विनौ तथा साध्यास् तस्य जन्मनि संस्थिताः ॥ ५८
क्रतुर्दक्षो वसुस्सत्यः कालः कामो मुनिस्तथा।
[2]मरुमां ल्लुलुमांश्चैव रोचमानस्तु तेजसा ॥ ५९

1. घ—साध्याश्च मरुतश्चैव विश्वे देवा मरुद्गणाः। [अधिकः पाठः]
2. घ—पुरूरवार्द्रवाश्चैव रोचमानाश्च तेजसा।
विश्वे देवा इति ख्यातास्तस्यासन् जन्मनि स्थिताः ॥
[अधिकः पाठः]

विश्वे देवा इति ख्यातास् तस्यासञ्जन्मनि स्थिताः ॥ ५९॥
कर्णिकारश्च मण्डुश्च वासुकिश्च भुजङ्गमः ।
अञ्जपश्चावकुण्डश्च तक्षकश्च महाबलः ॥ ६०॥
अभव्यास्तेजसा दीप्ता उग्रक्रोधा महाबलाः ।
एते महात्मनस्तस्य नागाः प्राञ्जलयस्स्थिताः ॥ ६१॥
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महायशाः ।
अरुणश्चारुणिश्चैव वैनतेया उपासत ॥ ६२॥
आययुस्तपसा युक्ता महायुक्ता महाबलाः ।
महान् पितामहस्त्वेनम वक्त्रेण रजसा तदा ॥ ६३॥
प्रतिजग्राह नप्तारं राजर्षिपरिवारितः ॥ ६४
सगरेणाम्बरीषेण नहुषेण ययातिना ।
धीमता धुन्धुमारेण राज्ञोपरिचरेण ह ॥ ६५
मुचुकुन्देन मान्धात्रा बहुनाऽरिष्टनेमिना ।
भरतेन दिलीपेन सर्वैश्च जनमेजय ॥ ६६
पूरुस्सार्धं नृपतिभिर् जग्राह कुरुपुङ्गवम् ॥ ६६॥
अन्ये च बहवस्तत्र समासन् राजसत्तमाः ॥ ६७
एते चान्ये च बहवो नरलोकाधिपास्तथा ।
देवलोकादिहागम्य प्रैक्षन्त भरतर्षभम् ॥ ६८
विद्योतमानं वपुषा भासयन्तं दिशो दश ॥ ६८॥

लक्षणैर्व्यञ्जितैर्युक्तस् सर्वैर्माहात्म्यसूचकैः ।
एतं दृष्ट्वा महावीर्यं विस्मिता ऋषिसत्तमाः ॥ ६९॥
[1]अधिकां स्म तदा वृत्तिं वर्वन्ते पाण्डवं प्रति ।
पाण्डुः प्रीतेन मनसा नत्वा देवानपूजयत् ॥ ७०॥
पाण्डुना पूजिता देवाः प्रत्यूचुर्नृपसत्तमम् ॥ ७१

देवाः—

प्रादुर्भूतो ह्ययं धर्मो देवतानां प्रसादजः ॥ ७१॥
मातरिश्वा ह्ययं भीमो बलवानरिमर्दनः ।
साक्षादिन्द्रस्स्वयं जातः प्रसादाच्च शतक्रतोः ॥ ७२॥
[2]फल्गुनो जयतां श्रेष्ठः पूरुवंशविवर्धनः ॥ ७३
पितृत्वाद्देवतानां हि नास्ति पुण्यतरस्त्वया ।
धन्यस्त्वमचिरादेव स्वर्गं प्राप्स्यसि पुण्यभाक् ॥ ७४

वैशंपायनः—

इत्युक्त्वा देवतास्सर्वा विप्रजग्मुर्यथागतम् ॥ ७४॥
पाण्डुश्च पुनरेवार्यां पुत्रलोभान्महाबलः ।
प्रादिशद्दर्शनीयार्थी कुन्ती त्वेनमथाब्रवीत् ॥ ७५॥
न वै चतुर्थप्रसवं विदुरापत्सु भारत ।
अतः परमनाचारं पञ्चमे वार्धकी भवेत् ॥ ७६॥

---

1. अ—अथ तस्य तदावृत्ता वर्तन्ते ते तु पाण्डवम् ।
2. अ-क-ख-ग—कोशेषु इदमर्धं नास्ति ।

स वै विद्वान् धर्ममिमं संचोदयति मां कथम् ।
अपत्यलाभात् त्वं राजन् प्रमत्त इव भाषसे ॥ ७७॥

पाण्डुः—

[1]एवमेतद्धर्मशास्त्रं यथा वदसि तत्तथा ॥ ७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ ७ ॥ संभवपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[अस्मिन्नध्याये ७८ श्लोकाः]

---

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥

नकुलसहदेवजननम् ॥ १ ॥ पाण्डवानां नामकरणम् ॥ २ ॥ तेषामुपनयनादिसंस्कारकरणं काश्यपेन ॥ ३ ॥ शुक्राद्धनुर्वेदशिक्षा ॥ ४ ॥

---

वैशंपायनः—

[2]कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च ।
मद्रराजसुता पाण्डुम् इदं वचनमब्रवीत् ॥ १

माद्री—

[3]न मेऽस्ति त्वयि सन्तानो विगुणोऽपि तथाऽनघ ।

---

1. घ—स पत्नीनामभेदेन कुन्ति वृद्धिर्हि जायते ।
माद्रीमनोरथं कुन्ति सुतदानेन पूरय ॥
बहुपुत्रो गृहस्थो यः स स्वर्गायोपकल्पते ॥ [अधिकः पाठः]
2. घ— कुन्त्या पुत्रेषु जातेषु गान्धार्या अपि सत्सु च ।
3. घ—त्वत्तो न मेऽस्ति सन्तानो मम शोकविनाशनः ।

मम जातो वनस्थाया ह्यवरत्वात् कथञ्चन ॥ २

गान्धार्याश्चापि पुत्राणां शतं जातं महात्मनाम् ।
तत्रापि नैव बलवद् दुःखं मम विशाम्पते ॥ ३

इदं तु मे महद्दुःखं तुल्यतायामपुत्रता ।
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ॥ ४

यदि त्वपत्यसन्तानं कुन्ती राजसुता मयि ।
कुर्यादनुग्रहो मे स्यात् तव चैव हितं भवेत् ॥ ५

[1]स्तम्भो हि मे सपत्नीत्वाद् अस्ति कुन्तीसुतान् प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ ६

पाण्डुः—

ममाप्येष सदा माद्रि ह्यर्थः परिवर्तते ।
न तु त्वां प्रसहे वक्तुम् इष्टानिष्टविवक्षया ॥ ७

तव त्वनुमतो राज्ञि प्रयतिष्ये यथासुखम् ।
आशंसे न चिरात् कुन्ती वचो मे प्रतिपत्स्यते ॥ ८

वैशम्पायनः—

ततः कुन्तीं पुनः पाण्डुर् एकाग्रामिदमब्रवीत् ॥ ८॥

पाण्डुः—

अनुगृह्णीष्व कल्याणि! मद्रराजसुतामपि ।

---

1. घ—न सहेऽहं सपत्नीत्वात् कुन्तीं वक्तुं सुतान् प्रति।

कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ॥ ९॥
मम वा पिण्डलाभाय पूर्वेषां च महात्मनाम् ।
मत्प्रियार्थं च कल्याणि! कुरु कल्याणमुत्तमम् ॥ १०॥
कुलस्य पिण्डवृद्धिश्च कुलस्य किल सन्ततिः ।
मम चेष्टस्य निर्वृत्तिस् तव चापि परं यशः ॥ ११॥
यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम् ॥ १२
प्राप्य देवादपत्यं च यज्ञैरिष्ट्वा सहस्रशः ।
तथा मन्त्रविदो विप्रांस् तर्पयित्वा सुदुष्करम् ॥ १३
गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भामिनि ॥ १३॥
तथा ब्रह्मर्षयः पूर्वे ब्राह्मणाश्च तपोधनाः ।
चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ १४॥
तथा राजर्षयो वीरा मनुवैन्यादयः पृथक् ।
यथोक्तं धर्मयुक्तानि चक्रुः कर्माणि शोभने ॥ १५॥
सा त्वमद्य प्लवेनैव तारयैनामनिन्दिते ।
अपत्यसंविभागेन परां कीर्तिमवाप्स्यसि ॥ १६॥
धर्म्यं वै धर्मशास्त्रोक्तं यथा वदसि तत्तथा ।
तस्मादनुग्रहं माद्र्याः कुरुष्व वरवर्णिनि ॥ १७॥
एवमुक्ताऽब्रवीत् स्नेहात् सकृच्चिन्तय दैवतम् ।
तत्र ते भविताऽपत्यम् अनुरूपमसंशयम् ॥ १८॥

वैशम्पायनः—

कुन्त्या मन्त्रे कृते तस्मिन् विधिदृष्टेन कर्मणा ।
ततो राजसुता स्नाता शयने संविवेश ह ॥ १९॥

ततो माद्री विचार्यैका जगाम मनसाश्विनौ ।
तथा च माद्र्यपत्यार्थे प्रायुङ्क्त बलिमुत्तमम् ॥ २०॥

तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ।
नकुलं सहदेवं च रूपेणाप्रतिमं भुवि ॥ २१॥

तथैव तावपि यमौ वागुवाचाद्भुतोपमौ ॥ २२

कर्मतो भक्तितश्चैव शीलेन विनयैस्तथा ।
रूपसत्त्वगुणश्रेष्ठावेतावित्ति नराधिप ॥ २३

भासतस्तेजसाऽत्यर्थं रूपद्राविणसम्पदा ॥ २३॥

कुन्तीमथ पुनः पाण्डुर् माद्र्यर्थे समचोदयत् ।
तमुवाच पतिं राजन् रहस्युक्ता सती तदा ॥ २४॥

कुन्ती—

युक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता ।
बिभेम्यस्याः परिभवान्नारीणां गतिरीदृशी ॥ २५॥

नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने द्वयं फलम् ।
तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम ॥ २६॥

वैशंपायनः—

एवं पाण्डुसुताः पञ्च देवदत्ता महाबलाः ।
सम्भूताः कीर्तिमन्तस्ते कुरुवंशविवर्धनाः ॥ २७॥
देवौजसस्सत्त्ववन्तस् सर्वशस्त्रविशारदाः ।
दिव्यसंहननास्सर्वे सर्वे भास्वरमूर्तयः ॥ २८॥
सर्वलक्षणसम्पन्नास् सोमवत् प्रियदर्शनाः ।
सिंहदर्पा महेष्वासास् सिंहविक्रान्तचारिणः ॥ २९॥
सिंहर्क्षग्रीवा मनुष्येन्द्रा ववृधुर्देवदर्शनाः ॥ ३०
विवर्धमानास्ते तत्र पुण्ये हैमवते गिरौ ।
विस्मयं जनयामासुर् महर्षीणां समेयुषाम् ॥ ३१
नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः ।
ऋषयः कर्मतश्चैव रूपतस्स्नेहतस्तथा ॥ ३२
युधिष्ठिर इति ज्येष्ठं भीम इत्येव मध्यमम् ।
तृतीयमर्जुन इति कुन्तीपुत्रानकल्पयन् ॥ ३३
पूर्वजं नकुलं चेति सहदेवं तथाऽपरम् ।
ऊचुर्माद्रीसुतावेवं महाभागास्तपस्विनः॥ ३४
एकवर्षान्तरास्त्वेते परस्परमरिन्दमाः ।
अन्ववर्तन्त पार्थाश्च यमौ पुत्रौ तथैव च ॥ ३५
ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।

सर्वे ववृधिरे राजन् कालेनाप्स्विव पङ्कजाः ॥ ३६

जातमात्रानुपादाय शतशृङ्गनिवासिनः ।
पाण्डोः पुत्रानमन्यन्त तापसास्स्वानिवात्मजान् ॥ ३७

ततस्तु वृष्णयस्सर्वे वासुदेवपुरोगमाः ।
पाण्डुश्शापभयाद्भीतश्श शतशृङ्गमुपेयिवान् ॥ ३८

तत्रैव मुनिभिस्सार्धं तापसोऽभूत्तपश्चरन् ॥ ३८॥

शाकमूलफलाहारस् तपस्वी नियतेन्द्रियः ।
ध्यानयोगपरो राजा बभूवेति च वादकाः ॥ ३९॥

प्रब्रुवन्ति स्म बहवस् तच्छ्रुत्वा शोककर्शिताः ॥ ४०

पाण्डोः प्रीतिसमायुक्ताः कदा श्रोष्याम सत्कथाः ॥ ४०॥

इत्येवं कथयन्तस्ते वृष्णयस्सह बान्धवैः ।
पाण्डोः पुत्रागमं श्रुत्वा सर्वे हर्षसमन्विताः ॥ ४१॥

सभाजयन्तस्तेऽन्योन्यं वसुदेवं वचोऽब्रुवन् ॥ ४२

वृष्णयः—

न भवेरन् क्रियाहीनाः पाण्डोः पुत्रा महायशः ।
पाण्डोः प्रियहितान्वेषी प्रेषय त्वं पुरोहितम् ॥ ४३

वैशम्पायनः—

वसुदेवस्तथेत्युक्त्वा विससर्ज पुरोहितम् ॥ ४३॥

युक्तानि च कुमाराणां पारिबर्हाण्यनेकशः ।

कुन्तीं माद्रीं च सन्दिश्य दासीदासपरिच्छदम् ॥ ४४॥
गावो रौप्यं हिरण्यं च प्रेषयामास भारत ॥ ४५
तानि सर्वाणि संगृह्य प्रययौ स पुरोहितः ॥ ४५॥
समागतं द्विजश्रेष्ठं काश्यपं वै पुरोहितम् ।
पूजयामास विधिवत् पाण्डुः परपुरञ्जयः ॥ ४६॥
पृथा माद्री च संहृष्टे वसुदेवं प्रशंसताम् ॥ ४७
ततः पाण्डुः क्रियास्सर्वाः पाण्डवान् समकारयत् ॥ ४७॥
गर्भाधानादिकृत्यानि चौलोपनयनानि च ॥ ४८
काश्यपः कृतवान् सर्वम् उपाकर्म च भारत ॥ ४८॥
चौलोपनयनादूर्ध्वम् ऋषभाक्षा यशस्विनः ।
वैदिकाध्ययने सर्वे समपद्यन्त पारगाः ॥ ४९॥
शर्यातेः [1]प्रथमः पुत्रश् शुको नाम परन्तपः ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ ५०॥
अश्वमेधशतैरिष्ट्वा स महात्मा महामखैः ।
आराध्य देवतास्सर्वाः पितॄनपि महामतिः ॥ ५१॥
शतश‍ृङ्गे तपस्तेपे शाकमूलफलाशनः ॥ ५२
तेनोपकरणश्रेष्ठैश् शिक्षया चोपबृंहिताः ।
तत्प्रसादाद्धनुर्वेदे समपद्यन्त पारगाः ॥ ५३

1. व—पृषतेः

गदायां पारगो भीमस् तोमरेषु युधिष्ठिरः ।
असिचर्मणि निष्णातौ यमौ सत्त्ववतां वरौ ॥ ५४

धनुर्वेदे गतः पारं सव्यसाची परन्तपः ।
शुकेन समनुज्ञातो मत्समोऽयमिति प्रभो ॥ ५५

अनुज्ञाय ततो राजा शक्तिं खड्गं तथा शरान् ।
धनुश्च ददतां श्रेष्ठस् तालमात्रं महाप्रभम् ॥ ५६

विपाठक्षुरनाराचान् गृध्रपत्रानलङ्कृतान् ।
ददौ पार्थाय संहृष्टो महोरगसमप्रभान् ॥ ५७

अवाप्य सर्वशस्त्राणि मुदितो वासवात्मजः ।
मेने सर्वान् महीपालान् अपर्याप्तान् स्वतेजसः ॥ ५८

एकवर्षान्तरास्त्वेते परस्परमरिन्दमाः ।
अन्ववर्तन्त पार्थाश्च माद्रीपुत्रौ तथैव च ॥ ५९

ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।
सर्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः ॥ ६०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ ७ ॥ संभवपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[अस्मिन्नध्याये ६० श्लोकाः]

---

## ।। पञ्चदशाधिकशततमोऽध्यायः ।।

युधिष्ठिरादीनामायुर्भावकथनम् ॥ १ ॥ पाण्डुमरणं माद्रीसहगमनं तद्दहनादिसंस्कारश्च ॥ २ ॥

वैशंपायनः—

पाण्डवानां तथाऽऽयुष्यं शृणु कौरवनन्दन ।
जगाम हास्तिनपुरं षोडशाब्दो युधिष्ठिरः ।। १

[1]पञ्चदशाब्दो भीमस्तु चतुर्दशाब्दो धनञ्जयः ।
त्रयोदशाब्दौ च यमौ जग्मतु र्नागसाह्वयम् ।। २

तत्र त्रयोदशाब्दानि धार्तराष्ट्रैस्सहोषिताः ।
षट् च मासाञ्जतुगृहान्मुक्ता जातो घटोत्कचः ।। ३

षण्मासानेकचक्रायां वर्षं पाञ्चालके गृहे ।
धार्तराष्ट्रैस्सहोषित्वा पञ्च वर्षाणि भारत ।। ४

इन्द्रप्रस्थे वसन्तस्ते त्रीणि वर्षाणि विंशतिम् ।
द्वादशाब्दान् यथैकं च बभ्रमुर्द्यूतनिर्जिताः ।। ५

[2]भुक्त्वा षट्त्रिंशतं राज्यं सागरान्तां वसुन्धराम् ।
मासैष्षड्भिर्महात्मानस् सर्वे कृष्णपरायणाः ।। ६

1. क-ख-घ—भीमसेनः पञ्चदशे बीभत्सुर्वै चतुर्दशे ।
2. घ—विराटनगरे चैकं हायनं गूढचर्यकम् । [अधिकः पाठः]

राज्ये परीक्षितं स्थाप्य इष्टां गतिमवाप्नुवन् ॥ ६॥
एवं युधिष्ठिरस्यापि आयुरष्टोत्तरं शतम् ॥ ७
अर्जुनात् केशवो ज्येष्ठस् त्रिभिर्मासैर्महाभुजः ।
कृष्णात् सङ्कर्षणो ज्येष्ठस् त्रिभिर्मासैर्महाबलः ॥[1] ८
[2]दर्शनीयांस्ततः पुत्रान् पाण्डुः पञ्च महावने ।
तान् पश्यन् पर्वते रम्ये स्वबाहुबलपालितान् ॥ ९
[3]सुपुष्पितवने काले प्रवृत्ते मधुमाधवे ।
पूर्णे चतुर्दशे वर्षे फल्गुनस्य च धीमतः ॥ १०
तदा उत्तरफल्गुन्यां प्रवृत्ते स्वस्तिवाचने ।
[4]रक्षणे विस्मृता कुन्ती व्यग्रा ब्राह्मणभोजने ॥ ११
पुरोहितेन सहिता ब्राह्मणान् पर्यवेषयत् ॥ ११॥
तस्मिन् काले समाहूय माद्रीं मदनमोहितः ।
[5]भूतसंमोहने काले सभार्यो व्यचरद्वने ॥ १२॥

---

1. क—रामो वृकोदराज्ज्येष्ठस्त्रिभिर्मासै र्महाबलः । [अधिकः पाठः]
2. घ—प्राकृतं शृणु राजेन्द्र पाण्डवानां यशस्विनाम् ।
पाण्डोः स्वर्गगतिं चैव माद्र्या सह सुशीलया ॥ [अधिकः पाठः]
3. घ—ऋणत्रयाद्विप्रमुक्तं मेने चात्मानमात्मना ।
अवाप पुत्रिणां प्रीतिं यज्ञकोटिसुदुर्लभाम् ॥ [अधिकः पाठः]
4. घ—माद्री सङ्गमनात्पाण्डुं दिवारात्रमतन्द्रिता ।
रक्षन्ती सा पतिं कुन्ती विस्मृता कालपर्ययात् ।
अथ संवत्सरे जिष्णोर्व्यापृता शुभकर्मणि ॥ [अधिकः पाठः]
5. घ—अज्ञातं पृथया भूपः कालपाशप्रपाशितः ॥ [अधिकः पाठः]

[1]पलाशैस्तिलकैश्चूतैश् चम्पकैः पारिभद्रकैः ।
कर्णिकारैरशोकैश्च मल्लिकैरतिमुक्तकैः ॥ १३॥

वकुलैस्तिलकैस्सालैः पनसैर्वनकिंशुकैः ।
अन्यैश्च बहुभिर्वृक्षैर् लतापुष्पफलैर्वृतम् ॥ १४॥

जलस्थानैश्च बहुभिः पद्मिनीभिश्च शोभितम् ।
पाण्डोर्वनं तु संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ १५॥

मत्तभ्रमरसङ्गीतं कोकिलस्वनमिश्रितम् ॥ १६

गायमानैस्तु गन्धर्वैः पुरा नागपुरे यथा ।
प्रहृष्टमनसं तत्र विहरन्तं यथाऽमरम् ॥ १७

तं माद्र्यनुजगामैका वसने बिभ्रती शुभे ॥ १७॥

[2]समीक्षमाणस्य तु तां वयस्स्थां तनुवाससम् ।
तस्य कामः प्रववृधे गहनेऽग्निरिवोत्थितः ॥ १८॥

रहस्यात्मसमां दृष्ट्वा राजा राजीवलोचनाम् ।
न शशाक नियन्तुं तं कामं कामबलात्कृतः ॥ १९॥

अथ सोऽष्टादशे वर्षे ऋतौ माद्रीमलङ्कृताम् ।
आजुहाव ततः पाण्डुः परीतात्मा यशस्विनीम् ॥ २०॥

---

1. घ—प्रियायै दर्शयन् पश्यन् स्वयं च मधुसंपदम् । [अधिकः पाठः]
2. घ—तां माद्रीं पश्यतः पाण्डोः श्यामामरुणवाससम् ।

तत एनां बलाद्राजा जग्राह च रहोगतः ।
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ॥ २१॥

[1]स तु कामपरीतात्मा तं शापं नान्वबुध्यत ।
माद्रीं मैथुनधर्मेण गच्छमानो बलादिव ॥ २२॥

जीवितान्ताय कौरव्यो मन्मथस्य वशं गतः ।
शापजं भयमुत्सृज्य जगामैव बलात् प्रियाम् ॥ २३॥

[2]तस्य कामात्मनो बुद्धिस् साक्षात् कालेन मोहिता ।
सम्प्रमथ्येन्द्रियग्रामं प्रनष्टा सहचेतना ॥ २४॥

स तया सह सङ्गम्य भार्यया कुरुसत्तमः ।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ॥ २५॥

क्षणेनाभ्यपतद्राजा राजधानीं यमस्य वै ॥ २६

ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।
आक्रोशपरमायत्ता चक्रवाकी यथा पतिम् ॥ २७

तं श्रुत्वा करुणं शब्दं सहसोत्पतितं तदा ।
सहपुत्रा ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ॥ २८

आजग्मुस् सहितास्तत्र यत्र राजा तथा गतः ॥ २८॥

---

1. घ–गृहीताऽऽच्छिद्य करया धावन्त्या सर्वतो वनम् । [अधिकः पाठः]
2. घ—क्रोशन्तीं वारयन्तीं च बलात्केशग्रहात् प्रियाम् ।
पातयित्वा जगामाशु कुक्कुटन्यायमास्थितः ॥ [अधिकः पाठः]

ततो माद्र्यब्रवीद्राजन् आर्ता कुन्तीमिदं तदा ।
एकैव त्वमिहागच्छ तिष्ठन्तां तत्र दारकाः ॥ २९॥

एतच्छ्रुत्वा वचस्तस्यास् तत्रैवावार्य दारकान् ।
हताऽहमिति विक्रुश्य सहसोपजगाम ताम् ॥ ३०॥

दृष्ट्वा माद्रीं च पाण्डुं च शयानौ धरणीतले ।
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥ ३१॥

कुन्ती—

रक्ष्यमाणो मया नित्यं धीरस्सततमात्मवान् ।
कथं त्वामत्यतिक्रान्तश् शापं जानन् वनौकसः ॥ ३२॥

ननु नाम त्वया माद्रि रक्षितव्यो नराधिपः ।
सा कथं लोभितवती विजने त्वं नराधिपम् ॥ ३३॥

माद्री—

विधिना चोदितस्यास्य मां दृष्ट्वा विजने वने ।
अचिन्तयित्वा तच्छापं प्रहर्षस्समजायत ॥ ३४॥

कुन्ती—

कथं दिने वसन्ते त्वाम् आसाद्य च रहोगताम् ।
तं विचिन्तयतश्शापं प्रहर्षस्समजायत ॥ ३५॥

धन्या त्वमसि बाह्लीके मत्सौभाग्यतरा भुवि ।
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ ३६॥

माद्री—

अलोभ्यमानेन मया वार्यमाणेन चासकृत् ।
आत्मा न धारितस्तेन सत्यं दिष्टं चिकीर्षुणा ॥ ३७॥

वैशम्पायनः—

तस्यास्तद्वचनं श्रुत्वा कुन्ती शोकाग्नितापिता ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ ३८॥

निश्चेष्टा पतिता भूमौ मोहेन तु चचाल सा ॥ ३९

तस्मिन्क्षणे कृतस्नानम् अमलाम्बरसंवृतम् ।
[1]अलङ्कारकृतं पाण्डुं शयानं शयने शुभे ॥ ४०

कुन्तीमुत्थाप्य माद्री च मोहेनाविष्टचेतनाम् ।
एह्येहीति तां कुन्तीं दर्शयामास कौरवम् ॥ ४१

पादयोः पतिता कुन्ती पुनरुत्थाय भूमिपम् ।
रक्तचन्दनदिग्धाङ्गं महारजनवाससम् ॥ ४२

सस्मितेन तु वक्त्रेण गदन्तामिव भारत ।
[2]परिरभ्य तदा मोहाद् विललापाकुलेन्द्रिया ॥ ४३

माद्री चापि समालिङ्ग्य राजानं विललाप सा ॥ ४३॥

---

1. घ—अहताम्बरसंवीतं रक्तगन्धानुलेपनम् ।
रक्तमाल्याम्बरधरं सर्वाभरणभूषितम् ॥
अलङ्कृत्य च तं पाण्डुं शाययित्वाऽसितेक्षणा ।
क्षौमास्तरणसंवीते शयने त्यक्तरोदना ॥ [अधिकः पाठः]

2. घ—तद्वक्त्रे वक्त्रमाधाय दशन्तमिव भारत । [अधिकः पाठः]

तं तथाऽधिगतं पाण्डुम् ऋषयस्सह चारणैः ।
अभ्येत्य सहितास्सर्वे शोकाश्रूणि प्रवर्तयन् ॥ ४४॥

अस्तं गतमिवादित्यं सुशुष्कमिव सागरम् ।
दृष्ट्वा पाण्डुं नरव्याघ्रं शोचन्ति स्म महर्षयः ॥ ४५॥

समानशोका ऋषयः पाण्डवाश्च बभूविरे ।
ते समाश्वासिते विप्रैर् विलेपतुरनिन्दिते ॥ ४६॥

कुन्ती—

हा राजन् कस्य नो हित्वा गच्छसि त्रिदशालयम् ॥ ४७

हा राजन् मम मन्दायाः कथं माद्रीं समेत्य वै ।
निधनं प्राप्तवान् राजन् मद्भाग्यपरिसंक्षयात् ॥ ४८

युधिष्ठिरं भीमसेनम् अर्जुनं च यमावुभौ ।
कस्य हित्वा प्रियान् पुत्रान् प्रयातोऽसि विशाम्पते ॥ ४९

नूनं त्वां त्रिदशा देवाः प्रतिनन्दन्ति भारत ।
यथा हि तप उग्रं ते चरितं विप्रसंसदि ॥ ५०

आवाभ्यां सहितो राजन् गमिष्यसि दिवं शुभाम् ।
आजमीढाजमीढानां कर्मणा चरितां गतिम् ॥ ५१

ननु नाम सहावाभ्यां गमिष्यामीति नस्त्वया ।
प्रतिज्ञातं कुरुश्रेष्ठ यदाऽस्मि वनमागता ॥ ५२

आवाभ्यां त्वेव सहितो गमिष्यसि विशां पते ।

मुहूर्तं क्षम्यतां राजन् आरोक्ष्यावश्रितां तव ॥ ५३

वैशंपायनः—

विलपित्वा भृशं त्वेवं निस्संज्ञे पतिते भुवि ।
यथा मृगे हते मृग्यौ लुब्धैर्वनगतैस्तदा ॥ ५४

युधिष्ठिरमुखास्सर्वे पाण्डवा वेदपारगाः ।
तेऽप्यागत्य पितुर्मूले निस्संज्ञाः पतिता भुवि ॥ ५५

पाण्डोः पादौ परिष्वज्य विलपन्ति स्म पाण्डवाः ॥ ५५॥

युधिष्ठिरः—

हा विनष्टास्स्म तातेति हा अनाथा भवामहे ।
[1]क्षणेनैव महाराज अहो लोकस्य चित्रता ॥ ५६॥

नास्मद्विधा राजपुत्रा अधन्यास्सन्ति भारत ।
त्वद्विनाशाच्च राजेन्द्र राज्यप्रस्खलनात्तथा ॥ ५७॥

बान्धवानामथाज्ञानात् प्राप्तास्स्म व्यसनं महत् ।
किं करिष्यामहे राजन् कर्तव्यं नः प्रसीदताम् ॥ ५८॥

---

1. क-ख-ग—त्वद्विहीना महाप्राज्ञ कथं वर्ताम बालकाः ।
लोकनाथस्य पुत्रास्स्मो न सनाथा भवामहे ॥
[अधिकः पाठः]

घ—हा मग्नाः शोकदुःखाब्धौ शून्याः पश्यामहे दिशः ।
त्वद्विहीना महाप्राज्ञ कथं जीवामहेऽबलाः ॥
लोकनाथस्य पुत्रास्स्मो न सनाथा भवामहे ।
क्षणेनैव महाराज पतिता दुःखसागरे ॥ [अधिकः पाठः]

भीमसेनः—

हित्वा राज्यं च भोगांश्च शतशृङ्गे निवासिना ।
त्वया लब्धास्स्म राजेन्द्र महता तपसा वयम् ॥ ५९॥

हित्वा मानं वनं गत्वा स्वयमाहृत्य भक्षणम् ।
शाकमूलफलैर्वन्यैर् भरणं वै त्वया कृतम् ॥ ६०॥

पुत्रानुत्पाद्य पितरो यमिच्छन्ति महात्मनः ।
त्रिवर्गफलमिच्छन्तस् तस्य कालोऽयमागतः ॥ ६१॥

अभुक्त्वैव फलं राजन् गन्तुं नार्हसि भारत ॥ ६२

वैशम्पायनः—

इत्येवमुक्त्वा पितरं भीमोऽपि विललाप ह ॥ ६२॥

अर्जुनः—

प्रनष्टं भारतं वंशं पाण्डुना पुनरुद्धृतम् ॥ ६३

तस्मिंस्तपोवनगते नष्टं राज्यं सराष्ट्रकम् ।
पुनर्निस्तारितं क्षत्रं पाण्डुपुत्रैश्च पञ्चभिः ॥ ६४

एतच्छ्रुत्वाऽनुमोदित्वा गन्तुमर्हसि कौरव ॥ ६४॥

वैशम्पायनः—

इत्येवमुक्त्वा पितरं विललाप धनञ्जयः ॥ ६५

यमौ—

दुस्सञ्चयं तपः कृत्वा लब्ध्वा नो भरतर्षभ ।
पुत्रलाभस्य महतश् शुश्रूषादिफलं त्वया ॥ ६६

न चावाप्तं त्वया तात त्वत्पित्रा तु यथा पुरा ॥ ६६॥

वैशम्पायनः—

एवमुक्त्वा यमौ चापि विलेपतुरथातुरौ ॥ ६७

कुन्ती—

अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम ।

अवश्यंभाविनो भावान् मा मा माद्रि निवर्तय ॥ ६८

अन्वेष्यामीह भर्तारम् अहं प्रेतवशं गतम् ।

[1]उत्तिष्ठैनं विसृज्य त्वम् इमान् रक्षस्व दारकान् ॥ ६९

अवाप्य पुत्राँल्लब्धात्मा वीरपत्नीत्वमर्थये ॥ ६९॥

वैशम्पायनः—

मद्रराजसुता कुन्तीम् इदं वचनमब्रवीत् ॥ ७०

माद्री—

अहमेवानुयास्यामि भर्तारमपलायिनम् ।

न हि तृप्तास्मि कामानां त्वं ज्येष्ठा ह्यनुमन्यताम् ॥ ७१

मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः ।

समुच्छिन्द्यामस्य कामं कथं नु यमसादने ॥ ७२

मम हेतोर्गतो राजा दिवं राजर्षिसत्तमः ।

न चैव तादृशी बुद्धिर् बान्धवाश्च न तादृशाः ॥ ७३

---

1. घ—उत्तिष्ठ त्वं विसृज्याहं मा मोक्ष्यामि चितामिमाम् ॥
महाराजेन पतिना भोक्ष्ये स्वर्गफलं महत् ।
दारकांस्त्वमिमान् रक्ष पुत्रप्रीतिमवाप्नुहि ॥
साम्राज्यपदसंप्राप्तान् पश्यन्ती प्रीतिमाप्नुहि ।
उत्तारमनुयामीह वीरपत्नि समृद्धये ॥ [अधिकः पाठः]

न चोत्सहे धारयितुं प्राणान् भर्त्रा विनाकृता ।
[1]तस्मात्तमनुयास्यामि यान्तं वैवस्वतक्षयम् ॥ ७४
वर्तेयं न समां वृत्तिं जात्वहं च सुतेषु ते ।
[2]तथा हि वर्तमानां माम् अधर्मस्संपृशेन्महान् ७५
तस्मान्मे सुतयोर्देवि वर्तितव्यं स्वपुत्रवत् ।
[3]अन्वेष्यामि च भर्तारं व्रजन्तं यमसादनम् ॥ ७६
मां हि कामयमानोऽयं राजा प्रेतवशं गतः ॥ ७६॥
[4]राज्ञश्शरीरेण सह ममापीदं कलेबरम् ।
दग्धव्यं सुप्रतिच्छन्नम् एतदार्ये प्रियं कुरु ॥ ७७॥
दारकेष्वप्रमत्ता त्वं भवेश्चाभिहिता मम ।
अतोऽन्यन्न प्रपश्यामि सन्देष्टव्यं हि किञ्चन ॥ ७८॥

वैशंपायनः—

ऋषयस्तान् समाश्वास्य पाण्डवान् सत्यविक्रमान् ।
ऊचुः कुन्तीं च माद्रीं च समाश्वास्य तपस्विनः ॥ ७९॥
सुभगे बालपुत्रे तु न मर्तव्यं कथञ्चन ।
पाण्डवांश्चापि नेष्यामः कुरुराष्ट्रं परन्तपान् ॥ ८०॥

---

1. घ—या कामात् भवता गच्छेत् सा त्वया सह यास्यति ।
इति विप्रोऽशपत्पूर्वं तस्माद्यास्याम्यहं पतिम् ॥ [अधिकः पाठः]
2. घ—नाहं शक्ता समं ज्येष्ठे वर्तितुं बालिशा ह्यहम् । [अधिकः पाठः]
3. घ—नूनं तव सुतावेतौ त्वन्मन्त्रमहिमोद्भवौ । [अधिकः पाठः]
4. घ—प्रारब्धसुखलाभार्थं मदागमनमात्मवान् ।
पश्यन्नास्ते पुरो गत्वा मध्येमार्गं नृपोत्तमः ॥ [अधिकः पाठः]

अधर्मेष्वर्थजातेषु धृतराष्ट्रश्च लोभवान् ।
स कदाचिन्न वर्तेत पाण्डवेषु यथाविधि ॥ ८१॥

कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
माद्र्याश्च बलिनां श्रेष्ठश्शल्यो भ्राता महारथः ॥ ८२॥

भर्त्रानुमरणं सार्थं फलवन्नात्र संशयः ।
[1]युवाभ्यां दुष्करं चैतद् वदन्ति द्विजपुङ्गवाः ॥ ८३॥

मृते भर्तरि या साध्वी ब्रह्मचर्यव्रते स्थिता ।
यमैश्च नियमैश्श्रान्ता मनोवाक्कायजैश्शुभैः ॥ ८४॥

[2]भर्तारं चिन्तयन्ती सा भर्तारं निस्तरेच्छुभा ।
तारितश्चापि भर्ता स्याद् आत्मा पुत्रस्तथैव च ॥ ८५॥

[3]तस्माज्जीवितमेवैतद् युवयोर्विद्म शोभनम् ॥ ८६

---

1. घ—असाध्यो धर्मसूक्ष्मत्वाद् दुष्करं प्रतिभाति नः ।
भर्त्रानुगमनं स्त्रीणां सुकरं जीवितं भवेत् ॥
क्लेशोऽधितरणं स्त्रीणां पाण्डुर्देहेन मारणम् ।
मारणं जीवितं श्रेयो भर्त्रा सायुज्यदं शुभम् ॥ [अधिकः पाठः]

2. घ—व्रतोपवासनियमैः कृच्छ्रैश्चान्द्रायणादिभिः ।
भूशय्यां क्षारलवणं वर्जनं चैकभोजनम ॥
येन केनापि विधिना देहशोषणतत्परा ।
देहपोषणसंयुक्ता विषयै र्हृतचेतना ॥
देहव्ययेन नरकं महदाप्नोत्यसंशयः ।
तस्मात्त्वं शोषयेद्देहं विषया नाशमाप्नुयुः ॥ [अधिकःपाठः]

3. घ—अपुत्रिणां मृतानां स्त्री पुत्रिणां लोकदा भवेत् ।
विधवाचारसंयुक्ता सा सुपुत्रासमा स्मृतिः ॥ [अधिकः पाठः]

कुन्ती—

यथा पाण्डोश्च निर्देशस् तथा विप्रगणस्य च ।
आज्ञा शिरसि निक्षिप्ता करिष्यामि च तत्तथा ॥ ८७

यथाऽऽहुर्भगवन्तो हि तन्मन्ये शोभनं परम् ।
भर्तुश्च मम पुत्राणां मम चैव न संशयः ॥ ८८

माद्री—

कुन्ती समर्था पुत्राणां योगक्षेमस्य धारणे ।
अस्या हि न समा बुद्ध्या यद्यपि स्यादरुन्धती ॥ ८९

कुन्त्याश्च वृष्णयो नाथाः कुन्तीभोजस्तथैव च ।
नाहं त्वामिव पुत्राणां समर्था धारणे तथा ॥ ९०

साऽहं भर्तारमन्वेष्ये अतृप्ता नन्वहं तथा ।
भर्तृलोकस्य तु ज्येष्ठा देवी मामनुमन्यताम् ॥ ९१

धर्मज्ञस्य कृतज्ञस्य सत्यधर्मस्य धीमतः ।
पादौ परिचरिष्यामि तदार्ये ह्यनुमन्यताम् ॥ ९२

वैशंपायनः—

एवमुक्त्वा महाराज मद्रराजसुता शुभा ।
ददौ कुन्त्यै यमौ माद्री शिरसाऽभिप्रणम्य च ॥ ९३

अभिवाद्य ऋषीन् सर्वान् परिष्वज्य च पाण्डवान् ।
मूर्ध्न्युपाघ्राय बहुशः पार्थानात्मसुतौ तथा ॥ ९४

हस्ते युधिष्ठिरं गृह्य माद्री वाक्यमभाषत ॥ ९४॥

माद्री –

कुन्ती माता अहं धात्री युष्माकं तु पिता मृतः ।
युधिष्ठिरः पिता ज्येष्ठश् चतुर्णां धर्मतस्सदा ॥ ९५॥

वृद्धानुशासने सक्तास् सत्यधर्मपरायणाः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ॥ ९६॥

तस्मात् सर्वे कुरुध्वं वै गुरुवृत्तिमतन्द्रिताः ॥ ९७

वैशंपायनः—

ऋषीणां च पृथायाश्च नमस्कृत्य पुनः पुनः ।
आयासकृपणा माद्री प्रत्युवाच पृथां तथा ॥ ९८

धन्या त्वमसि वार्ष्णेयि नास्ति स्त्री सदृशी त्वया ।
वीर्यं तेजश्च योगं च माहात्म्यं च यशस्विनाम् ॥ ९९

कुन्ति द्रक्ष्यसि पुत्राणां पञ्चानाममितौजसाम् ।
ऋषीणां सन्निधावेषां मया वागभ्युदीरिता ॥ १००

दिदृक्षमाणायास्स्वर्गं ममैषा न वृथा भवेत् ।
आर्या चाप्यभिवाद्या च मम पूज्या च सर्वतः ॥ १०१

ज्येष्ठा वरिष्ठा त्वं देवि भूषिता स्वगुणैश्शुभैः ।
अभ्यनुज्ञातुमिच्छामि त्वया [1]यादवनन्दिनि ॥ १०२

1. अ—यादवनिन्दिते ।

धर्मं स्वर्गं च कीर्तिं च त्वत्कृतेऽहमवाप्नुयाम् ।
यथा तथा विधत्स्वेह मा च कार्षीर्विचारणाम् ॥ १०३

वैशंपायनः—

बाष्पसन्दिग्धया वाचा कुन्त्युवाच यशस्विनी ॥ १०३॥

कुन्ती—

अनुज्ञातासि कल्याणि त्रिदिवे सङ्गमोऽस्तु ते ।
भर्त्रा सह विशालाक्षि क्षिप्रमद्यैव भामिनि ॥ १०४॥

सङ्गता स्वर्गलोके त्वं रमेथाश्शाश्वतीस्समाः ॥ १०५

वैशंपायनः—

ततः पुरोहितस्स्नात्वा प्रेतकर्मणि पारगः ।
हिरण्यशकलान्याज्यं तिलान् दधि च तण्डुलान् ॥ १०६

उदकुम्भं सपरशुं समानीय तपस्विभिः ।
अश्वमेधाग्निमाहृत्य यथान्यायं समन्ततः ॥ १०७

काश्यपः कारयामास पाण्डोः प्रेतस्य तां क्रियाम् ॥ १०७॥

पुरोहितोक्तविधिना पाण्डोः पुत्रो युधिष्ठिरः ।
चित्याग्निनाऽदहत् पाण्डुं कृत्वा चापि क्रियां तदा ॥ १०८॥

रुदञ्छोकाभिसंतप्तः पपात भुवि पाण्डवः ॥ १०९

ऋषीन् पुत्रान् पृथां चैव विसृज्य च नृपात्मजान् ।

[1]नमस्कृत्य चिताग्निस्थं धर्मपत्नी नराधिपम् ॥ ११०

मद्रराजात्मजा तूर्णम् अन्वारोहद्यशस्विनी ॥ ११०॥

अहताम्बरसंवीतो भ्रातृभिस्सहितोऽनघः ।

उदकं कृतवांस्तत्र पुरोहितमते स्थितः ॥ १११॥

[2]अर्हतस्तस्य कृत्यानि शतशृङ्गनिवासिनः ।

तापसा विधिवच्चक्रुश् चारणा ऋषिभिस्सह ॥ २१२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
॥ ७ ॥ संभवपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[अस्मिन्नध्याये ११२॥ श्लोकाः]

---

## ॥ षोडशाधिकशततमोऽध्यायः ॥

हास्तिनपुरं प्राप्य पाण्डुचरितमुक्त्वा युधिष्ठिरादीन् भीष्माय समर्प्य च ऋषीणां प्रतिनिवर्तनम् ॥ १ ॥

---

वैशंपायनः—

पाण्डोरवभृथं कृत्वा देवकल्पा महर्षयः ।

ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विनः ॥ १

---

1. घ—नमस्कृत्य ऋषीन् सर्वाननुज्ञाता मुनीश्वरैः ।
आशीर्भिर्वर्धयित्वा च पाण्डवान् धर्मशीलिनः॥[अधिकः पाठः]

2. घ—एककुण्डेऽददात्पित्रो र्निवापं विधिचोदनात् ।
एकपाके पृथक् श्राद्धं वृषोत्सर्जनपूर्वकम् ॥ [अधिकः पाठः]

हित्वा राज्यं च राष्ट्रं च स महात्मा महातपाः ।
अस्मिन् स्थाने तपस्तप्तुं तापसाञ्शरणं गतः ॥ २

सञ्जातमात्रान् पुत्रांश्च दारांश्च भवतामिह ।
प्रदायोपानिधिं राजा पाण्डुस्स्वर्गमितो गतः ॥ ३

तस्मात् कृत्यं परीक्षध्वम् इति होवाच धर्मवित् ।
शुकः परमकल्याणो गिरा समभिभाषत ॥ ४

ते परस्परमामन्त्र्य सर्वभूतहिते रताः ।
धर्मं चैव पुरस्कृत्य श्रेष्ठां मतिमकुर्वत ॥ ५

कुरुक्षेत्रमितः कुन्तीं तां सपुत्रां नयामहे ।
इत्युक्त्वा ते महात्मानो गमने चक्रिरे मनः ॥ ६

तस्मिन्नेव क्षणे सर्वे परिवार्य प्रतस्थिरे ।
पाण्डोः पुत्रान् पुरस्कृत्य नगरं नागसाह्वयम् ॥ ७

भीष्माय पाण्डवान् दातुं धृतराष्ट्राय चैव हि ।
तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे ॥ ८

पाण्डोर्दारांश्च पुत्रांश्च शरीरे चैव तापसाः ॥ ८॥

सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला ।
प्रपन्ना दीर्घमध्वानम् संक्षिप्तं तममन्यत ॥ ९॥

सा न दीर्घेण कालेन सम्प्राप्ता कुरुजाङ्गलम् ।
वर्धमानपुरद्वारम् आससाद यशस्विनी ॥ १०॥

तच्चारणसहस्रं वै मुनीनां चागतं तदा ।
श्रुत्वा नागपुरेन्द्राणां विस्मयस्समजायत ॥ ११॥

मुहूर्तोदित आदित्ये सर्वे भीष्मपुरोगमाः ।
सदारास्तापसान् द्रष्टुं निर्ययुः पुरवासिनः ॥ १२॥

स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसङ्घान् समास्थिताः ।
ब्राह्मणैस्सह निर्जग्मुर् ब्राह्मणाश्च सयोषितः ॥ १३॥

तथा विट्च्छूद्रसङ्घानां महान् व्यतिकरोऽभवत् ॥ १४
न कश्चिदकरोदीर्ष्याम् अभवन् धर्मबुद्धयः ॥ १४॥

तथा भीष्मश्शान्तनवस् सोमदत्तोऽथ बाह्लिकः ।
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरस्स्वयम् ॥ १५॥

सा च सत्यवती देवी देवी चाम्बालिकाऽपि च ।
राजदारैः परिवृता गान्धारी चापि निर्ययौ ॥ १६॥

धृतराष्ट्रस्य दायादा दुर्योधनपुरस्सराः ।
भूषिता भूषणैश्चित्रैश् शतसङ्ख्या विनिर्ययुः ॥ १७॥

तान् महर्षिगणान् सर्वान् छिरोभिरभिवाद्य च ।
स्वागतं वचनं चोक्त्वा पाण्डोर्भवनमाविशन् ॥ १८॥

उपोपविविशुस्सर्वे कौरवस्य पुरोहिताः ॥ १९
तथैव शिरसा भूमावभिवाद्य प्रसाद्य च ।
उपोपविविशुस्सर्वे पौरजानपदा अपि ॥ २०
[1]तमद्भुतमिवाज्ञाय जनौघं सर्वशस्तदा ।
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् ॥ २१
तेषां वृद्धतमः कश्चित् प्रत्युत्थाय जटाजिनी ।
महर्षिमतमास्थाय महर्षिरिदमब्रवीत् ॥ २२

महर्षिः—

यस्स कौरव्यदायादः पाण्डुर्नाम नराधिपः ।
हित्वा राष्ट्राणि राज्यं च शतशृङ्गमितो गतः ॥ २३
कामभोगान् परित्यज्य तपस्वी ह बभूव ह ।
स यथोक्तं तपस्तेपे तत्र मूलफलाशनः ॥ २४
पत्नीभ्यां सह धर्मात्मा कञ्चित् कालमतन्द्रितः ॥ २४॥
तेन वृत्तसमाचारैस् तपसा च तपस्विनः ।
तोषितास्तापसास्तत्र शतशृङ्गनिवासिनः ॥ २५॥
स्वर्गलोकं गन्तुकामं तपसा विनिवार्य तम् ।
उद्यन्तं सह पत्नीभ्यां विप्रा वचनमब्रुवन् ॥ २६॥
अनपत्यस्य राजेन्द्र पुण्यलोका न सन्ति ते ॥ २७
तस्माद्धर्मं च वायुं च महेन्द्रं च तथाऽश्विनौ ।

1. क-ग--अक्रूरमिव चाज्ञाय; ख—तमग्रजमिवाज्ञाय

आराधयस्व राजेन्द्र पत्नीभ्यां सह देवताः ॥ २८
तृप्ताः पुत्रान् प्रयच्छन्ति ऋणमुक्तो भविष्यसि ॥ २८॥
तपसा दिव्यचक्षुष्ट्वात् पश्यामस्ते तथा सुतान् ॥ २९
अस्माकं वचनं श्रुत्वा देवानाराधयत्तदा ॥ २९॥
[1]ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना ।
तस्माद्धर्मादयं पुत्रः कुन्त्यां जातो युधिष्ठिरः ॥ ३०॥
तथेमं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः ।
मातरिश्वा ददौ पुत्रं भीमं बलवतां वरम् ॥ ३१॥
पुरुहूतादयं जज्ञे कुन्त्यामेव धनञ्जयः ॥ ३२
अस्मिञ्जाते महेष्वासे देवैरिन्द्रस्तथाऽब्रवीत् ॥ ३२॥
मत्प्रसादादयं जातः कुन्ति सत्यपराक्रमः ।
[2]अजेयो युधि जेताऽरीन् देवतादीन् न संशयः ॥ ३३॥
यस्य कीर्तिर्महेष्वासान् सर्वान्नोऽभिभविष्यति ।
युधिष्ठिरो राजसूयं भ्रातृवीर्यादवाप्स्यति ॥ ३४॥

---

1. घ—कुन्तीं स प्रेरयामास देवरन्यायधर्मतः ।
सा नामन्यत तं न्यायं पुण्यैराख्यानकैरपि ।
मुनेर्मन्त्रप्रभावेन शङ्करांशं त्रियोनिनः ॥
आहूय धर्मं वायुं च महेन्द्रं च तथाऽश्विनौ ।
असूत पुत्रान्कुन्ती यांस्त्रीन् माद्री द्वौ सुतावपि ।[अधिकः पाठः]

2. घ—लघयिष्यति हरिणा भुवो भारं नियोजितः ।
नरो मामाविशत्कुन्ति विष्णोरर्धं नरं विदुः ।
सोऽहं त्वामाविशं भद्रे जातोऽयं फल्गुनाह्वयः ।
तस्मादजेयो भुवनैश्चतुर्दशभिरप्यसौ ॥ [अधिकः पाठः]

एष जेता मनुष्यांश्च सर्वान् गन्धर्वराक्षसान् ।
[1]एष दुर्योधनं कीर्त्या भारतांश्च विजेष्यति ॥ ३५॥
वीरस्यैतस्य विक्रान्तैर् धर्मपुत्रो युधिष्ठिरः ।
[2]यक्ष्यते राजसूयाद्यैर् धर्म एव परस्सदा ॥ ३६॥
इन्द्रस्य वचनं श्रुत्वा पाण्डुः प्रीतिमवाप सः ॥ ३७
यौ तु माद्री महेष्वासावसूत कुरुसत्तमौ ।
अश्विभ्यां मनुजव्याघ्राविमौ तावपि तिष्ठतः ॥ ३८
नकुलस्सहदेवश्च तावप्यमिततेजसौ ।
पाण्डवौ नरशार्दूलाविमावप्यपराजितौ ॥ ३९
चरता धर्मनित्येन वनवासं यशस्विना ।
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ ४०
पुत्राणां जन्म वृत्तं च वैदिकाध्ययनानि च ।
पश्यतस्सततं पाण्डोश् शश्वत् प्रीतिरवर्धत ॥ ४१
वर्तमानस्सतां मार्गे पुत्रलाभमवाप्य च ।
पितृलोकं गतः पाण्डुर् इतस्सप्तदशेऽहनि ॥ ४२
तं चितागतमासाद्य वैश्वानरमुखे हुतम् ।
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ॥ ४३
सङ्गता सह तेनैव पतिलोकमनुव्रता ।

---

1. घ—सुरासुरोरगादींश्च वीर्यादेकरथो जयेत् । [अधिकः पाठः]
2. घ—अजातशत्रुर्धर्मात्मा पृथ्वैश्वर्ये स्सुपूजितः । [अधिकः पाठः]

तस्यास्तस्य च यत् कार्यं क्रियतां तदनन्तरम् ॥ ४४
[1]पृथां च शरणं प्राप्तां पाण्डवांश्च यशस्विनः ।
यथावदनुगृह्णन्तां धर्मो ह्येष सनातनः ॥ ४५
इमे तयोश्शरीरे द्वे सुताश्चेमे तयोर्वराः ।
क्रियाभिरनुगृह्णन्तां सह मात्रा परन्तपाः ॥ ४६
प्रेतकार्ये च निर्वृत्ते पितृमेधे च पाण्डवाः ।
लभन्तां सर्वदायाद्यं पाण्डोः कुरुकुलोद्वहाः ॥ ४७

वैशंपायनः—

एवमुक्त्वा कुरून् सर्वान् कौरवाणां च पश्यताम् ।
क्षणेनान्तर्हितास्सर्वे चारणा गुह्यकैस्सह ॥ ४८
ऋषिसिद्धगणान् दृष्ट्वा विस्मयं ते परं ययुः ।
गन्धर्वनगराकारांस् तत्रैवान्तर्हितांस्तदा ॥ ४९
कौरवास्सहसोत्पत्य साधु साध्विति विस्मिताः ॥ ४९।

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

॥ ७ ॥ संभवपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

[अस्मिन्नध्याये ४९॥ श्लोकाः]

---

1 घ—भीष्मं च धृतराष्ट्रं च विदुरं च महामतिम् ।
गान्धारीं शरणं प्राप्तान् अन्यांश्च कुरुपुङ्गवान् ॥
पाण्डवान् परिगृह्णीध्वं धर्मनित्यान्यशस्विनः ।
एतेषां भरणं भीष्म महान्धर्मस्तवाभि भो ।
क्षत्तुश्च धृतराष्ट्रस्य गान्धार्यांश्च विशेषतः ॥ [अधिकः पाठः]

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥

पाण्डोरस्थिसञ्चयनादिविधिः ॥ १ ॥

धृतराष्ट्रः—

पाण्डोर्विदुर! सर्वाणि प्रेतकार्याणि कारय ।
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १
पशून् वासांसि रत्नानि धनानि विविधानि च ।
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् ॥ २
यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु ।
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ॥ ३
न शोच्यः पाण्डुरनघः प्रशस्यस्स नराधिपः ।
[1]यस्य पञ्च सुता वीरा जातास्सुरसुतोपमाः ॥ ४

वैशंपायनः—

विदुरस्स तथेत्युक्त्वा भीष्मेण सह भारत ।
पाण्डुं संस्कारयामास देशे परमसम्मते ॥ ५
ततस्तु नगरात्तूर्णम् आज्यहोमपुरस्कृताः ।
निर्हृताः पावका दीप्ताः पाण्डो राजन् पुरोहितैः ॥ ६

1. घ—स पाण्डुश्च न शोच्यस्स्यात् प्रवरः पुण्यकर्मणाम् ।
[अधिकः पाठः]

[1]अथैतमार्तवैर्गन्धैर् माल्यैश्च विविधैरपि ।
शिबिकास्थमलञ्चक्रुर् वस्त्रैराच्छाद्य सर्वशः ॥ ७
[2]तं तथा शोभितं माल्यैर् विविधैश्च महाधनैः ।
[3]अमात्या ज्ञातयश्चैव सुहृदश्चोपतस्थिरे । ८
नृसिंहं नरयुक्तेन परमालङ्कृतेन तम् ।
अवहन् यानमुख्येन सह माद्र्या सुसम्भृतम् ॥ ९
पाण्डरेणातपत्रेण चामरव्यजनेन च ।
सर्ववादित्रनादैश्च समलञ्चक्रिरे ततः ॥ १०
ततस्सर्वाणि रत्नानि बहूनि शतशो नराः ।
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तत्रौर्ध्वदैहिके ॥ ११
अच्छिद्राणि च शुभ्राणि पाण्डराणि बहूनि च ।
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च ॥ १२
याजकैश्शुक्लवासोभिर् हूयमाना हुताशनाः ।
अगच्छन्नग्रतस्तस्य दीप्यमानास्स्वलङ्कृताः ॥ १३

1. घ—पालाशवृन्तकाष्ठैश्च कुशमुञ्जालकबल्बजैः ।
सूत्रोक्तेन विधानेन शरीरं चक्ररञ्जसा ।
अस्थिगर्भे तयो भूप कृत्वा प्रतिकृती तयोः ।
शिबिकायां समारोप्य शोभितायामलङ्कृतैः ॥ [अधिकः पाठः]
2. घ—मुक्ताप्रवालमाणिक्य हेमस्रग्भिरलङ्कृतम् । [अधिकः पाठः]
3. घ—दर्पणाशोकपुन्नागमल्लिकाजातिचम्पकैः ।
नालिकेरफलैः पुष्पैः पूगीफलसुगुच्छकैः ।
तां तथा शोभितां माल्यैर्विविधैश्च महाधनैः । [अधिकः पाठः]

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चैव सहस्रशः ।
रुदन्तश्शोकसन्तप्ता अनुजग्मुर्नराधिपम् ॥ १४

[1]अयमस्मानपाहाय दुःखं चाधाय शाश्वतम् ।
कृत्वाऽनाथान् परो नाथः क्व यास्यति नराधिपः ॥ १५

[2]क्रोशंतः पाण्डवास्सर्वे भीष्मो विदुर एव च ।
बाह्लीकस्सोमदत्तश्च तथा भूरिश्रवा नृपः॥ १६
अन्योन्यं वै समाश्लिष्य अनुजग्मुस्सहस्रशः ॥ १६॥

रमणीये वनोद्देशे गङ्गातीरे समे शुभे ।
न्यासयामासुरथ तां शिबिकां सत्यवादिनः ॥ १७॥
सभार्यस्य नृसिंहस्य पाण्डोरक्लिष्टकर्मणः ॥ १८

[3]ततस्तस्य शरीरं तत् सर्वगन्धनिषेवितम् ।
शुचिकालेयकादिग्धं मुख्यस्नानाधिवासितम् ॥ १९
पर्यषिञ्चञ्जलेनाशु शातकुम्भमयैर्घटैः।

---

1. घ—विकीर्णमूर्धजास्सर्वे मूर्ध्नि विन्यस्तपाणयः ।
उरस्ताडं रुदन्तश्च स्त्रियस्सर्वा अनावृताः ।
एकवस्त्रधरास्सर्वे निराभरणभूषणाः ।
नोष्णीषिणो महाराज निरानन्दा भृशातुराः ।
पुरुषाश्च स्त्रियस्सर्वा अनुजग्मुर्नराधिपम् । [अधिकः पाठः ।]
2. घ—अनिधाय सुतान् राज्ये वने जातान् यशस्विनः ।
अदृष्ट्वा पुत्रसम्पत्तिं क्व यास्यसि महीपते । [अधिकः पाठः]
3. घ—आच्छिद्य वासस्संवीतं देशशुद्धिं वितेनिरे ॥ [अधिकः पाठः]

चन्दनेनापि मुख्येन शुक्लेन समलेपयन् ॥ २०
कालागरुविमिश्रेण तथा धातुरसेन च ।
अथैनं देशजैश्शुक्लैर् वासोभिस्समयोजयन् ॥ २१
[1]आच्छन्नस्सह वासोभिर् जीवन्निव नरर्षभः ।
[2]शुशुभे पुरुषव्याघ्रो महार्हशयनोचितः ॥ २२
हयमेधाग्निना सर्वे याजकास्सपुरोहिताः ।
[3]वेदोक्तेन विधानेन क्रियां चक्रुस्समन्त्रकम् ॥ २३
याजकैरभ्यनुज्ञाताः प्रेतकर्माणि निश्चितैः ॥ २३॥
घृतावसिक्तं राजानं सह माद्र्या स्वलङ्कृतम् ।
तुङ्गपद्मकमिश्रेण चन्दनेन सुगन्धिना ॥ २४॥
सरलं देवदारुं च गुग्गुलुं लाक्षया सह ।
रक्तचन्दनकाष्ठैश्च हरिबेरैरुशीरजैः ॥ २५॥
अन्यैश्च विविधैर्गन्धै राजानं समदाहयन् ॥ २६
घृताप्लुतैर्महावस्त्रैः प्रावारैश्च महाधनैः ।
घृतपूर्णैस्तथा कुम्भै राजानं समदाहयन् ॥ २७
ततस्तयोश्शरीरे ते दृष्ट्वा मोहवशं गताः ।
हा हा पुत्रेति कौसल्या पपात सहसा भुवि ॥ २८

1. घ—आच्छन्नौ तु सुवासोभिस्सर्वालङ्कारशोभिनौ ।
2. घ--स जीवाविवं राजेन्द्र शुशुभाते तु पश्यताम् ।
3. अ—कोशे अयं श्लोको न दृश्यते ।

तां प्रेक्ष्य पतितामार्तां पौरजानपदा जनाः ।
रुरुदुस्सस्वरं सर्वे राजभक्त्या कृपान्विताः ॥ २९
[1]क्रान्तानीवार्तनादेन सर्वाणि च विचुक्रुशुः ।
मानुषैस्सह भूतानि तिर्यग्योनिगतान्यपि ॥ ३०
[2]तथा भीष्मश्शान्तनवो विदुरश्च महामतिः ।
ज्ञातयः कौरवाश्चैव प्राणदन् भृशदुःखिताः ॥ ३१
चुक्रुशुः पाण्डवास्सर्वे धृतराष्ट्रश्च भारत ।
तथा भीष्मोऽथ विदुरो राजा च सह बान्धवैः ॥ ३२
[3]कृतोदकांस्तानादाय पाण्डवाञ्छोककर्शितान् ।
सर्वाः प्रकृतयो राजञ् छोचन्त्यः पर्यवारयन् ॥ ३३
यथा च पाण्डवा भूमौ शेरते सह बान्धवाः ।
तथैव नागरा राजञ् छिश्यिरे ब्राह्मणादयः ॥ ३४
तदनानन्दमस्वस्थम् आकुमारमहृष्टवत् ।
बभूव पाण्डवैस्सार्धं नगरं द्वादश क्षपाः ॥ ३५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ७ ॥ संभवपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[अस्मिन्नध्याये ३५ श्लोकाः]

---

1. घ—क्रान्ता इवार्तनादेन सर्वास्ताश्चुक्रुशुः स्त्रियः ।
2. घ—सर्वाणि समदुःखानि रुरुदुस्सह तैर्जनैः ।
3. घ—एककुण्डे पृथक् चैव पिण्डांश्चैव पृथक्पृथक् ।
ददुर्धर्मोदकं सर्वे सर्वाश्च कुरुयोषितः ।　[अधिकः पाठः]

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

पाण्डोःश्राद्धदानम् ॥ १ ॥ सत्यवत्यास्स्नुषाभ्यां सह तपोवनगमनम् ॥ २ ॥

वैशम्पायनः—

ततः क्षत्ता च भीष्मश्च व्यासो राजा च बन्धुभिः ।
ददुश्श्राद्धं तथा पाण्डोस्स्वधामृतसमं तदा ॥ १
पुरोहितसहायास्ते यथान्यायमकुर्वत ॥ १॥
[1]कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः ।
रत्नौघान् विप्रमुख्येभ्यो दत्त्वा ग्रामवरानपि ॥ २॥
कृतशौचांस्ततस्तांस्तु पाण्डवान् भरतर्षभ ।
आदाय विविशुः पौराः पुरं वाराणसाह्वयम् ॥ ३॥
सततं स्मान्वतप्यन्त तमेव भरतर्षभम् ।
पौरजानपदास्सर्वे मृतं स्वमिव बान्धवम् ॥ ४॥
श्राद्धावसानेषु तदा दृष्ट्वा तं दुःखितं जनम् ।
सम्मूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ॥ ५॥

व्यासः—

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वश्वत् पापीयादिवसाः पृथिवी गतयौवना ॥ ६॥

1. घ—एकपाके पृथक्चैव स्वशास्त्रोक्तविधानतः । [आर्धिक पाठः]

बहुमायासमाकीर्णो नानादेशास्समाकुलाः ।
लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ॥ ७॥

[1]गच्छ त्वं त्यागमास्थाय युक्ता वस तपोवने ।
मा द्रक्ष्यसि कुलस्यास्य घोरं संक्षयमात्मनः ॥ ८॥

तथेति संमनुज्ञाय सा प्रविश्याब्रवीत् स्नुषाम् ॥ ९

अम्बिके तव पुत्रस्य दुर्नयात् किल भारताः ।
सानुबन्धा विनङ्क्ष्यन्ति पौत्राश्चैवेति नश्श्रुतम् ॥ १०

तत् कौसल्यामिमामार्तां पुत्रशोकाभिपीडिताम् ।
वनमादाय गच्छामो भद्रं ते यदि मन्यसे ॥ ११

वैशम्पायनः—

तथेत्युक्ता त्वम्बिकया भीष्ममामन्त्र्य सुव्रता ।
वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥ १२

---

1. घ—पुत्राश्च बहुपौत्र्यश्च राजानस्सर्वएव हि ।
पाण्डवाः कौरवाश्चैव राज्यैश्वर्यमदान्विताः ।
पृथ्वीनिमित्तमन्योन्यं घातयिष्यन्ति निर्घृणाः ।
कुरुपाण्डवयोरर्थे पृथ्व्याश्च क्षयकारणम् ।
अन्योन्यं वैरमासाद्य करिष्यन्ति महीमिमाम् ।
रुधिरौघनिमग्नैश्च बालवृद्धावशोषिताम् ।
घोरमेनमदृष्ट्वैव कालं सर्वक्षयावहम् ।
दृष्ट्वाऽऽनन्दसुखं प्रीत्या दिष्ट्या मातश्शृणुष्व ह ॥

तास्सुघोरं तपः कृत्वा दैवाद्भरतसत्तम ।
देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ७ ॥ संभवपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[अस्मिन्नध्याये १३ श्लोकाः]

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

कुमाराणां विहारवर्णनम् ॥ १ ॥ वृकोदरेण धार्तराष्ट्राणां क्रीडनसमये परिभवनम् ॥ २ ॥ धार्तराष्ट्रादिभिर्भीमस्य गङ्गापातनं सर्पदंशप्रापणं गरलसंमिश्रभोज्यदानं च ॥ ३ ॥

वैशम्पायनः—

अवाप्नवन्तो वेदोक्तान् संस्कारान् पाण्डवास्तदा ।
अवर्धन्त महाभोगान् भुञ्जानाः पितृवेश्मनि ॥ १

ते धार्तराष्ट्रैस्सहिताः क्रीडन्तः पितृवेश्मनि ।
बालक्रीडासु सर्वासु विशिष्टाः पाण्डवा भवन् ॥ २

जवे लक्ष्याभिहरणे भेद्ये पांसुविकर्षणे ।
धार्तराष्ट्रान् भीमसेनस् सर्वांस्तु परिमर्दति ॥ ३

हर्षाद्ध्येतान् क्रीडमानान् गृह्यैकाकी निलीयते ।

[1]शिरस्सु च निगृह्यैनान् योधयामास पाण्डवः ॥ ४
शतमेकोत्तरं तेषां कुमाराणां महौजसाम् ।
एक एव विमृद्नाति नातिकृच्छ्राद्वृकोदरः ॥ ५
गलेषु च निगृह्यैनान् विनिहत्य बलाद्बली ।
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोक्षिकान् ॥ ६
दश बालाञ्जले क्रीडन् भुजाभ्यां परिगृह्य सः ।
आस्ते स्म सलिले मग्नः प्रमृतांश्च विमुञ्चति ॥ ७
फलानि वृक्षमारुह्य प्रचिन्वन्ति च ते यदा ।
तदा पादप्रहारेण भीमः कम्पयते द्रुमम् ॥ ८
[2]प्रहाराभिहताच्चापि द्रुमाद् व्याघूर्णितात् ततः ।
सफलाः प्रपतन्ति स्म द्रुमात् त्रस्ताः कुमारकाः ॥ ९
न ते नियुद्धे न जवे योग्या ह्याशु कदा चन ।
कुमारा उत्तरं चक्रुस् स्पर्धमाना वृकोदरम् ॥ १०
एवं स धार्तराष्ट्राणां स्पर्धमानो वृकोदरः ।
अप्रियेऽतिष्ठदत्यर्थं बाल्यान्न द्रोहचेतसा ॥ ११
ततो बलमभिख्यातं धार्तराष्ट्रः प्रतापवान् ।

1. परस्परं क्रीडमानान् काकपक्षधरान्नृप । [अधिकः पाठः]
2. घ—प्रगृह्य वृक्षमूलं च पाणिभ्यां कम्पयद्द्रुमम् ।
अग्रशाखाग्रसंलीनान् पातयामास भूतले ॥
भग्नपादोरुपृष्ठाश्च भिन्नमस्तकपार्श्वकाः ॥

भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ॥ १२

तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यभावाच्च पापा मतिरजायत ॥ १३

अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः ।
मध्यमं पाण्डुपुत्राणां निकृत्या विनिहन्यताम् ॥ १४

अथ तस्मादवरजं ज्येष्ठं चैव युधिष्ठिरम् ।
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम् ॥ १५

एवं स निश्चयं पापं कृत्वा दुर्योधनस्तदा ।
नित्यमेवान्तरं प्रेक्षन् भीमस्यासीन्महात्मनः ॥ १६

ततो जलविहारार्थं कारयामास भारत ।
चेलकम्बलवेश्मानि विचित्राणि महान्ति च ॥ १७

प्रमाणकोट्यां तद्देशं स्थलं किञ्चिदुपेत्य च ।
क्रीडावसाने सर्वे च शुचिवस्त्रास्स्वलङ्कृताः ॥ १८

सर्वकामसमृद्धं तद् अन्नं बुभुजिरे शनैः ॥ १८॥

दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ।
विहारावसथेष्वेव वीरा वासमरोचयन् ॥ १९॥

खिन्नस्तु बलवान् भीमो व्यायामाभ्यधिकस्तदा ।
वाहयित्वा कुमारांस्तान् जलक्रीडागतान् विभुः ॥ २०॥
प्रमाणकोट्यां वासार्थं सुष्वापारुह्य तत्स्थलम् ॥ २१

शीतं वासं समासाद्य श्रान्तो मदविमोहितः ।
निश्चेष्टः पाण्डवो राजन् सुष्वाप मृतकल्पवत् ॥ २२

ततो बद्ध्वा लतापाशैर् भीमं दुर्योधनश्शनैः ।
प्रमाणकोट्यां तं सुप्तं गङ्गायां बलिनां वरम् ॥ २३
भीमसेनं तदा राजन् बद्धं प्राक्षेपयज्जले ॥ २३॥

ततः प्रबुद्धः कौन्तेयस् सर्वान् संछिद्य बन्धनान् ।
उदतिष्ठज्जलाद्भीमो भूयः प्रहरतां वरः ॥ २४॥

स विमुक्तो महाराज नाज्ञासीत्तेन तत्कृतम् ।
पुनर्निद्रावशं प्राप्य तत्रैव प्रास्वपद्बली ॥ २५॥

अथ रात्र्यां व्यतीतायाम् उत्तस्थुः कुरुपाण्डवाः ।
दुर्योधनस्तु कौन्तेयं दृष्ट्वा निर्वेदमभ्यगात् ॥ २६॥

[1]सुप्तं चापि पुनस्सर्पैस् तीक्ष्णदंष्ट्रैर्महाविषैः ।
कुपितैर्दंशयामास सर्वेष्वेवाङ्गसन्धिषु ॥ २७॥

दंष्ट्राश्च दंष्ट्रिणां तेषां मर्मस्वपि निपातिताः ।

---

1. घ—समासाद्य ततः कांश्चिद्धर्मादि शिरसा शिरः ।
शिरोभिश्शिरसा वीरः कृतवान्युद्धमद्भुतम् ॥
तथान्यदिवसे सुप्तं...सर्पैर्घोराननैः ।
कुपितैश्च महाकायैस् तीक्ष्णदंष्ट्रै महाविषैः ॥
स तेन दंशयामास सर्वेष्वेवाङ्गसन्धिषु ।
तेषां सुतीक्ष्णदंष्ट्राश्च निमग्नास्तत्र मर्मसु ॥
त्वचं च नाल्पिकां भेत्तुं शक्नुवन् पृथुतेजसः ॥ [अधिकः पाठः]

त्वचं न चास्य बिभिदुस् सारत्वात् पृथुवक्षसः ॥ २८॥

प्रबुद्धो भीमसेनस्तान् सर्वान् सर्पानपोथयत् ।
सारथिं चास्य दयितं वामहस्तेन जघ्निवान् ॥ २९॥

[1]तथाऽन्यदिवसे राजन् हन्तुकामोऽत्यमर्षणः ।
बल्लेन सहामन्त्र्य सौबलस्य मते स्थितः ॥ ३०॥

भोजने भीमसेनस्य पुनः प्राक्षेपयद्विषम् ॥ ३१

कालकूटं विषं तीक्ष्णं सम्भृतं रोमहर्षणम् ।
तथापि भुक्त्वाऽजरयद् अविकारो वृकोदरः ॥ ३२

विकारं नाभ्यजनयत् सुतीक्ष्णमपि तद्विषम् ॥ ३२॥

[2]ततोऽन्यदिवसे राजन् हन्तुकामो वृकोदरम् ।
सौबलेन सहायेन धार्तराष्ट्रोऽभ्यचिन्तयत् ॥ ३३॥

चिन्तयन्नालभन्निद्रां दिवारात्रमतन्द्रितः ॥ ३४

एवं दुर्योधनः कर्णश् शकुनिश्चापि सौबलः ।
अनेकैरप्युपायैस्तान् जिघांसन्ति स्म पाण्डवान् ॥ ३५

न जज्ञिरे तु तद्वृत्तं पाण्डवा मन्दचेतसः ।
वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया ॥ ३६

---

1. घ—ताडितस्तेन सूतोऽपि ययौ स यमसादनम् [अधिकः पाठः]
2. घ—भीमसंहननं कर्तुं भीममाहारयत्ततः । [अधिकः पाठः]

पाण्डवा ह्यपि तत्सर्वं प्रत्यजानन्नरिन्दमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ ७ ॥ संभवपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[अस्मिन्नध्याये ३७ श्लोकाः]

---

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

पुनरपि वृकोदराय विषभोज्यदानं जलपातनं च ॥ १ ॥ भीमस्य नागलोकप्राप्तिः ॥ २ ॥ तत्र तस्य वासुकिदत्तरसपानम् ॥ ३ ॥

---

वैशम्पायनः—

ततस्ते मन्त्रयामासुर् दुर्योधनपुरोगमाः ।
प्राणवान् विक्रमी चापि शौर्ये महति च स्थितः ॥ १
स्पर्धते चापि सततम् अस्मानेको वृकोदरः ॥ १॥
तं तु सुप्तं पुरोद्याने जले शूले क्षिपामहे ॥ २
ततो जलविहारार्थं कारयामास भारत ।
चेलकम्बलवेश्मानि चित्राणि च शुभानि च ॥ ३
तत्र संस्कारयामासुर् नानागाराण्यनेकशः ।
उदकक्रीडनार्थानि कारयामास भारत ॥ ४
प्रमाणकोट्यामुद्देशे स्थले कृत्वा परिच्छदम् ।

भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यं तथाऽपि च ॥ ५
उपार्जितं नरैस्तत्र तदा सूदकृतं च तत् ।
न्यवेदयन्त पुरुषा धार्तराष्ट्रस्य तत्तदा ॥ ६
ततो दुर्योधनस्त्वाह पाण्डवान् स्म सुदुर्मतिः ॥ ६॥

दुर्योधनः—

गङ्गां वै मानयामोऽद्य उद्यानवनशोभिताम् ।
सहिता भ्रातरस्सर्वे जलक्रीडामवाप्नुमः ॥ ७॥

वैशम्पायनः—

एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ॥ ८
[1]ते रथैर्नगराकारैर् देशजैश्च हयोत्तमैः ।
निर्ययुर्नगराद्वीराः कुरवः पाण्डवैस्सह ॥ ९

उद्यानवनमासाद्य सम्प्रसृज्य च वाहनम् ।
प्राविशंस्तु महावीर्यास् सिंहा इव गिरेर्गुहाः ॥ १०
उद्यानं स्माथ पश्यन्ति भ्रातरस्सर्व एव ते ।
उपस्थानगृहैश्शुभ्रैर् वलभीभिश्च शोभितम् ॥ ११
गवाक्षकैस्तथा जालैर् जलसंसारकैस्तथा ।
सूपस्थितं सुधाकारैश् शिल्पकारैश्च शिल्पिभिः ॥ १२
दीर्घिकाभिश्च पुण्याभिस् तथा कारण्डकैरपि ।

1. घ—जानन्नप्यनुमेने तद् भेदबुद्धिभिया तदा । [अधिकः पाठः]

जलं तु शुशुभे छन्नं फुल्लैर्जलरुहैस्तथा ॥ १३
उपकीर्णा वसुमती तथा पुष्पैर्यथर्तुकैः ।
उपविष्टास्तथा सर्वे पाण्डवाः कुरवस्तथा ॥ १४
उपपन्नान् बहून् कामांस् तथा भुक्त्वा तथा तथा ।
अथोद्यानवने तस्मिंस् तथा क्रीडागताश्च ते ॥ १५
परस्परस्य वक्त्रेषु ददुर्भक्ष्यांस्ततस्ततः । १५॥
[1]ततो दुर्योधनः पापस् तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ॥ १६॥
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ॥ १७
[2]सत्कृत्य भ्रातृवत्तत्र वाचा चामृतकल्पया ।
प्राक्षिपद्वै स्वयं भक्ष्यं वक्त्रे भीमस्य पापकृत् ॥ १८
प्रभक्षितं च भीमेन ह्यस्य दोषमजानता ॥ १८॥
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमिवात्मानं मेने स पुरुषाधमः ॥ १९॥
ततस्ते सहितास्सर्वे जलक्रीडामकुर्वत ॥ २०
दिवसान्ते परिश्रान्ता विहृत्य कुरुनन्दनाः ।
विहारायतनेष्वेव वीरा वासमरोचयन् ॥ २१

---

1. घ—नानाविधानि भक्ष्याणि भोज्यापूपाणि मोदकान् ।
क्ष्वेळन्तः प्रहसन्तश्च विवृतेषु कुमारकाः ॥ [अधिकःपाठः]
2. घ—बहिर्मधुरया वाचा हृदयेन क्षुरोपमः ॥ [अधिकः पाठः]

भीमस्तु बलवान् भुक्त्वा व्यायामाभ्यधिकं जले ।
वाहयित्वा कुमारांस्तान् जलक्रीडां महाबलः ॥ २२
प्रमाणकोट्यां वासार्थी पुनश्चारुह्य तत्स्थलम् ॥ २२॥
स हि तत्स्थलमासाद्य श्रान्तश्चाप्सु विशेषतः ।
श्रमेण च परीतात्मा सुष्वाप मृतकल्पवत् ॥ २३॥
ततो बद्ध्वा दृढं पाशैर् भीमं दुर्योधनस्स्वयम् ।
[1]शूलान्यप्सु निखायाशु स्थलाज्जलमपातयत् ॥ २४॥
सशेषत्वान्न संप्राप्तो जले शूलानि पाण्डवः ।
पपात यत्र तत्रास्य शूलं नासीद्यदृच्छया ॥ २५॥
स निस्संज्ञो जलस्यान्तरवाग्वै पाण्डवोऽविशत् ॥ २६
आक्रम्य नागभवने तथा नागकुमारकान् ।
ततस्समेत्य बहुभिस् तथा नागैर्महाविषैः ॥ २७
दश्यते पाण्डवस्तत्र विषदग्धो महाविषैः ॥ २७॥
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।
हतं सर्पविषेणाशु स्थावरं जङ्गमेन तु ॥ २८॥
ततः प्रबुद्धः कौन्तेयस् स संछिद्य च बन्धनम् ।
पोथयामास तान् सर्पान् कांश्चित् प्राणैर्व्ययोजयत् ॥ २९॥

---

1. घ—खातयित्वाप्सु शूलानि प्रदेशाभ्यन्तराणि च ।
लतापाशैर्दृढं बद्धः स्थलाज्जलमपातयत् ॥

ते हन्यमानाः पार्थेन सर्पा वासुकिमभ्ययुः ।
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ॥ ३०॥

सर्पाः—

अयं नरो वै नागेन्द्र ह्यप्सु बध्द्वा प्रवेशितः ।
तथा चारातिभिर्वीर विषपीतो भविष्यति ॥ ३१॥

विनिविष्टोऽन्तरप्राप्तस् स च दष्टो ह्यनकेशः ।
ससंज्ञश्च स संवृत्तः छित्त्वा बन्धनमाशु सः ॥ ३२॥

पोथयन्नो महाबाहुस् तं वै त्वं ज्ञातुमर्हसि ॥ ३३

वैशंपायनः—

ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ।
पश्यति स्म महानागो भीमं भीमपराक्रमम् ॥ ३४

[1]आयर्केण तु दृष्टस्स पृथायास्त्वार्यकेण तु ।
ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डवः ॥ ३५

सुप्रीतश्चाभवत्तस्य वासुकिस्सुमहायशाः ।
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतामिति ॥ ३६

प्रियं धनौघं रत्नानि यावदस्य प्रदीयताम् ॥ ३६॥

---

1 घ—अथ वासुकिना भीमो दृष्टः पृष्टस्सुहृत्तमः ।
परिष्वक्तश्च सस्नेहं भीमःप्रीतोऽभवत्तदा ॥
वासुकिश्चापि सुप्रीतो भीममाहामृतं वचः ।
आर्थं कं नाम नागेन्द्रं किमस्य क्रियतामिति ॥ [पाठान्तरम्]

एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ॥ ३७

नागः—

यदि नागेन्द्र प्रीतोऽसि किमस्य धनसञ्चयैः ।
रसं पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः ॥ ३८

बलं नागसहस्रस्य कुण्डे चास्मिन् प्रतिष्ठितम् ।
यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम् ॥ ३९

वैशम्पायनः—

एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ॥ ३९॥

ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टश्च रसं पिबति पाण्डवः ॥ ४०॥

एकोच्छ्वासात्तदा कुण्डं पिबति स्म महाबलः ।
एवमष्टौ तु कुण्डानि सोऽपिबत् पाण्डुनन्दनः ॥ ४१॥

दिव्ये ततस्तु शयने नागदत्ते महाभुजः ।
शेते स्म च तदा भीमो दिवसान्यष्ट चैव तु ॥ ४२॥

दुर्योधनोऽपि पापात्मा भीममाशीविषह्रदे ।
प्रक्षिप्य कृतकृत्यं स्वम् आत्मानं मन्यते तदा ॥ ४३॥

प्रभातायां रजन्यां च प्रविवेश पुरं ततः ।
[1]ब्रुवाणो भीमसेनस्तु यातो ह्यग्रत एव नः ॥ ४४॥

---

1. घ—वदन्तो भीमसेनोऽपि पूर्वमेव गृहागतः ।
इति स्म पृच्छतां नृणां कुन्त्याश्च विदुरस्य तु ॥ [अधिकः पाठः]

युधिष्ठिरस्तु धर्मात्मा चिन्तयन् पापमात्मनि ।
[1]स्वतोऽनुमानेन परं तदान्तं स्मानुपश्यति ॥ ४५॥

उपगम्य ततः पार्था मातरं मातृवत्सलाः ।
अभिवाद्याब्रुवंस्ते वै अम्ब भीम इहागतः ॥ ४६॥

नेति स्माह तदा कुन्ती ततस्ते व्यथिता भवन् ॥ ४७

द्रुतं गत्वा पुरोद्यानं विचिन्वन्ति स्म पाण्डवाः ।
भीम भीमेति ते वाचं नित्यमुच्चैरुदीरयन् ॥ ४८

विचिन्वन्तोऽथ ते सर्वे न स्म पश्यन्ति भ्रातरम् ॥ ४८॥

आगतास्स्वगृहं भूय इदमूचुः पृथां तदा ॥ ४९

न दृश्यते महाबाहुर् अम्ब भीमो वरोचितः ।
विचितानि च सर्वाणि उद्यानानि नदीस्तथा ॥ ५०

ततो विदुरमानाय्य कुन्ती सा स्वं निवेशनम् ।
उवाच क्षत्तो बलवान् भीमसेनो न दृश्यते ॥ ५१

उद्यानान्निर्गतास्सर्वे भ्रातरो भ्रातृभिस्सह ।
तत्र ह्येको महाबाहुर् भीमो नाभ्येति मामिह ॥ ५२

न च प्रणयते चक्षुस् साधु दुर्योधनस्य ह ।
ततः प्रसुप्तं मन्येऽहं पापेन निहतं सुतम् ॥ ५३

---

1. क-ख-ग—स्वेनानुमानेन परं नायान्तं स्म स पश्यति ।
घ—स्वेनानुमानेन परं तेषामेवासमञ्जसम् ।

विदुरः—

मा मैवं वद कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि पापात्मा शेषेषु प्रहरेत ह ॥ ५४

दीर्घायुषस्तु ते पुत्रा तथाह्यृषिरभाषत ।
आगमिष्यति ते पुत्रः प्रीतिं ते वर्धयिष्यति ॥ ५५

वैशंपायनः—

एवमुक्ता तदा कुन्ती निःश्वसन्ती मुहुर्मुहुः ।
शय्यापरा महाभागा पुत्रैः परिवृता तदा ॥ ५६

[1]ततोऽष्टमेऽथ दिवसे प्रत्यबुध्यत पाण्डवः ।
भीमस्तदा रसे जीर्णे ह्यप्रमेयबलो बली ॥ ५७

ओषधीभिर्विषघ्नीभिस् सुरभीभिर्विभूषितः ।
भुक्त्वा तु परमान्नं च नागैर्दत्तं महाभुजः ॥ ५८

उत्क्षिप्य च तदा नागैर् जलाज्जलरुहेक्षणः ।
तस्मिन्नेव वनोद्देशे स्थापितः पाण्डुनन्दनः ॥ ५९

अन्तर्दधुश्च ते नागाः पाण्डवस्यैव पश्यतः ॥ ५९॥

तत उत्थाय भीमस्तु आजगाम स्वयं गृहे ॥ ६०

अभिवाद्य परिष्वक्तस् समाघ्रातश्च मूर्धनि ।
प्रणम्य धर्मपुत्राय सस्वजे फल्गुनं तदा ॥ ६१

1. विचिन्वते वने भीमं पाण्डवाः प्रत्यहं दिवा ।
दुःखाकरं कोपयन्तः शेरते दुःखिता निशि ॥ [अधिकः पाठः]

अभिवादितश्च तैर्वीरैस् सस्वजे च यमावपि ।
तच्च सर्वं यथावृत्तम् आख्याति स्म वृकोदरः ॥ ६२

यदा त्ववगमंस्ते वै पाण्डवास्तस्य कर्म तत् ।
न त्वेव बहुलं चक्रुः प्रायतन्तास्य रक्षणे ॥ ६३

धर्मात्मा विदुरस्तेषां प्रददौ मतिमान् मतिम् ॥ ६३॥

दुर्योधनोऽपि तं दृष्ट्वा पाण्डवं पुनरागतम् ।
निश्वसंश्चिन्तयंश्चैवम् अहन्यहनि तप्यते ॥ ६४॥

[1]एवं दुर्योधनः पापश् शकुनिश्चापि सौबलः ।
अनेकैरप्युपायैस्तान् जिघांसन्ति स्म पाण्डवान् ॥ ६५॥

पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिन्दम ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ ६६॥

अधिजग्मुश्च कुरवो धनुर्वेदं कृपात्तु ते ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

॥ ७ ॥ संभवपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

[अस्मिन्नध्याये ६७ श्लोकाः ।]

---

1. ख—सौबलेन सहायेन धार्तराष्ट्रोऽभ्यचिन्तयत् ।
चिन्तयन्नालभन्निद्रां दिवारात्रमतन्द्रितः ॥ [अधिकः पाठः]

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

कृपाचार्योत्पत्तिः ॥ १ ॥

जनमेजयः—

कृपस्यापि मम ब्रह्मन् सम्भवं वक्तुमर्हसि ।
शरस्तम्बात् कथं जातः कथं चास्त्राण्यवाप्तवान् ॥ १

वैशंपायनः—

महर्षेर्गौतमस्यासीच् छरद्वान्नाम गौतमः ।
पुत्रः किल महाराज जातस्सह शरैर्विभो ॥ २

न तस्य वेदाध्ययने तथा बुद्धिरजायत ।
यथाऽस्य बुद्धिरभवद् धनुर्वेदे परन्तप ॥ ३

अधिजग्मुर्यथा वेदांस् तपसा ब्रह्मवादिनः ।
तथा स तपसोपेतस् सर्वाण्यस्त्राण्यवाप ह ॥ ४

धनुर्वेदं पठित्वा च तपसा विपुलेन च ।
भृशं सन्तापयामास देवराजं स गौतमः ॥ ५

ततो जालवतीं नाम देवकन्यां सुरेश्वरः ।
प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ॥ ६

साऽभिगम्याऽऽश्रमं तस्य रमणीयं शरद्वतः ।
धनुर्बाणधरं दृष्ट्वा लोभयामास गौतमम् ॥ ७

तामेकवसनां दृष्ट्वा गौतमो ऽप्सरसं वने ।
लोकेऽप्रतिमसंस्थानाम् उत्फुल्लनयनोऽभवत् ॥ ८
धनुश्च हि शरास्तस्य कराभ्यां प्रापतन् भुवि ।
वेपथुश्चास्य सहसा शरीरे समजायत ॥ ९
स तु ज्ञानगरीयस्त्वात् तपसश्च समन्वयात् ।
अवतस्थे महाप्राज्ञो धैर्येण परमेण ह ॥ १०
यस्तस्य सहसा राजन् विकारस्समजायत ।
तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत ॥ ११
तं विहायाश्रमं चापि तां चैवाप्सरसं मुनिः ।
जगाम रेतस्तत्तस्य शरस्तम्बे पपात ह ॥ १२
शरस्तम्बे च पतितं द्विधा तदभवन्नृप ॥ १२॥
तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः ।
महर्षेर्गौतमस्यास्य आश्रमस्य समीपतः ॥ १३॥
मृगयां चरतो राज्ञश् शन्तनोस्तु यदृच्छया ।
कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत ॥ १४॥
धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च ।
व्यवस्य ब्राह्मणापत्यं धनुर्वेदान्तगस्य च ॥ १५॥
स राज्ञो दर्शयामास मिथुनं सशरं तदा ॥ १६
स तदादाय मिथुनं राजा च कृपयाऽन्वितः ।
आजगाम गृहानेव मम पुत्राविति ब्रुवन् ॥ १७

ततस्संवर्धयामास संस्कारैश्चाप्ययोजयत् ।
कृपया परया बालाविमौ संवर्धिताविति ॥ १८

तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ।
तस्मात् कृप इति ख्यातः कृपी कन्या च साऽभवत् ॥ १९

पिताऽपि गौतमस्तत्र तपसा [1]समविन्दत ।
आगम्य चास्मै गोत्रादि सर्वमाख्यातवांस्तदा ॥ २०

कृपोऽपि च तदा राजन् धनुर्वेदपरोऽभवत् ।
चतुर्विधं धनुर्वेदम् अस्त्राणि विविधानि च ॥ २१

निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा ॥ २१॥
सोऽचिरेणैव कालेन परमाचार्यतां गतः ॥ २२

कृपमाहूय गाङ्गेयस् तव शिष्या इति ब्रुवन् ।
पौत्रान् परिसमादाय कृपमाराधयत्तदा ॥ २३

ततोऽधिजग्मुस्सर्वे ते धनुर्वेदं महारथाः ।
धृतराष्ट्रात्मजाश्चैव पाण्डवाश्च महाबलाः ॥ २४

वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः ।
कृपमाचार्यमासाद्य परमास्त्रज्ञतां गताः ॥ २५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
॥ ७ ॥ संभवपर्वणि षट्षष्टितमोऽध्यायः[2] ॥ ६६ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

1. क-ख-ग—तावविन्दत । 2. घ—कोशे नाध्यायपरिसमाप्तिरिह।

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

द्रोणस्योत्पत्तिः ॥ १ ॥ द्रोणाचार्यस्य परशुरामादस्त्रप्राप्तिः ॥ २ ॥

वैशंपायनः —

विशेषार्थी ततो भीष्मः पौत्राणां हितकाम्यया ।

इष्वस्त्रज्ञान् पर्यपृच्छद् आचार्यान् वीर्यसंमतान् ॥ १

[1]नानृषिर्नामहाभागस् तथा नावेदपारगः ।

नावेदसत्त्वो विनयेत् कुरूनस्त्रे महाबलान् ॥ २

[2]इति सञ्चिन्त्य गाङ्गेयस् सदा भरतसत्तमः ॥ २॥

1. अ-कोशे । घ-कोशे च-नाल्पधीर्नामहाभागस्तथा नाशास्त्रकोविदः ।
[अधिकः पाठः]

2. अ-क-ख-ग-घ—कोशेषु इतआरभ्य श्लोकचतुष्टयं नास्ति—तत्स्थाने अधस्तनश्लोकाः दृश्यन्ते ।

महर्षिस्तु भरद्वाजो हविर्धाने चरन् पुरा ।
ददर्शाप्सरसं साक्षात् घृताचीमाप्लुतामृषिः ॥
तस्या वायुस्समुद्धूतो वसनं व्यपकर्षत ।
रागाद्रेतः प्रचस्कन्द तदृषिर्द्रोण आदधे ॥
तस्मिन् समभवद्द्रोणः कलशे तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥
अग्निवेश्ये महाभागो भारद्वाजः प्रतापवान् ।
प्रत्यवेदयदाग्नेयं अस्त्रं धर्मभृतां वरः ॥
अग्निष्वजातस्स मुनिर् भ्राता भ्रातरमन्तिके ।
भारद्वाजे स चाग्नेयं महास्त्रं प्रत्यपादयत् ॥
स वै युक्तो गुरुरिह यदीच्छेत्कृपणस्सुखम् ।
भीष्मोऽप्यलपदेवं स भरद्वाजपरीप्सया ॥

द्रोणाय वेदविदुषे भारद्वाजाय धीमते ।
पाण्डवान् कौरवांश्चैव ददौ शिष्यान् नरर्षभ ॥ ३॥

शास्त्रतः पूजितश्चैव सम्यक् तेन महात्मना ।
स भीष्मेण महाभागस् तुष्टोऽस्त्रविदुषां वरः ॥ ४॥

प्रतिजग्राह तान् सर्वान् शिष्यत्वेन महायशाः ।
शिक्षयामास च द्रोणो धनुर्वेदमशेषतः ॥ ५॥

तेऽचिरेणैव कालेन सर्वशस्त्रविशारदाः ।
बभूवुः कौरवा राजन्! पाण्डवाश्चामितौजसः ॥ ६॥

जनमेजयः—

[1]कथं समभवद्द्रोणः कथं चास्त्राण्यवाप्तवान् ।
कथं चागात् कुरून् ब्रह्मन्! कस्य पुत्रस्स वीर्यवान् ॥ ७॥

कथं चास्य सुतो जातस् सोऽश्वत्थामाऽस्त्रवित्तमः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण प्रकीर्तय ॥ ८॥

वैशम्पायनः—

गङ्गाद्वारं प्रति महान् बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञस् सततं संशितव्रतः ॥ ९॥
सोऽभिषेक्तुं ततो गङ्गां पूर्वमेवागमन्नदीम् ॥ १०

---

1. अ-क-ख-ग-घ—कोशेषु इत आरभ्य श्लोकद्वयस्थाने एतदुपलभ्यते॥
कथं द्रोणस्समुद्भूतः कथमस्त्राण्यवाप्तवान् ।
एतदिच्छाम्यहं ब्रह्मन्! निखिलेनानुवर्णितुम् ॥

महर्षिस्तु भरद्वाजो हविर्धाने चरन् पुरा ।
ददर्शाप्सरसं साक्षात् घृताचीमाप्लुतामृषिः ॥ ११
रूपयौवनसंपन्नां मदहृप्तां मदालसाम् ॥ ११॥
तस्या वायुस्समुद्भूतो वसनं व्यपकर्षत ।
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा ॥ १२॥
तत्र संसक्तमनसो भरद्वाजस्य धीमतः ।
हृष्टस्य रेतः प्रस्कन्द तदृषिर्द्रोण आदधे ॥ १३॥
ततस्समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ १४॥
भारद्वाजसखा चासीत् पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत् सुतः ॥ १५॥
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ १६॥
ततो [1]व्यतीते पृषते स राजा द्रुपदोऽभवत् ।
पाञ्चालेषु महाबाहुर् उत्तरेषु नरेश्वरः ॥ १७॥
भरद्वाजोऽपि भगवान् आरुरोह दिवं तदा ॥ १८
ततः पितृनियुक्तात्मा पुत्रलोभाद्यशस्विनीम् ।
शारद्वतीं तदा द्रोणः कृपीं भार्यामविन्दत ॥ १९

1. क-ख-ग—प्यतीते काले च ।

अग्निहोत्रे च धर्मे च दमे च सततं रताम् ॥ १९॥
अलभद् गौतमी पुत्रम् अश्वत्थामानमच्युतम् ॥ २०
स जातमात्रो व्यनदद् यथैवोच्चैःश्रवा हयः ।
तच्छ्रुत्वाऽन्तर्हितं भूतम् अन्तरिक्षस्थमब्रवीत् ॥ २१
[1]अश्वस्येवास्य यद् स्थामानं नदतः प्रदिशो गतम् ।
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ॥ २२
सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत् ।
तत्रैव च वसन् धीमान् धनुर्वेदपरोऽभवत् ॥ २३
स शुश्राव महात्मानं जामदग्न्यं परन्तपम् ।
ब्राह्मणेभ्यस्तदा राजन् दित्सन्तं वसु सर्वशः ॥ २४
स रामस्य धनुर्वेदे दिव्येषु विविधेषु च ।
[2]दिव्यास्त्रेषु मतिं चक्रे नीतिशास्त्रेषु कौशलम् ॥ २५
ततस्समानैर्व्रतिभिस् तपोयुक्तैर्महातपाः ।
ततः प्रायान्महाबाहुर् महेन्द्रं वसुधाधरम् ॥ २६
ततो महेन्द्रमासाद्य भारद्वाजो महातपाः ।
क्षत्रघ्नं तममित्रघ्नम् अपश्यद्भृगुनन्दनम् ॥ २७
स रामायात्मनो नाम जन्म चाङ्गिरसे कुले ।

---

1 क-ख-ग—अश्वत्थामेति नाम्ना वै प्रख्यातोऽत्र भविष्यति ।
2. घ—शस्त्रास्त्रेषु च निष्णातं श्रुत्वा तत्र समागतः ॥ [अधिकः पाठः]

निवेद्याङ्गिरसो भूमौ पादावस्याभ्यवादयत् ॥ २८

तमब्रवीन्महातेजा क्षत्रहा विप्रसत्तमः ॥ २८॥

स्वागतं कुशलं तेऽस्तु किमिच्छसि. महाद्युते ॥ २९

वैशंपायनः—

एवमुक्तस्स रामेण भारद्वाजोऽब्रवीद्द्विजः ।
[1]आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभ ॥ ३०

रामः—

हिरण्यं पशवो रौप्यं यद्वाऽन्यद्वसु किञ्चन ।
ब्राह्मणेभ्यो मया दत्तं सर्वमेव तपोधन ॥ ३१

तथैवेयं धरा देवी सागरान्ता सपर्वता ।
काश्यपाय मया दत्ता कृत्स्ना नगरमालिनी ॥ ३२

शरीरमात्रमेवाद्य ममेदमवशेषितम् ।
अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च ॥ ३३

अस्त्राणि वा शरीरं वा ब्रह्मञ्छस्त्राणि वा पुनः ।
वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदस्व माम् ॥ ३४

द्रोणः—

अस्त्राणि मे समन्त्राणि ससंहाराणि भार्गव ।
सप्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ ३५

---

1. क-ख-ग—सम्प्राप्तं वसुकामं मां वेत्तुमर्हसि सुव्रत।

एतद्वसु वसूनां हि सर्वेषां विप्रसत्तम ॥ ३५॥

वैशम्पायनः—

तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः ।
सरहस्यव्रतं चैव धनुर्वेदमशेषतः ॥ ३६॥

प्रतिगृह्य तु तत्सर्वं कृतार्थो द्विजसत्तमः ।
प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥ ३७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ ७ ॥ संभवपर्वणि [1]सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[अस्मिन्नध्याये ३७॥ श्लोकाः]

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

द्रुपदनिकटं प्राप्य स्वसखित्वं वदतो द्रोणस्य द्रुपदकृतं भर्त्सनम् ॥ १ ॥ ततो द्रोणस्य हास्तिनपुरप्रवेशनम् ॥ २ ॥

---

वैशम्पायनः—

ततो द्रुपदमागम्य भरद्वाजः प्रतापवान् ।
अब्रवीत् [2]पुरुषव्याघ्रं सखायं विद्धि मामिति ॥ १

इत्येवमुक्तस्सख्या स प्रीतिपूर्वं जनेश्वरः ।

---

1. घ—कोशे—षट्षष्टितमोऽध्यायः । 2. क-ख-ग—पार्षतं राजन्

भारद्वाजेन पाञ्चालो रोषात् संरक्तलोचनः ॥ २
नामृष्यत वचस्सख्युः प्रीतिपूर्वमुदाहृतम् ॥ २॥
[1]स चैश्वर्यमदोन्मत्त इदं राजा वचोऽब्रवीत् ॥ ३

द्रुपदः—

अकृतेयं तव प्रज्ञा ब्रह्मन् नातिसमञ्जसी ।
यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज ॥ ४
न हि राज्ञामुदीर्णानाम् एवंभूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः ॥ ५
सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यता ॥ ५॥
सौहृदं मे त्वया ह्यासीत् पूर्वं सामर्थ्यवर्धनम् ॥ ६
न सख्यमजरं लोके दृश्यते जातु कर्हि चित् ॥ ६॥
कामश्चैनं नाशयति क्रोधश्चैनम् प्रमर्दति ॥ ७
न वै जीर्णमुपातिष्ठ सख्यं नवमुपाकुरु ॥ ७॥
आदत्स्वैनं द्विजश्रेष्ठ सौहृदं ह्यर्थबन्धनम् ॥ ८
न दरिद्रो वसुमतो नाविद्वान् विदुषस्सखा ।
[2]न शूरस्य सखा क्लीबस् सखा पूर्वः किमिष्यते ॥ ९
ययोरेव समं वित्तं ययोः प्रज्ञा ययोश्श्रुतम ।

---

1. क-ख-ग—स एवमैश्वर्यमदादिदं वचनमब्रवीत् ।
2. ख—नाराजा पार्थिवस्यापि सख्यं पूर्वं किमिष्यते ॥ [अधिकः पाठः]

तयोस्सम्बन्धकं तुल्यं न तु पुष्टविपुष्टयोः ॥ १०

नाश्रोत्रियश्श्रोत्रियस्य नारथी रथिनस्सखा ।
नाराज्ञ[1]स्सङ्गतं राज्ञस् सखिपूर्वं किमिष्यते ॥ ११

[2]त्वद्विधैर्मद्विधानां हि प्रहीणार्थैर्न जातु चित् ।
सख्यं भवति मन्दात्मन् सखिपूर्वं किमिष्यते ॥ १२

[3]वैशम्पायनः—

द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान् ।
मुहूर्तं चिन्तयामास मन्युनाऽभिपरिप्लुतः ॥ १३

स विनिश्चित्य मनसा पाञ्चालं प्रति बुद्धिमान् ।
शिष्यैः परिवृतश्श्रीमान् पुत्रेणानुगतस्तदा ॥ १४

जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १४॥

[4]स्यालस्यैव गृहं द्रोणस् सदारः पर्युपास्थितः ॥ १५

---

1. घ—सङ्गमो राज्ञा नन्वपूर्वं करिष्यते ।
2. क-ख-ग—एवमेव कृतप्रज्ञ न राज्ञा विद्यते क्वचित् ।
नैव तीर्णमुपातिष्ठ सख्यं नवमुपाकुरु ॥
सखा राज्ञः कृतं विप्र त्वाद्विधश्च भविष्यति ॥
[अधिकः पाठः]
3. घ—जगाम कुरुमुख्यानां सखा पूर्वं किमिष्यते । [अधिकः पाठः]
4. घ-कोशे—प्रीतिकारं करोम्यस्य द्रुपदस्य निराकृतेः ।
ऐश्वर्यमदमत्तस्य नृपं कंचिदुपेत्य च ॥
पौर्वकं सौहृदं त्यक्त्वा राज्यैश्वर्यविमोहितः ।
अपहस्तेन मां मत्तः द्रावयामास सोऽन्तिकात् ॥

अश्वत्थाम्ना च पुत्रेण महाबलवता सह ।
अवसत्तत्र राजेन्द्र गौतमस्य निवेशने ॥ १६
स कृपस्यान्तरे पार्थान् भारद्वाजः प्रतापवान् ।
अस्त्राणि शिक्षयामास बुबोध च स तं कृपः ॥ १७
आवासे तत्र [1]मूढात्मा कश्चित्कालमुवास ह ॥ १७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ७ ॥ संभवपर्वणि अष्टषष्टितमोऽध्यायः[2] ॥ ६८ ॥
[अस्मिन्नध्याये १७॥ श्लोकाः]

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

द्रोणेन भीष्मादिभ्यः स्वपूर्ववृत्तान्तकथनम् ॥ १ ॥

वैशंपायनः—
द्रोणस्समुदितान् दृष्ट्वा कुरून् वृत्तिपरीप्सया ।
आजगाम महातेजा विप्रो नागपुरं प्रति ॥ १

---

पूर्वतोऽनुवृत्तम्—
मनसा प्रपतन्नेव यज्ञसेनावमानितः ॥
क-ख-ग—कोशेषु-द्रोणस्समुदितान् दृष्ट्वा पुरून्वृत्तिपरीप्सया ।
आजगाम महातेजा विप्रो नागपुरं प्रति ॥
स तथोक्तस्तथा तेन सदारः प्राद्रवत्कुरून् ।
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता न चिरादिव ॥

1. क-ग—गू [अधिकः पाठः]
2. ख-कोशे नाम्नाध्यायसमाप्तिः ; अन्त्यश्लोकत्रयमपि न दृश्यते ।

स तथोक्तस्तथा तेन सदारः प्राद्रवत् कुरून् ।
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता न चिरादिव ॥ २

[1]ततः कुमारा निष्क्रम्य सहिता नागसाह्वयात् ।
क्रीडया विनयाद्वीरास् तत्र पर्यचरन्मुदा ॥ ३

तेषां सङ्क्रीडमानानाम् उदपानेऽङ्गुलीयकम् ।
[2]पपात धर्मराजस्य वीटा तत्रैव चापतत् ॥ ४

तत्त्वम्बुना प्रतिच्छन्नं तारारूपमिवाम्बरे ।
[3]दृष्ट्वा ते वै कुमाराश्च तं यत्नात्पर्यवारयन् ॥ ५

ते परस्परमैक्षन्त कुमारास्सहितास्तदा ॥ ५॥

तस्य योगमविन्दन्तो भृशमुत्काण्ठिता भवन् ॥ ६

न किञ्चित्प्रत्यपद्यन्त कर्म वीटोपलब्धये ॥ ६॥

[4]तेऽपश्यन् ब्राह्मणं श्यामम् आसन्नपलितं कृशम् ।

कृत्यवन्तस्समीपस्थम् अग्निहोत्रपुरस्कृतम् ॥ ७॥

---

1. क ग—कुमारास्त्वथ निष्क्रम्येति श्लोकमारभ्याध्यायारम्भो दृश्यते ।
घ—अथैकदा कुमारास्ते पुरान्निर्गम्य कौरवाः ।
विनोदक्रीडया वीरास्तत्र पर्यचरन्मुदा ॥ [पाठान्तरम्]
2. घ—अगाधे निर्मले कूपे पतितं त्वङ्गुलीयकम् । [अधिकः पाठः]
3. घ—विराजमानं दृष्ट्वैव चूडारत्नमनुत्तमम् ।
अङ्गुलीयं च सर्वेऽपि विस्मिताः पर्यवारयन् ॥ [अधिकः पाठः]
4. घ—परस्परं कुमारास्ते परितः पर्यवर्तयन् । [अधिकः पाठः]

[1]स तान् कृत्यवतो दृष्ट्वा कुमारांस्तु विचेतसः ।
[2]ब्राह्मणः प्रहसन् मन्दं कौशलेनाभ्यभाषत ॥ ८॥

अब्रवीद्धिग्बलं क्षात्रं धिक्चैषां वः कृतास्त्रताम् ।
भरतस्यान्वये जाता ये वीटां नाधिगच्छत ॥ ९॥

वीटां च मुद्रिकां चैव अहमेतदपि द्वयम् ।
उद्धरिष्ये त्विषीकाभिर् भोजनं मे प्रदीयताम् ॥ १०॥

[3]ततोऽब्रवीद्भरद्वाजं कुन्तीपुत्रो युधिष्ठिरः ।
गौतमीं च महाभागां भिक्षामश्नीत शाश्वतीम् ॥ ११॥

ततोऽब्रवीद्भरद्वाजः प्रहस्य भरतानिदम् ॥ १२

---

1. घ—पुत्रेण भार्यया साकं ब्रह्मतेजोनिधिः परम् । [अधिकः पाठः]
2. घ—आत्मानमङ्गुलीयं च चूडारत्नं जलाशये ।
पश्यतः परितः कूपं ब्राह्मणः प्रहसन्मृदु ॥
स तानुपेत्य कूपेऽस्मिन् पतितं किं नु पश्यथ ।
दृष्ट्वेति तान् स्वयं वीक्ष्य कूपान्तः पतितं च तत् ॥
कुमारांश्च समुद्वीक्ष्य कौशलेनाभ्यभाषत ॥ [अधिकः पाठः]
3. घ—श्रुत्वैतस्य वचो भूप धृतराष्ट्रसुता नृप ।
तूष्णीमासन् धर्मसूनुरुवाच प्राकृताञ्जलिः ॥
अहं दास्यामि वोऽभीष्टं भवन्तो मे वदन्तु किम् ।
उद्धरैतत्प्रियं रत्नं चूडामुद्रिकमेव च ॥
इत्युक्तो धर्मपुत्रेण भारद्वाजोऽब्रवीत्पुनः ।
अद्य भोजनमस्माकं त्वयाणां कुन्तिसंभव ॥
दिवारात्रं मृष्टमन्नम् इत्युक्तं पुनरब्रवीत् ॥

द्रोणः—

एषा मुष्टिरिषीकाणां मयाऽस्त्रेणाभिमन्त्रिता ॥ १२॥

अस्या वीर्यं समीक्षध्वं यदन्येषु न विद्यते ॥ १३

वेत्स्यामीषिकया वीटां तामिषीकामिषिकया ॥ १३॥

तामपीषीकया चैव अन्यामप्यनया पुनः ।
तथाऽन्योन्यसमायोगः वीटाया ग्रहणे मतः ॥ १४॥

वैशम्पायनः—

ततो यथोक्तं तत्सर्वं कृतवांस्तत्र ब्राह्मणः ॥ १५

तदपश्यन् कुमारास्ते विस्मयोत्फुल्ललोचनाः ॥ १५॥

अवाप्य चोद्धृतां वीटां वीटावेधिनमब्रुवन् ॥ १६

मुद्रिकामपि विप्रेन्द्र क्षिप्रमेतां समुद्धर ॥ १६॥

ततस्सशरमादाय धनुश्चापि महाबलः ।
शरेण बध्वा मुद्रां ताम् ऊर्ध्वमावाहयच्छरैः ॥ १७॥

सशरस्तदुपादाय कूपादङ्गुलिवेष्टकम् ।
प्रददौ तं कुमाराणां विस्मितानामविस्मितः ॥ १८॥

मुद्रिकां तूद्धृतां दृष्ट्वा प्राब्रुवंस्ते कुमारकाः ॥ १९

कुमारकाः—

अभिवादयामहे ब्रह्मन् नैतदन्येषु विद्यते ॥ १९॥

कोऽसि कं त्वां विजानीमो ब्रूहि किं करवाम ते ॥ २०

वैशम्पायनः—

एवमुक्तस्तथा विप्रः प्रत्युवाच कुमारकान् ।
आख्यापयध्वं भीष्माय रूपेण च गुणैरपि ॥ २१
स मां बुद्धिमतां श्रेष्ठश् श्रुत्वा ज्ञास्यति कौरवः ॥ २१॥
तथेत्युक्त्वा तु ते गत्वा भीष्ममूचुः पितामहम् ।
ब्राह्मणस्य वचस्सर्वं तच्च कर्म विशेषतः ॥ २२॥
श्रुत्वा भीष्मः कुमाराणां द्रोण इत्येव जज्ञिवान् ॥ २३
युक्तरूपस्स हि गुरुर् इत्येवमनुचिन्त्य च ।
तत आनाय्य द्रोणं तु भीष्मश्शान्तनवस्तदा ॥ २४
अर्हणीयेन कामैश्च यथान्यायमपूजयत् ॥ २४॥
ततस्तं परिपप्रच्छ भीष्मश्शस्त्रभृतां वरः ।
हेतुमागमने सर्वं तं द्रोणः प्रत्यभाषत ॥ २५॥

द्रोणः—

महर्षेरग्निवेश्यस्य सकाशमहमच्युत ।
अस्त्रार्थमगमं पूर्वं धनुर्वेदजिघृक्षया ॥ २६॥
ब्रह्मचारी विनीतात्मा जटिलो बहुलास्समाः ।
अवसं तत्र सुचिरम् अग्निवेश्यस्य सन्निधौ ॥ २७॥
पाञ्चालराजपुत्रश्च यज्ञसेनो महाबलः ।
मया सहाकरोद्विद्यां गुरौ तस्मिन् समाहितः ॥ २८॥

स मे तत्र सखा चासीत् प्रियवागुपकारकः ।
मया स्म रमते नित्यं सङ्गम्य समये तदा ॥ २९॥
[1]स मां संप्रस्थितः पूर्वं प्रियकारी प्रियंवदः ।
अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् ॥ ३०॥
अहं प्रियतमः पुत्रः पितुरेको महात्मनः ।
अभिषेक्ष्यति मां राज्ये स पाञ्चालो यदा तदा ॥ ३१॥
भविष्यति च ते भोज्यं सख्युस्सखिधनं यथा ॥ ३२
तद्भोज्यं भवता राज्यं सखे सत्येन ते शपे ॥ ३२॥
मम भोगाश्च वित्तं च त्वदधीनास्सुखानि च ॥ ३३
मम राज्यं महाभाग त्वया भोक्तव्यमिच्छता ॥ ३३॥
एवमुक्त्वा प्रचक्राम कृतास्त्रः पूजितो मया ॥ ३४
[2]उक्तवाक्यमहं ज्ञात्वा प्रहृष्टेनान्तरात्मना ।
सोऽहं पितृनियुक्तत्वात् पुत्रलोभाद्यशस्विनीम् ॥ ३५
शारद्वतीं महाप्राज्ञ उपयेमे समाहितः॥ ३५॥
अग्निहोत्रे च धर्मे च दमे च सततं रताम् ॥ ३६
लेभे च गौतमी पुत्रम् अश्वत्थामानमात्मजम् ॥ ३६॥

---

1. क-ख-ग—बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च ।
मया सहाकरोद्विद्वान् गुरौ तस्मिन् समाहितः ।
[अधिकः पाठः]

2. क-ख-ग—तत्तु वाक्यमहं हित्वा स्वकर्मोपाचरं तदा ।

भीष्म विक्रमकर्माणम् आदित्यमिव तेजसा ।
आत्मजेनाभवं प्रीतो भरद्वाजो यथा मया ॥ ३७॥

गोक्षीरं पिबतो दृष्ट्वा धनिनां स्म कुमारकान् ।
अश्वत्थामाऽरुदत्तात दिशो मे दश मोहयन् ॥ ३८॥

[1]न सार्धकोऽवसीदेत वर्तमानस्स्वकर्मणि ॥ ३९
अगच्छमभिजानंस्तान् अहं देशान् बहूनपि ॥ ३९॥

अविलोपेन धर्मस्य सततं धर्मसंस्थितम् ।
अयाचित्वा परिक्रामन् नाध्यगच्छं धनं क्वचित् ॥ ४०॥

अथ पिष्टोदकेनैव लोभयं वै कुमारकम् ॥ ४१
[2]पीत्वा पिष्टोदकं तत्र मातृदत्तं प्रियेण च ।

---

1. च—दृष्ट्वा तदाऽहं कौरव्य व्यथितोऽभवमच्युत ।
याचयित्वा धनं देशे दातृभ्यः पुत्रकारणात् ॥
आगच्छामि भृशं दुःखी निर्गतोऽहं गृहात्ततः ।
ज्ञानवानपि यो लोके वेदशास्त्रार्थतत्त्ववित् ॥
को नावसीदेत् पुरुषो वर्तमानस्स्वकर्मणि ।
सीदमानकुटुम्बस्सन् दृष्ट्वा दारिद्र्यमात्मनः ॥
आदाय गां धनं चापि याचित्वा दातृहस्ततः ।
गतिं गत्वा बहून् देशान् पर्यटन् धनकाङ्क्षया ॥ [अधिकः पाठः]

2. अ-कोशे—अस्य सार्धश्लोकस्य स्थाने इदमर्धं दृश्यते—
नृत्यति प्रहसन् स स्म पीतक्षीरोऽहमित्यपि ।

अनभिज्ञः क्षीररसो नृत्यति प्रहसन् मुहुः ॥ ४२
सवयोभिः कुमारैश्च पीतक्षीरोऽहमित्यसौ ॥ ४२॥
तं दृष्ट्वा कश्मलं घोरं तत्र मामन्वपद्यत ॥ ४३
[1]द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति ॥ ४३॥
क्षीरारसज्ञः क्षीरमिति पीत्वा पिष्टं प्रनृत्यति ॥ ४४
अश्वत्थामापि धिङ्मातुर् यत्पयो नाधिगच्छति ॥ ४४॥
[2]इति संभाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् ।
आत्मानं चात्मना गर्हन् मनसेदं व्यचिन्तयम् ॥ ४५॥
अपि नाहं पुरा विप्रैर् वर्जितां गर्हितां भृशम् ।
परोपसेवां पापिष्ठाम् आचरेयं धनाशया ॥ ४६॥
इति मत्वा प्रियं पूर्वं वक्तारं सूनृतां गिरम् ।
पूर्वं सङ्गतसंसिद्धं सदारस्सोमकं गतः ॥ ४७॥
अभिषिक्तं च श्रुत्वैनं कृतार्थोऽस्मीति चिन्तयन् ।
प्रियं सखायं सुप्रीतो राज्यस्थं समुपागमम् ॥ ४८॥

---

1. घ—कृपी चापि महत्क्लेशं पुत्रं दृष्ट्वा ममाविशत् ।
एकदा भवने स्नेहात् सख्युर्मध्ये ममात्मजः ॥
भुक्त्वा यथेष्टं क्षीरान्नं ज्ञातक्षीररसस्ततः ॥
अब्रवीन्मातरं दुःखी किं क्षीरं दत्तवत्यसि ।
त्वद्दत्तं मम यत्क्षीरं मातस्तेन समं न हि ॥
यद्भुक्तं भवने सख्यु र्देहि मे मधुरं पयः ॥
रुदन्तमेवमित्युक्त्वा दृष्ट्वा माता भृशातुरा ।
महद्दुःखं तयो र्दृष्ट्वा दुःखितोऽहं पितामह ॥ [अधिकः पाठः]
2. अ-क-ख-ग-घ—कोशेषु अयं श्लोको न दृश्यते ।

संस्मरन् सङ्गतं चैव वचनं चैव तस्य तत्।
ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो ॥ ४९॥
अब्रुवं पुरुषव्याघ्र सखायं विद्धि मामिति ॥ ५०
उपस्थितं तु द्रुपदस् सखिवच्चाभिसङ्गतम्।
स मां निराकारमिव प्रहसन्निदमब्रवीत् ॥ ५१
अकृतेयं तव प्रज्ञा ब्रह्मन् नातिसमञ्जसी।
यदात्थ मां त्वं प्रहसन् सखा तेऽहमिति द्विज ॥ ५२
न हि राज्ञामुदीर्णानाम् एवंभूतैर्नरैः क्वचित्।
सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः ॥ ५३
[1]नाश्रोत्रियश्श्रोत्रियस्य [2]नारथी रथिनस्सखा।

---

1. क-ख-ग—सङ्गतानीह जीर्यन्ति कालेन परिजीर्यता।
आसीत्ते सङ्गतं पूर्वं न तु सामर्थ्यवर्धनम् ॥
[अधिकः पाठः]

2. क-ख-ग—नाविद्वान्विदुषस्सखा।
साम्ये सख्यं भवति वै वैषम्ये नोपगम्यते ॥
न सख्यमजरं लोके विद्यते जातु कर्हिचित्।
कामाद्धि रज्यते चान्यः क्रोधेनापि च रज्यते ॥
मा वै जीर्णमुपातिष्ठास्सख्यं नीचमुपादधाः।
आगतश्चेदनाहूतो दहेत् स्वार्थनिबन्धनम् ॥
नाकिञ्चनस्सखाऽऽढ्यस्य नारथी रथिनस्सखा।
नाशूरस्य सखा शूरस्सख्यं पूर्वं किमिष्यते ॥
न हि राज्ञामुदीर्णनामेवंभूतैर्नरैः क्वचित्।
सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः ॥

सङ्गमं नाभिजानामि त्वयाऽद्य समये कृतम् ।
एकरात्रं तु ते ब्रह्मन् कामं दास्यामि भोजनम् ॥
आदत्स्वैनं द्विजश्रेष्ठ सौहार्दं ह्यर्थबन्धनम् ॥
एवमुक्तस्त्वहं तेन सदारः प्रस्थितस्तदा ।
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता न चिरादिव ॥
ततश्च भवतः कामं संवर्धयितुमागतः ।
इदं नागपुरं राज्यं ब्रूहि किं करवाणि ते ।
॥ इति संभवपर्वणि षट्सप्ततितमोऽध्यायः ॥

॥ अथ सप्तसप्ततितमोऽध्यायः ॥

वैशम्पायनः –

एवमुक्तस्तदा भीष्मो भरद्वाजमभाषत ।
अधिज्यं कुरुवीराणां साध्वस्त्रं प्रतिपादय ॥
भुङ्क्ष्व भोगान् भृशं प्रीतः पूज्यमानः कुरुक्षये ॥
कुरूणामस्ति यद्वित्तम् इदं राज्यं च कृत्स्नशः ।
त्वमेव परमो राजा सर्वे वाक्यकरास्तव ॥
यच्च ते प्रार्थितं ब्रह्मन् कृतमित्यवधार्यताम् ॥
दिष्ट्या प्राप्तोऽसि ब्रह्मर्षे महान् मेऽनुग्रहः कृतः ॥
द्रोणस्तथोक्तो भीष्मेण पूजितो वसतिं वसन् ।
कुरूणां सफलं कर्म द्रोणप्राप्तौ तदाऽभवत् ॥
अस्त्रं चतुर्विधं कृत्स्नं कुमारान् प्रत्यपादयत् ॥
तत्र क्षत्रस्य लोकेऽस्मिन् राजपुत्रा महाबलाः ॥
अभिजग्मुस्तदा द्रोणं धनुर्वेदचिकीर्षया ॥
वृध्या भुजबलोद्योगे तेषु सर्वेषु पाण्डवः ।
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ॥
कृत्येष्वस्त्रप्रयोगेषु लाघवात् सौष्ठवेन च ।
समेतानां तु सर्वेषां बभूवाभ्यधिकोऽर्जुनः ॥
ऐन्द्रिं त्वविषमं द्रोण उपदेशेऽभ्यभाषत ॥
एकस्सर्वकुमाराणां विव्याध शरमुत्तमम् ।

नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ ५४
द्रुपदेनैवमुक्तोऽहं मन्युनाऽभिपरिप्लुतः ।
अभ्यागच्छं कुरून् भीष्म शिष्यैरर्थिगुणान्वितैः ॥ ५५

वैशम्पायनः—

प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैस्सह ।
पौत्रानादाय तान् सर्वान् वसूनि विविधानि च ॥ ५६
शिष्या इति ददौ राजन् द्रोणाय विधिपूर्वकम् ॥ ५६॥

पूर्वतोऽनुवृत्तम्—

कमण्डलुं च सर्वेषां प्रायच्छदुदकानये ॥
पुत्राय तु ददौ कुम्भमविलम्बनकारणात् ।
यावत्ते नाभिगच्छन्ति तावदस्य परा गतिः ॥
द्रोण आचष्ट पुत्राय तज्ज्ञज्ञे शङ्कयाऽन्वितम् ।
पार्जन्येनैव सोऽस्त्रेण पूरयित्वा कमण्डलुम् ॥
सममाचार्यपुत्रेण गुरुमायात् स फल्गुनः ॥
आचार्यपुत्रात्तस्माद्विशेषेऽपि धिया गुणैः ।
न चाहीयत मेधावी पार्थश्शस्त्रभृतां वरः ॥
द्रुपदेनैवमुक्तोऽहं मन्युनाऽभिपरिप्लुतः ।
अभ्यागच्छम् कुरून् भीष्म शिष्यैरर्थगुणान्वितैः ॥
घ—इत्थं निराकृतस्तेन देशाद् देशं परिभ्रमन् ।
त्वत्संभवामहं कीर्तिं श्रुत्वा त्वां समुपागतः ॥

वैशम्पायनः—

इत्युक्तवन्तं तं द्रोणं मा भैरिति समाश्वसत् ।
पूजयित्वा बहुविधैर्धनैर् गुरुपरीप्सया ।
पौत्राणां सुमतिं दृष्ट्वा सर्वशास्त्रार्थगाहिनीम् ॥
[अधिकः पाठः]

स च शिष्यान् महेष्वासः प्रतिजग्राह कौरवान् ॥ ५७

प्रतिगृह्य च तान् सर्वान् द्रोणो वचनमब्रवीत् ।
रहस्येतान् प्रतीतात्मा कृतोपसदनांस्तथा ॥ ५८

द्रोणः—

कार्यं मे काङ्क्षितं किञ्चिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं मे तदृतं वदतानघाः ॥ ५९

वैशम्पायनः—

तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन् विशाम्पते ॥ ५९॥

अर्जुनस्तु ततस्सर्वं प्रतिजज्ञे परन्तप ॥ ६०

ततोऽर्जुनं मूर्ध्नि तदा समाघ्राय पुनः पुनः ।
प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ ६१

अश्वत्थामानमाहूय द्रोणो वचनमब्रवीत् ।
सखायं विद्धि ते पार्थं मया दत्तं प्रगृह्यताम् ॥ ६२
साधु साध्विति तं प्राज्ञः परिष्वज्येदमब्रवीत् ॥ ६२॥

अद्यप्रभृति विप्रेन्द्र परवानस्मि धर्मतः ।
शिष्योऽहं त्वत्प्रसादेन जीवामि द्विजसत्तम ॥ ६३॥

इत्युक्त्वा तु तदा पार्थः पादौ जग्राह पाण्डवः ॥ ६४

ततो द्रोणः पाण्डुपुत्रान् अस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥ ६५

[1]राजपुत्रास्तथैवान्ये समेत्य भरतर्षभाः ।
अभिजग्मुस्ततो द्रोणम् अस्त्रार्थे द्विजसत्तमम् ॥ ६६

वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः ।
सूतपुत्रश्च राधेयो गुरुं द्रोणमियात्तदा ॥ ६७

स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः ।
दुर्योधनमुपाश्रित्य पाण्डवानत्यमन्यत ॥ ६८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ ७ ॥ संभवपर्वणि [2]एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[अस्मिन्नध्याये ६८ श्लोकाः]

---

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

---

एकलव्यवृत्तान्तकथनम् ॥ १ ॥

---

वैशंपायनः—

[3]अर्जुनस्तु परं यत्नम् आतस्थे गुरुपूजने ।

---

1. ख—अस्त्रं चतुर्विधं कृत्स्नं कुमारान् प्रत्यपादयत् ।
ततः क्षत्रस्य लोकेऽस्मिन् राजपुत्रा महाबलाः ॥[अधिकः पाठः]

2. ख-ग—कोशयो रध्यायसमाप्तिर्नोपलभ्यते ।
घ—कोशे सप्तषष्टितमोऽध्यायः ॥

3. ख—बुद्ध्या भुजबलोद्योगे तेषु सर्वेषु पाण्डवः ।
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ॥

अस्त्रे च परमे योगे प्रियो द्रोणस्य चाभवत् ॥ १

[1]द्रोणेन च तदाहूय रहस्युक्तोऽस्त्रसाधकः ।
अन्धकारेऽर्जुनायान्नं न देयं ते कदा चन ॥ २

ततः कदाचिद्भुञ्जाने प्रववौ वायुरर्जुने ।
[2]तेन दीपस्तु सहसा निर्वापित इति श्रुतिः ॥ ३

भुक्त्वा[3]नेव कौन्तेयो नाभ्यासात्स न्यवर्तत ।

---

पूर्वतोऽनुवृत्तम्—

तुल्येष्वस्त्रप्रयोगेषु लाघवात् सौष्ठवेन च ।
समेतानां तु शिष्याणां बभूवाभ्यधिकोऽर्जुनः ॥
ऐन्द्रिमभ्यधिकं द्रोण उपदेशेऽभ्यभाषत ।
एकस्सर्वकुमाराणां विव्याथ शरमुत्तमम् ॥
कमण्डलुं च सर्वेषां प्रायच्छदुदकानये ।
पुत्राय तद्ददौ कुम्भं अविलम्बनकारणात् ॥
यावन्नाभ्यधिगच्छन्ति तावदस्य परा गतिः ।
द्रोण आचष्ट पुत्राय तज्जज्ञे शङ्कयाऽन्वितः ॥
पार्जन्येनैव सोऽस्त्रेण पूरयित्वा कमण्डलुम् ।
सममाचार्यपुत्रेण गुरुमायाद् स फल्गुनः ॥
आचार्यपुत्रात्तस्मात्तु विशेषेऽपि धियो गुणैः ।
न चाहीयत मेधावी पार्थश्शस्त्रभृतां वरः ॥ [अधिकः पाठः]

1. क-ख-ग—ततो द्रोणोऽब्रवीदेनं राज्ञ एव निवेशने ।
[अधिकः पाठः]

2. घ—निर्वापितः प्रदीपोऽयं नापश्यच्छाश्रुणोत्तदा ।
शिक्षाभ्यासमाकृष्टः शिक्षासक्तमनास्तदा ॥ [अधिकः पाठः]

3. क-ख-ग—नेव कौन्तेयो नाभ्यासाच्च न्यवर्तत ।
घ—नेव कौन्तेयो न भुक्तेस्स न्यवर्तत ॥

[1]हस्तस्तेजस्विनो नित्यम् अभ्यासकृतकारणात् ॥ ४
तदभ्यासकृतं मत्वा रात्रावपि स पाण्डवः ।
तस्य ज्यातलनिर्घोषं द्रोणश् शुश्राव तन्निशि ॥ ५
उपेत्यार्जुनमुत्थाप्य परिष्वज्येदमब्रवीत् ॥ ५॥

द्रोणः—

[2]प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः ।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥ ६॥

[3]वैशंपायनः—

ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च ।

---

1. घ—शिक्षामक्तमनोबुद्धेश् चक्षुषो न च दृश्यते ।
निर्वापितः प्रदीपो वा नेति वा नृपसत्तम ॥
इन्द्रियाणां नयत्वाच्च मनसो वस्तुदर्शने ।
अभ्यासस्य प्रधानत्वात् सर्वविद्यासु फल्गुनः ॥ [अधिकः पाठः]

2. ख—अस्त्रवान्वान्वियेषे स्त्री यथावां नाद्य कश्चन । [अधिकः पाठः]

3. क-ख-ग—धनुर्ग्रहेपि मे शिष्यो भविष्यसि विशेषवान् ।
इतद्धृदि तदा जिष्णोर् ववृधे द्रोणशासनम् ॥
परमं चाकरोद्यत्नं धनुर्वेदे परन्तपः ।
अर्जुनो नरशार्दूलस्सर्वशस्त्रभृतां वरः ॥
सर्वक्रियाभ्यनुज्ञानात्तथा शिष्यान्समानयत् ।
दुर्योधनं चित्रसेनं दुश्शासनविविंशती ।
अर्जुनं च समानीय अश्वत्थामानमेव च ॥
शिशुकं मृण्मयं कृत्वा द्रोणो गङ्गाजले ततः ।
शिष्याणां पश्यतां चैव क्षिपति स्म महाभुज ॥
चक्षुषी वाससा चैव बद्ध्वा प्रादाच्छरासनम् ॥

रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ ७॥
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणस्संकीर्णयुद्धेषु शिक्षयामास कौरवम् ॥ ८॥

---

पूर्वतोऽनुवृत्तम्—

शिशुकं विध्यतेमं वै जलस्थं बद्धचक्षुषः ।
एतत्क्षणेन बीभत्सु रावापैर्दशभिर्वशी ॥
पञ्चकैरनुविध्याथ मग्नं शिशुकमम्भसि ।
तस्य दृष्ट्वा क्रियास्सर्वा द्रोणोऽमन्यत पाण्डवम् ॥
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ।
अथाब्रवीन्महात्मानं भारद्वाजो महारथम् ॥
अस्त्रं विशिष्टमन्येषु यन्न विद्येत पाण्डव ।
ससंहारप्रयोगं च त्वमधीष्व व्रतं चर ॥
अस्त्रं ब्रह्मशिरो नाम दहेद्यत्पृथिवीमपि ।
यावान्मन्त्रप्रयोगोऽपि विनियोगे भविष्यति ॥
तावानेव तु संहारे कर्तव्य इति चान्ततः ।
*न मानुषे प्रयोक्तव्यं ब्रह्मणोऽस्त्रं कथञ्चन ।
बाधते मानुषाञ्शत्रून् यदा वा मानुषः क्वचित् ॥
तस्मादेतत्प्रयोक्तव्यं ब्राह्ममस्त्रं सनातनम् ।
तथेत्येव च बीभत्सुर् उवाचाथ कृताञ्जलिः ॥
चकार च तथा सर्वं यथोक्तं मनुजर्षभः ।
अवाप्तास्त्रं तु बीभत्सुमनुज्ञाय महामतिः ॥
उवाच परमप्रीतो मत्समोऽसीति पाण्डवम् ॥
ततश्चित्रान् धनुर्मार्गान् गजेषु च रथेषु च ।
अस्त्रेषु सम्यक्चारेषु द्रोणश्शिष्यान् व्यचारयत् ॥

[अधिकः पाठः]

* ख—असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ [अधिकः पाठः]

तस्य तत्कौशलं दृष्ट्वा धनुर्वेदजिघृक्षवः ।
राजानो राजपुत्राश्च समाजग्मुस्सहस्रशः ॥ ९॥
तान् सर्वाञ्छिक्षयामास द्रोणश्शस्त्रभृतां वरः ॥ १०
ततो निषादराजस्य हिरण्यधनुषस्सुतः ।
एकलव्यो महावीर्यो द्रोणमभ्याजगाम ह ॥ ११
न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् ।
शिष्यं धनुषि धर्मज्ञस् तेषामेवान्ववेक्षया ॥ १२

द्रोणः—

शिष्योऽसि मम नैषादे ! प्रयोगे बलत्तरः ।
निवर्तस्व गृहानेव अनुज्ञातोऽसि नित्यशः ॥ १३

वैशंपायनः—

स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः ।
अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम् ॥ १४
तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥ १५
स तेन तपसा युक्तो योगेन परमेण च ।
विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥ १६
लाघवं चास्त्रयोगं च नचिरात् प्रत्यपद्यत ॥ १६॥
अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः ।

रथैर्विनिर्ययुस्सर्वे मृगयामरिमर्दनाः ॥ १७॥
तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया ।
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥ १८॥
तेषां विचरतां तत्र तत्तत्कर्म चिकीर्षताम् ।
श्वा चरन् स पथा मूढो नैषादिं प्रति जग्मिवान् ॥ १९॥
[1]स कृष्णं मलदिग्धाङ्गं कृष्णाजिनधरं वने ।
नैषादिं श्वा समुद्वीक्ष्य भषंस्तस्थौ तदन्तिके ॥ २०॥
तस्यैकलव्यो भषतः शुनस्सप्त शरान् मुखे ।
लाघवं दर्शयन्नस्त्रैर् मुमोच युगपद्यथा ॥ २१॥
[2]स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह ।
तं दृष्ट्वा कौरवा राजन् विस्मयं परमं गताः ॥ २२॥
लाघवं शब्दवेधित्वं दृष्ट्वा तत् परमं तदा ।
[3]प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्वशः ॥ २३॥

---

1. क-ख-ग—तस्य रोरूयमाणस्य नष्टस्य विजने वने ।
शब्दं शुश्राव नैषादिश् शुनस्तस्य तु मारिष ॥
[अधिकः पाठः]

2. घ—वेगमर्जनविस्तारि परिणाहविलम्बनैः ।
आयामपरिमाणाभ्यां बहुशस्ते शराङ्कुराः ॥
समप्रमाणिभिर्जिह्वाऽऽक्षिप्तै र्व्याभाषितश्शरैः ।
तथा शैलबिलोत्थाभिः सप्तार्चिर्भिररिन्दमैः ॥ [अधिकः पाठः]

3. क-ख-ग—आत्मन्यकार्षुर्व्रीळां च ततस्ते पाण्डुनन्दनाः ।
श्वानं तु पाण्डवा दृष्ट्वा विस्मयोत्फुल्ललोचनाः ॥
[अधिकः पाठः]

तं ततोऽन्वेषमाणास्ते वने वनचरेश्वरम् ।
ददृशुः पाण्डवा राजन् अस्यन्तमनिशं शरान् ॥ २४॥

न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् ।
अथैनं परिपप्रच्छुः को भवान् कस्य चेति ह ॥ २५॥

एकलव्यः—

निषादाधिपतेर्वीरा हिरण्यधनुषस्सुतम् ।
द्रोणशिष्यं च मां वित्त धनुर्वेदकृतश्रमम् ॥ २६॥

वैशम्पायनः—

[1]ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः ।
यथावृत्तं वने राजन् द्रोणायाचख्युरद्भुतम् ॥ २७॥

कौन्तेयस्त्वर्जुनो राजन् एकलव्यमनुस्मरन् ।
रहो द्रोणं समागम्य प्रणयादिदमब्रवीत् ॥ २८॥

नन्वहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः ।
भवतोक्तो न मे शिष्यस् त्वद्विशिष्टो भविष्यति ॥ २९॥

अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्यवान् ।
अस्त्यन्यो भवतश्शिष्यो निषादाधिपतेस्सुतः ॥ ३०॥

वैशंपायनः—

मुहूर्तमिव तं द्रोणश् चिन्तयित्वा विनिश्चयम् ।

---

1. क-ख-ग—एकलव्यं स आत्मानमाचचक्षेऽथ पाण्डवाः ।

सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् ॥ ३१॥

ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् ।
एकलव्यं धनुष्पाणिम् अस्यन्तमनिशं शरान् ॥ ३२॥

एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् ।
[1]अभिगम्योपसंगृह्य जगाम शिरसा महीम् ॥ ३३॥

पूजयित्वा ततो द्रोणं विधिवत् स निषादजः ।
निवेद्य शिष्यमात्मानं [2]तस्थौ प्राञ्जलिरग्रतः ॥ ३४॥

ततो द्रोणोऽब्रवीद्राजन् एकलव्यमिदं वचः ॥ ३५

द्रोणः—

यदि शिष्योऽसि मे तात वेतनं दीयतामिति ॥ ३५॥

वैशंपायनः—

एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदम् ॥ ३६

एकलव्यः—

किं प्रयच्छामि भगवन् आज्ञापयतु मां गुरुः ।
न हि किंचिददेयं मे गुरवे ब्रह्मवित्तम ॥ ३७

वैशंपायनः—

तमब्रवीत् त्वयाऽङ्गुष्ठो दक्षिणो दीयतामिति ॥ ३७॥

---

1. क-ख-ग—अभिगम्य ततः पादौ जग्राह शिरसा तदा ।
2. क-ख-ग-घ—द्रोणाय स निषादजः ।

एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ।
प्रतिज्ञामात्मनो रक्षन् सत्ये च निरतस्सदा ॥ ३८॥

तथैव हृष्टवदनस् तथैवादीनमानसः ॥ ३९

सत्यसन्धं च नैषादिं दृष्ट्वा प्रीतोऽब्रवीदिदम् ।
[1]एवं कर्तव्यमिति वै एकलव्यमभाषत ॥ ४०

[2]छित्त्वाऽविचार्य तं प्रादाद् द्रोणायाङ्गुष्ठमात्मनः ॥ ४०॥

अतः परं तु नैषादिरङ्गुलीभिर्व्यकर्षत ।
न तथा स तु शीघ्रोऽभूद् यथा पूर्वं नराधिप ॥ ४१॥

ततोऽर्जुनः प्रीतमना बभूव विगतज्वरः ।
द्रोणश्च सत्यवागासीन्नाधिकोऽन्योऽर्जुनादभूत् ॥ ४२॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

॥ ७ ॥ संभवपर्वणि सप्ततितमोऽध्यायः[3] ॥ ७० ॥

[अस्मिन्नध्याये ४२॥ श्लोकाः]

---

1. ख—शिष्योऽसि मम नैषादे प्रयोगो बलवत्तरः । [अधिकः पाठः]
2. क-ग-घ—बाढमित्येव नैषादिश्छित्वाङ्गुष्ठौ ददौ ततः ।
अविषण्णस्तु तौ प्रादाच्छित्त्वा द्रोणस्य वेतनम् ॥
[अधिकः पाठः]
3. ख-कोशे—एकोनसप्ततितमोऽध्यायः ।
घ-कोशे—अष्टषष्टितमोऽध्यायः ।

## ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥

अर्जुनेन द्रोणस्य ग्राहान्मोक्षणम् ॥ १ ॥

वैशम्पायनः—

[1]द्रोणस्य तु तदा शिष्यौ गदायोग्यौ विशेषतः ।
दुर्योधनश्च भीमश्च कुरूणामभ्यगच्छताम् ॥ १

अश्वत्थामा महास्त्रेषु सर्वेष्वभ्यधिकोऽभवत् ।
[2]युधिष्ठिरो रथश्रेष्ठस् सर्वत्र तु धनञ्जयः ॥ २

[3]प्रथितस्सागरान्तायां रथयूथपयूथपः ।
[4]बुद्धियोगबलोत्साहैस् सर्वास्त्रेषु तथाऽर्जुनः ॥ ३

अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ॥ ३॥

तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्यवान् ।
एकस्सर्वकुमाराणां स बभूवार्जुनोऽधिकः ॥ ४॥

---

1. क-ख—द्रोणस्ततः परां पूजां कुरुषु प्राप्नुवन्धनम् ।
चतुष्पादं कृत्स्नमन्नं कुमारान् प्रत्यवेदयत् ॥
पार्थिवस्य तु क्षत्रस्य राजपुत्रा महाबलाः ।
अनुजग्मुस्ततो द्रोणं कुरुष्वस्त्रचिकीर्षया ॥ [अधिकः पाठः]
2. क-ख-ग-घ—तथाऽतिपुरुषानन्यान् स राधेयो महाबलः ।
तथाऽतिपुरुषानन्यान् यमजावसिचर्मणि ॥
[अधिकः पाठः]
3. क-ख-ग—अर्जुनो जयतां श्रेष्ठस् सर्वत्र तु धनंजयः । [अधिकः पाठः]
4. क-ग—बुद्ध्या भुजबलोद्योगैस्तेषु सर्वेषु पाण्डवः ॥

प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
धार्तराष्ट्रा दुरात्मानो नामृष्यन्त परंतप ॥ ५॥
तांस्तु सर्वान् समानीय सर्वविद्यासु निष्ठितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभान् ॥ ६॥
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ ७॥

[1]द्रोणः —

शीघ्रं भवन्तस्सर्वे वै धनूंष्यादाय सत्वराः ।
भासमेतं समुद्दिश्य तिष्ठन्तु संहितेषवः ॥ ८॥
मद्वाक्यसमकालं च शिरोऽस्य विनिकृत्यताम् ।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ ९॥

वैशम्पायनः—

ततो युधिष्ठिरं पूर्वम् उवाचाङ्गिरसां वरः ।
संधत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च तम् ॥ १०॥
[2]ततो युधिष्ठिरः पूर्वं धनुर्गृह्य महारवम् ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ११॥
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम् ।

---

1. घ—भीष्मं विदुरमानाय्य बाह्लीकादीन् गुरूनपि । [अधिकः पाठः]
2. क-ख-ग-घ—ततः कुन्तीसुतो राजन् गृहीत्वा धनुरुत्तमम् ।

स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ १२॥
पश्यस्येनं द्रुमाग्रस्थं भासं नरवरात्मज! ।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ १३॥
स मुहूर्तादिव पुनर् द्रोणस्तं प्रत्यभाषत ।
पार्थ वृक्षमिमं मां च भ्रातॄन् वाऽपि प्रपश्यसि ॥ १४॥
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम् ।
भवन्तं च तथा भ्रातॄन् [1]भासं चेति पुनः पुनः ॥ १५॥
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ॥ १६॥
ततो दुर्योधनादींस्तान्[2]धार्तराष्ट्रान् महाबलान् ।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ १७॥
अन्यांश्च शिष्यान् भीमादीन् राज्ञश्चैवा[3]न्यदेशजान् ।
तथा च सर्वे सर्वं तत् पश्याम इति कुत्सिताः ॥ १८॥
ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत ॥ १९
त्वयेदानीं प्रहर्तव्यम् एतल्लक्ष्यं निपात्यताम् ।
मद्वाक्यसमकालं ते मोक्तव्यश्च भवेच्छरः ॥ २०
विकृष्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥ २०॥

1. क-ख-ग-घ—लक्ष्यं चैव दिवि प्रभो ।
2. क-ख-ग-घ—कुत्सयित्वा महारथान् ।
3. क-ख-ग-घ—विदेशकान् ।

एवमुक्तस्सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ २१॥

मुहूर्तादिव तं द्रोणस् तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि चार्जुन ॥ २२॥

पश्यामि भासमेवाहं इति तं प्रत्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥ २३॥

ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षं पाण्डवानां रथर्षभम् ॥ २४॥

भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥ २५॥

अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत् पार्थं स मुमोचाविचारयन् ॥ २६॥

ततस्तस्य नगस्थस्य क्षुरेण निशितेन सः ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ २७॥

तस्मिन् कर्मणि संसिद्धे परिष्वज्य च पाण्डवम् ।
मेने च द्रुपदं सङ्ख्ये सानुबन्धं पराजितम् ॥ २८॥

[1]कस्य चित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः ।

---

1. ब—सामर्थ्यं फल्गुनस्यापि कौरवाणां तथेतरत् ।
दर्शयामास भीष्माय विदुराय महात्मने ॥ [अधिकः पाठः]

जगाम गङ्गामभितो मज्जितुं भरतर्षभ ॥ २९॥

[1]अवगाढमथो द्रोणं सलिले सलिलेचरः ।

ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः ॥ ३०॥

स समर्थोऽपि मोक्षाय शिष्यान् सर्वानचोदयत् ।

ग्राहं हत्वा मोक्षयध्वं मामिति त्वरयन्निव ॥ ३१॥

[2]तद्वाक्यसमकालं तु बीभत्सुर्निशितैश्शरैः ।

अवार्यैर्निशितैश्चैनं मग्नमम्भस्यताडयत् ॥ ३२॥

इतरे तु विसंमूढास् तत्र तत्र प्रपेदिरे ॥ ३३

तं च दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम् ।

विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ॥ ३४

स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः ।

[3]ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः ॥ ३५

अथाब्रवीन्महात्मानं भारद्वाजो महारथम् ॥ ३५॥

गृहाणेदं महाबाहो विशिष्टमतिदुर्धरम् ।

---

1. घ—पुनर्भीष्मादिभिस्साकं दर्शयन् शिष्यलाघवम ॥ [अधिकः पाठः]
2. क-ख-ग—वचनादेव बीभत्सुरवार्यैर्दशभिः शरैः ।
शिरश्चिच्छेद दशधा मग्नं ग्राहमथाम्भसि ॥
3. क-ग—ग्राहःपञ्चत्वमापेदे इति श्लोकानन्तरं
सप्तविंशत्यधिकशततमेऽध्याये प्रारम्भे—
कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।
इति श्लोकक्रमो वर्तते ॥

अस्त्रं ब्रह्मशिरो वीर सप्रयोगनिवर्तनम् ॥ ३६॥

न च ते मानुषेष्वेतत् प्रयोक्तव्यं कथंचन ।
जगद्धि निर्दहेदेतद् अल्पतेजसि पातितम् ॥ ३७॥

असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ ३८॥

बाधतेऽमानुषः कश्चिद् देवो वापीह कश्चन ।
तद्वधाय प्रयुञ्जीथास् तदस्त्रमिदमाहवे ॥ ३९॥

तत्तथेति प्रतिश्रुत्य बीभत्सुः प्रकृताञ्जलिः ।
जग्राह परमास्त्रं तद् आह चैनं पुनर्गुरुः ॥ ४०॥
भविता त्वत्समो नान्यः पुमाँल्लोके धनुर्धरः ॥ ४१

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां-
आदिपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

॥ ७ ॥ संभवपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[अस्मिन्नध्याये ४१ श्लोकाः]

---

## ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥

कुमाराणां अस्त्रशिक्षापरीक्षार्थं रङ्गनिर्माणम् ॥ १ ॥ शिक्षादर्शनार्थं भीष्मादीनां प्रेक्षागारप्रवेशः ॥ २ ॥ युधिष्ठिरादीनां परीक्षा ॥ ३ ॥ भीम दुर्योधनयोः गदायुद्धपरीक्षा ॥ ४ ॥

वैशम्पायनः—

[1]कृतास्त्रान् धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।
दृष्ट्वा द्रोणोऽब्रवीद्वाक्यं धृतराष्ट्रं जनेश्वरम् ॥ १

कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
गाङ्गेयस्य च सान्निध्ये व्यासस्य विदुरस्य च ॥ २

[2]राजन् संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम ।
[3]ते दर्शयेयुस्त्वां शिक्षां राजन्ननुमते तव ॥ ३

ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना ॥ ३॥

धृतराष्ट्रः—

भारद्वाज महत्कर्म कृतं द्विजवर त्वया ॥ ४

यदाऽनुमन्यसे कालं यस्मिन् देशे यथा यथा ।
तथा[4]तथा विधानाय स्वयमाज्ञापयस्व माम् ॥ ५

---

1. क-ख-ग—तांस्तु सर्वास्त्रकुशलान् सर्वशस्त्रविशारदान् ।
2. क-ख-ग—त्रयाणामपि लोकानां प्रजापतिमिव स्थितम् ।
[अधिकः पाठः]
3. क-ख-ग—दर्शयिष्यन्ति शस्त्राणि तद्विद्वाननुमन्यताम् ।
4. क-ख-ग—त्वयि तथा यस्त्वं समाज्ञापय चैव माम् ।

स्पृहयाम्यद्य निर्वेदात् पुरुषाणां सचक्षुषाम् ।
अस्त्रहेतोस्समायुक्तान् ये मे द्रक्ष्यन्ति पुत्रकान् ॥ ६

सत्कार्यः क्षत्त आचार्यो ब्रवीति कुरु तत्तथा ।
न हीदृशं प्रियं मेऽद्य भविता धर्मवत्सल ॥ ७

वैशम्पायनः—

ततो राजानमामन्त्र्य विदुरानुगतो बहिः ।
भारद्वाजो महाप्राज्ञो ज्ञापयामास मेदिनीम् ॥ ८

समामवृक्षां निर्गुल्माम् उदक्प्रवणसंस्थिताम् ॥ ८॥

तस्यां भूमौ बलिं चक्रे तिथिनक्षत्रपूजिते ॥ ९

अवघुष्टं पुरे चापि तदर्थं भरतर्षभ ।
रङ्गभूमिं [1]सुविहितां शास्त्रदृष्टामकारयत् ॥ १०

प्रेक्षागारं सुविहितं चक्रुस्तत्र च शिल्पिनः ।
राज्ञां सर्वायुधोपेतं स्त्रीणां चैव नरर्षभ ॥ ११

मञ्चान् स्म कारयामासुर् यत्र जानपदा जनाः ।
सचिवाश्च पुनर्मञ्चान् कारयामासुरुच्छ्रितान् ॥ १२

तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा ।
सान्तःपुरस्सहामात्यो व्यासस्यानुमते तदा ॥ १३

भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् ।

---

1. क-ख-ग—सुविपुलामकरोद्दर्शनेप्सया ।

बाह्लीकं सोमदत्तं च भूरिश्रवसमेव च ॥ १४
कुरूनन्यांश्च सचिवान् आदाय नगराद्बहिः ।
रङ्गभूमिं समासाद्य ब्राह्मणैस्सहितो नृपः ॥ १५
मुक्ताजालपरिक्षिप्तं वैदूर्यमणिभूषितम् ।
शातकुम्भमयं दिव्यं प्रेक्षागारमुपारुहत् ॥ १६
गान्धारी च महाभागा कुन्ती च जयतां वर ।
स्त्रियश्च सर्वा या [1]राज्ञस् तासां च परिचारकाः ॥ १७
हर्षादारुरुहुः कान्तं मेरुं देवस्त्रियो यथा ।
ब्राह्मणक्षत्रविट्च्छूद्रं सर्वं तत्र समागतम् ॥ १८
[2]दर्शनेप्सुः समभ्यागात् कुमाराणां कृतास्त्रताम् ॥ १८॥
प्रवादितैश्च वादित्रैर् युतः कोलाहलेन च ।
महार्णव इव क्षुब्धः समाजस्सोऽभवत्तदा ॥ १९॥
ततश्शुक्लाम्बरधरश् शुक्लयज्ञोपवीतवान् ।
शुक्लकेशस्सितश्मश्रुश् शुक्लमाल्यानुलेपनः ॥ २०॥
रङ्गमध्यं तदाचार्यः सपुत्रस्स विवेश ह ॥ २१
नभो जलधरै[3]र्वीतं साङ्गारक इवांशुमान् ।
[4]व्यासस्यानुमते चक्रे बलिं बलवतां वरः ॥ २२

1. क-ख-ग—राज्ञां तेषामन्तःपुराणि च ।
2. क-ख-ग—क्षणेनैव तथा तत्र दर्शनेप्सुर्जगाम ह ।
3. क-ख-ग—र्हीनं 4. क-ख-ग—स तथा समये चक्रे बलं

ब्राह्मणांश्चापि शास्त्रज्ञान् वाचयामास मङ्गलैः ॥ २२॥

सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ।
प्रददौ दक्षिणां राजा द्रोणस्य च कृपस्य च ॥ २३॥

अथ पुण्याहघोषस्य महतस्समनन्तरम् ।
[1]विविशुर्विविधं गृह्य शस्त्रोपकरणं नृपाः ॥ २४॥

ततो बद्धतनुत्राणा बद्धकक्ष्या महाबलाः ।
बद्धतूणास्सधनुषो विविशुर्भरतर्षभाः ॥ २५॥

[2]अनुज्येष्ठं च ते तत्र युधिष्ठिरपुरोगमाः ।
रङ्गमध्ये स्थितं द्रोणम् अभिवाद्य नरर्षभाः ॥ २६॥

पूजां चक्रुर्यथान्यायं द्रोणस्य च कृपस्य च ॥ २७
आशीर्भिश्च प्रयुक्ताभिस् सर्वे संहृष्टमानसाः ।
अभिवाद्य पुनश्शस्त्रान् बलिपुष्पैस्समन्वितान् ॥ २८
रक्तचन्दनसंमिश्रैस् स्वयमर्चन्त कौरवाः ॥ २८॥

रक्तचन्दनदिग्धाश्च रक्तमाल्यानुधारिणः ।
सर्वे रक्तपताकाश्च सर्वे रक्तान्तलोचनाः ॥ २९॥

द्रोणेन समनुज्ञाता गृह्य शस्त्रं परन्तपाः ।
धनूंषि पूर्वं संगृह्य तप्तकाञ्चनभूषिताः ॥ ३०॥

---

1. क-ख-ग—गृहीत्वोपाविशन् सर्वे रणोपकरणं नराः ।
2. क-ख-ग—यथा ज्येष्ठक्रमं तत्र

लक्ष्याणि विविधाकारैश् शरैस्सन्धाय कौरवाः ।
ज्याघोषं तलघोषं च कृत्वा भूतान्यपूजयन् ॥ ३१॥
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् ॥ ३२
केषांचित्तरुमूलेषु शरा निपतिता नृप ।
केषांचित् पुष्पमुकुटे निपतन्ति स्म सायकाः ॥ ३३
केचिल्लक्ष्याणि विविधैर् बाणैराहितलक्षणैः ।
[1]बिभिदुर्लाघवोत्सृष्टैर् गुरूणि च लघूनि च ॥ ३४
केचिच्छराक्षेपभयाच् छिरांस्यवननामिरे ।
मनुजा धृष्टमपरे वीक्षाञ्चक्रुस्सविस्मयाः ॥ ३५
ते स्म लक्ष्याणि बिभिदुर् बाणैर्नामाङ्कशोभितैः ।
विविधैर्लाघवोत्सृष्टैर् उह्यन्तो वाजिभिर्द्रुतम् ॥ ३६
तत्कुमारबलं तत्र गृहीतशरकार्मुकम् ।
गन्धर्वनगराकारं प्रेक्षका विस्मिता भवन् ॥ ३७
सहसा चुक्रुशुस्तत्र शतशोऽथ सहस्रशः ।
विस्मयोत्फुल्लनयनाः प्रेक्षकास्साधु साध्विति ॥ ३८
कृत्वा धनुषि ते मार्गान् रथचर्यासु चासकृत् ।
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ ३९
गृहीतखड्गचर्माणस् ततो भूयः प्रहारिणः ।

1. क-ख-ग—विव्यथुः

शस्त्रमार्गान् यथोद्दिष्टांश् चेरुस्सर्वासु भूमिषु ॥ ४०

लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् ।
ददृशुस्तत्र सर्वेषां प्रयोगं खड्गचर्मणाम् ॥ ४१

अथ तौ नित्यसंक्रुद्धौ सुयोधनवृकोदरौ ।
अवतीर्णौ गदाहस्तौ सद्रिश्‍‍ृङ्गाविवाचलौ ॥ ४२

[1]क्रूरप्रेक्षौ महाबाहू पौरुषे पर्यवस्थितौ ।
बृंहन्तौ वाशिताहेतोः समदाविव कुञ्जरौ ॥ ४३

तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ ।
चेरतु[2]श्शृङ्खलगतौ समदाविव कुञ्जरौ ॥ ४४

धृतराष्ट्राय विदुरो गान्धार्यै च महामतिः ।
न्यवेदयत तत्सर्वं कुमाराणां च चेष्टितम् ॥ ४५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

॥ ७ ॥ संभवपर्वणि द्विसप्ततितमोऽध्यायः[3] ॥ ७२ ॥

[अस्मिन्नध्याये ४५ श्लोकाः]

---

1. क-ख-ग-घ—बद्धकक्ष्यौ
2. क-ख-ग—र्निर्मलगदौ सदर्पाविव गोवृषौ ।
3. क-कोशे-ग—कोशे च एकसप्ततितमोऽध्यायः ।
ख-कोशे-घ—कोशेच सप्ततितमोऽध्यायः ।

## ।। अष्टाविंशत्यधिकशततमोऽध्यायः ।।

अर्जुनस्य परीक्षा ।। १ ।। कर्णस्य रङ्गप्रवेशः ।। २ ।।

वैशम्पायनः—

[1]कुरुराजे तु रङ्गस्थे भीमे च बलिनां वरे ।
पक्षपातकृतस्नेहस् स द्विधेवाभवज्जनः ।। १

जय हे कुरुराजेति जय हे भीम इत्युत ।
पुरुषाणां सुविपुलाः प्रणादास्सहसोत्थिताः ।। २

ततः क्षुब्धार्णवसमं रङ्गमालोक्य बुद्धिमान् ।
भारद्वाजः प्रियं पुत्रम् अश्वत्थामानमब्रवीत् ।। ३

द्रोणः—

वारयैतौ महावीर्यौ कृतयोग्यावुभावपि ।
मा भूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ।। ४

वैशम्पायनः—

तत उत्थाय वेगेन अश्वत्थामा न्यवारयत् ।
गुरोराज्ञा भीम इति गान्धारे गुरुशासनम् ।। ५
अलं योग्यकृतं वेगम् अलं साहसमित्युत ।। ५।।

ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ ।

1. क-ख-ग—दुर्योधने चरत्येवं

युगान्तानिलसंक्षुब्धौ महावेगाविवार्णवौ ॥ ६॥

ततो रङ्गाङ्कणगतो द्रोणो वचनमब्रवीत् ।
निवार्य वादित्रगणं महामेघनिभस्वनम् ॥ ७॥

यो मे पुत्रात् प्रियतरस् सर्वास्त्रविदुषां वरः ।
ऐन्द्रिरिन्द्रानुजसमस् स पार्थो दृश्यतामिति ॥ ८॥

आचार्यवचनात् सोऽथ कृतस्वस्त्ययनो युवा ।
बद्धगोधाङ्गुलित्राणः पूर्णतूणस्सकार्मुकः ॥ ९॥

काञ्चनं कवचं बिभ्रत् प्रत्यदृश्यत फल्गुनः ।
एकस्सेन्द्रायुधतडित् ससन्ध्य इव तोयदः ॥ १०॥

ततस्सर्वस्य रङ्गस्य समुत्पिञ्जलकोऽभवत् ।
वादित्राण्यप्यवाद्यन्त सशङ्खानि समन्ततः ॥ ११॥

प्रेक्षकाः—

एष कुन्तीसुतश्श्रीमान् एष पाण्डवमध्यमः ।
एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ॥ १२॥

एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः ।
एष शील[1]वतां चापि शीलरत्नाकरोऽर्जुनः ॥ १३॥

---

1. क-ख-ग—वतामग्र्य एष ज्ञानवतां वरः ।
घ—वतां शील गुणरत्नाकरोऽर्जुनः ।

[1]वैशम्पायनः—

इत्येवमतुला वाचश् शृण्वन्त्याः प्रेक्षकेरिताः ।
कुन्त्याः प्रस्नवसंमिश्रैर् अस्रैः क्लिन्नमुरोऽभवत् ॥ १४॥

तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ॥ १५॥

धृतराष्ट्रः—

क्षत्तः क्षुब्धार्णवसमः किमेष सुमहास्वनः ।
सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् ॥ १६॥

विदुरः—

एष पार्थो महाबाहुः कौन्तेयः पाण्डुनन्दनः ।
[2]अवतीर्णस्सकवचस् तत्रैष जननिस्वनः ॥ १७॥

धृतराष्ट्रः—

धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते ।
पृथारणिसमुद्भूतैस् त्रिभिः पाण्डववह्निभिः ॥ १८॥

[3]वैशंपायनः—

तस्मिन् प्रमुदिते रङ्गे कथंचित्पर्यवस्थिते ।

---

1. क-ख-ग—एष कंसविमर्दस्य साक्षात्प्राणसमस्सखा ।
एष यत्प्रतिजानाति तस्य पारं गमिष्यति ॥
[अधिकः पाठः]

2. घ—विद्यावलं दर्शयिष्यन्नवतीर्णः कलानिधिः । [अधिकः पाठः]

3. घ—इत्थमन्तस्तपन् राजन् हृदि मात्सर्यवह्निना ।
बहिर्मधुरया वाचा पृथापुत्रानतोषयत् ॥ [अधिकः पाठः]

दर्शयामास बीभत्सुर् आचार्यादस्त्रलाघवम् ॥ १९॥

आग्नेयेनासृजद्वह्निं वारुणेनासृजत् पयः ।
वायव्यादसृजद्वायुं पर्जन्यादसृजद्घनान् ॥ २०॥

भौमेन प्रासृजद्भूमिं पार्वतेनासृजद्गिरिम् ।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥ २१॥

क्षणात् प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावतरन्महीम् ॥ २२॥

सुकुमारश्च शूरश्च गुरुश्चापि गुरुप्रियः ।
सौष्ठवेन हि संयुक्तः सोऽविध्यद्विविधैश्शरैः ॥ २३॥

भ्रमतश्च वराहस्य वाहस्य प्रमुखे स्थितः ।
[1]पञ्च बाणान् नसंयुक्तान् स मुमोचैकबान्धवान् ॥ २४॥

गव्ये विषाणकोशे च [2]वालरज्ज्वावलम्बिते ।
निचखान महावीरस् सायकानेकविंशतिम् ॥ २५॥

इत्येवमादि सुमहत् खड्गे धनुषि चाभवत् ॥ २६

गदायां चास्त्रकुशलो दर्शकानां प्रदर्शयन् ।
चक्रे तोमरपाशानां भिण्डिपालपरश्वथान् ॥ २७

अन्येषां चापि शिक्षाणां दर्शयामास लाघवम् ॥ २७॥

---

1. ख—भूताश्वे भूवराहाणां सिंहर्क्षकपिसंमुखान् । [अधिकः पाठः]
2. क-ग—काकस्य च मुखे समम् । ख—सिंहस्य च मुखे समम् ।

ततस्समाप्तभूयिष्ठे तस्मिन् कर्मणि भारत ।
महाभूते समाजे च वादित्रस्य च निस्वने ॥ २८॥
द्वारदेशात् समुद्भूतो माहात्म्यबलसूचकः ।
वज्रनिष्पेषसदृशश् शुश्रुवे भूरिनिस्वनः ॥ २९॥
शीर्यन्ते किं नु गिरयः किंस्विद्भूमिर्विदीर्यते ।
किंस्विदापूर्यते व्योम जलभारस्वनैर्घनैः ॥ ३०॥
रङ्गस्यैवं मतिरभूत् क्षणेन वसुधाधिप ।
द्वारं चाभिमुखास्सर्वे बभूवुः प्रेक्षकास्तदा ॥ ३१॥
पञ्चभिर्भ्रातृभिः पार्थैर् द्रोणः परिवृतो बभौ ।
पञ्चतारेण संयुक्तस् सावित्रेणेव चन्द्रमाः ॥ ३२॥
अश्वत्थाम्ना च सहितं भ्रातृणां शतमूर्जितम् ।
दुर्योधनममित्रघ्नम् उत्थितं पर्यवारयत् ॥ ३३॥
स तैस्तदा भ्रातृभिरुद्यतायुधैर्
वृतो गदापाणिरवस्थितो बभौ ।
स्थितस्तदा दानवसंक्षये पुरा
पुरन्दरो देवगणैरिवावृतः ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ ७ ॥ संभवपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

कर्णस्य परीक्षा ॥ १ ॥ कर्णार्जुनयोर्युद्धप्रसङ्गः ॥ २ ॥ कृपेण कर्णस्याधिक्षेपः, कर्णस्य दुर्योधनेन राज्याभिषेचनं च ॥ ३ ॥

वैशम्पायनः—

एतस्मिन्नेव काले तु तस्मिञ्जनसमागमे ।
दत्तावकाशः पुरुषैर् विस्मयोत्फुल्ललोचनैः ॥ १
[1]सिंहर्षभगजेन्द्राणां तुल्यवीर्यपराक्रमः ।
दीप्तिकान्तिद्युतिगुणैस् सूर्येन्दुज्वलनोपमः ॥ २
प्रांशुः कनकतालाभः सिंहसंहननो युवा ।
असङ्ख्येयगुणश्श्रीमान् भास्करस्यात्मसंभवः ॥ ३
संनिरीक्ष्य महाबाहुस् सर्वतो रङ्गमण्डपम् ।
प्रणामं द्रोणकृपयोर् नामपूर्वमथाकरोत् ॥ ४
स समाजे जनस्सर्वो निश्चलस्थिरलोचनः ।
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ॥ ५
विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ॥ ५॥

1. क-ख-ग-घ—विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ।
सहजं कवचं बिभ्रत कुण्डलोद्योतिताननः ॥
सधनुर्बद्धनिस्त्रिंशः साक्षादिव दिवाकरः ।
कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचन ॥
तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणनाशनः ॥

सहजं कवचं बिभ्रत् कुण्डलद्योतिताननः ॥ ६
सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः ।
कानीनस्तु पृथुयशाः पृथापुत्रः प्रतापवान् ॥ ७
सोऽब्रवीन्मेघधीरेण स्वरेण वदतां वरः ।
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ॥ ८

कर्णः—

[1]पार्थ यत्ते कृतं कर्म विशेषवदहं ततः ।
करिष्ये पश्यतां नृणां मा भूदात्मनि विस्मयः ॥ ९

वैशम्पायनः—

असमाप्ते ततस्तस्य वचने वदतां वर ।
यन्त्रक्षिप्त इव क्षिप्रम् उत्थितस्सर्वतो जनः ॥ १०
प्रीतिश्च पुरुषव्याघ्र दुर्योधनमथास्पृशत् ।
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेन त्वाविवेश ह ॥ ११
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणस्तदा ।
यत् कृतं तत्र पार्थेन तच्चकार महाबलः ॥ १२
अथ दुर्योधनस्तत्र भ्रातृभिस्सह भारत ।
कर्णं परिष्वज्य मुदा तदा वचनमब्रवीत् ॥ १३

दुर्योधनः—

स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद ।
अहं च कुरुराष्ट्रं च यथेष्टमुपभुज्यताम् ॥ १४

---

1. क—पार्थ यत्ते कृतमित्यारभ्य एवमुक्तस्तु इतिपर्यन्तं सप्त श्लोकाः न दृश्यन्ते ।

कर्णः—

कृतं सर्वेण मे राजन् सखित्वं भवता वृणे ।
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छामि भारत[1] ॥ १५

[2]वैशंपायनः—

ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत ।
कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् ॥ १६

अर्जुनः—

अनाहूतोपसृप्तानाम् अनाहूतोपजल्पताम् ।
ये लोकास्तान् हतः कर्ण मया त्वं प्रतिपत्स्यसे ॥ १७

कर्णः—

रङ्गोऽयं सर्वसामान्यः किमत्र तव फल्गुन ।
वीर्यश्रेष्ठाश्च राजन्या बलं धर्मोऽनुवर्तते ॥ १८

[3]किं क्षेपैः दुर्बलाश्वासैः शरैः कथय भारत ।
गुरोस्समक्षं यावत्ते हराम्यद्य शिरश्शरैः ॥ १९

---

वैशंपायनः—

1. ख-घ—एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
कर्णं दीर्घाञ्चितभुजं परिष्वज्येदमब्रवीत् ॥ [अधिकः पाठः]

दुर्योधनः—

2. क-ख-ग-घ—भुङ्क्ष्व भोगान् मया सार्धं बन्धूनां प्रियकृद्भव ।
दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिन्दम ॥
[अधिकः पाठः]

3. घ—अर्जुनः—

सर्वसाधारणं रङ्गं विवाहाद्युत्सवं तथा ।
नाहूता न च गच्छन्ति श्रेष्ठाः प्राज्ञाश्च भूमिपाः ॥

वैशंपायनः—

ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः ।
भ्रातृभिस्त्वरया श्लिष्टो रणायोपजगाम तम् ॥ २०

ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः ।
परिष्वक्तस्स्थितः कर्णः प्रगृह्य सशरं धनुः ॥ २१

[1]ततस्सविद्युत्स्तनितैः सेन्द्रायुधपुरोजलैः ।
आवृतं गगनं मेघैर् बलाकापङ्क्तिभासिभिः ॥ २२

ततस्स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकनम् ।
भास्करोऽप्यनयन्नाशं समीपोपगतान् घनान् ॥ २३

मेघच्छायोपगूढश्च ततोऽदृश्यत पाण्डवः ।
सूर्यातपपरिष्वक्तः कर्णोऽपि समदृश्यत ॥ २४

धार्तराष्ट्रा यतः कर्णस् तस्मिन् देशे व्यवस्थिताः ।
भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन् ॥ २५

द्विधा रङ्गस्समभवत् स्त्रीणां द्वैधमजायत ।

---

पूर्वतोऽनुवृत्तम्—
ब्राह्मणा बहुशो वैश्या आत्याचारसुनिर्मलाः ।
आहूता एव गच्छन्ति कस्त्वं तेषु कुतो भवान् ॥
वैशम्पायनः—
किरीटिनैवमुक्तस्स कर्णो रोषपरिप्लुतः ।
जातिसंकीर्तनाद् भङ्गाद् क्षुब्धार्णव इवावदत् ॥
कर्णः—

1. ग—कर्णोऽप्यभ्युद्रियात् पार्थम् अर्को मेरुरिवापरः । [अधिकः पाठः]

कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह ॥ २६
तां तथा मोहमापन्नां विदुरस्सर्वधर्मवित् ।
[1]कुन्तीमाश्वासयामास प्रोक्ष्य चन्दनवारिभिः ॥ २७
ततः प्रत्यागतप्राणा तावुभावपि दंशितौ ।
[2]पुत्रौ दृष्ट्वा सुसंतप्ता नान्वपद्यत किंचन ॥ २८
तावुद्यतमहाचापौ कृपश्शारद्वतोऽब्रवीत् ॥ २८॥

कृपः—

द्वन्द्वयुद्धसमाचारे कुशलस्सर्वधर्मवित् ।
अयं पृथायास्तनयः कनीयान् पाण्डुनन्दनः ॥ २९॥
कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति ॥ ३०
त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेन्द्राणां किं च त्वं भूषयेः कुलम् ॥ ३१
ततो विदित्वा पार्थश्च प्रतियोत्स्यति वा न वा ।
[3]वृथाकुलसमाचारैर् न युध्यन्ते नृपात्मजाः ॥ ३२

वैशम्पायनः—

एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।

---

1. घ—सर्वज्ञो विदुरस्तत्र शनैरेत्य पृथां शुभाम् ।
अज्ञातं जनसङ्घैस्तां समाश्वासयदच्युतः ॥
नेत्रभ्रूसंज्ञया चैव व्यङ्ग्योक्तिवचनैरपि ।
आश्वासयामास शनै श्चन्दनोदकसेचनैः ॥ [अधिकः पाठः]
2. क-ख-ग—पुत्रावज्ञाततत्त्वार्थौ व्रीलिता सा त्ववैक्षत ।
[अधिकः पाठः]
3. घ—आत्मतुल्यमतुल्यं वा प्रतियोत्स्यति वा न वा । [अधिकः पाठः]

बभौ वर्षाम्बुदक्लिन्नं पद्ममागलितं यथा ॥ ३३

दुर्योधनः—

आचार्य त्रिविधा योनी राज्ञां धर्मविनिश्चये ।
सत्कुलीनश्च शूरश्च यश्च सेनां विकर्षति ॥ ३४

अद्भ्योऽग्निर्ब्रह्मणः क्षत्रम् अश्मनो लोहमुत्थितम् ।
तेषां सर्वगतं तेजः स्वासु योनिषु शाम्यति ॥ ३५

अयं हि फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।
तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ ३६

वैशंपायनः—

ततो राजानमामन्त्र्य गाङ्गेयं च पितामहम् ।
अभिषेकस्य संभारान् समानीय द्विजातिभिः ॥ ३७

गोसहस्रायुतं दत्त्वा युक्तानां पुण्यकर्मणाम् ।
अर्होऽयमङ्गराज्यस्य इति वाच्य द्विजातिभिः ॥ ३८

ततस्तस्मिन् क्षणे कर्णस् सलाजकुसुमैर्घटैः ।
काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्द्विजातिभिः ॥ ३९

अभिषिक्तोऽङ्गराज्ये स्म श्रिया युक्तो महाबलः । ३९॥१
स मौलिहारकेयूरैस् सहस्ताभरणाङ्गदैः ।
राजलिङ्गैस्तथाऽन्यैश्च भूषितो भूषणैश्शुभैः ॥ ४०॥१
सच्छत्रवालव्यजनो जयशब्दोत्तरेण च ।

सभाज्यमानो विप्रैश्च प्रदत्त्वा ह्यमितं वसु ॥ ४१॥
उवाच कौरवं राजा राज्ञां मध्ये वृषस्तदा ॥ ४२

कर्णः—

अस्य राज्यप्रदानस्य सदृशं किं ददामि ते ।
तद् ब्रूहि राजशार्दूल कर्तव्यं हि तवानघ ॥ ४३

दुर्योधनः—

अत्यन्तं सख्यमिच्छामि त्वया सह महाबल ॥ ४३॥

वैशम्पायनः—

एवमुक्तस्ततः कर्णस् तथेति प्रत्यभाषत ।
[1]हर्षाच्चोभौ परिष्वज्य परां मुदमवापतुः ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
॥ ७ ॥ संभवपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[अस्मिन्नध्याये ४४॥ श्लोकाः]

---

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥

---

कर्णपितुरधिरथस्य रङ्गप्रवेशः ॥ १ ॥ भीमेन कर्णस्याधिक्षेपः ॥ २ ॥ सर्वेषां रङ्गान्निष्क्रमणम् ॥ ३ ॥

---

वैशंपायनः—

ततस्त्रस्तोत्तरपटस् सप्रस्वेदस्सवेपथुः ।
विवेशाधिरथो [2]राजन् यष्टिप्राणस्खलन्निव ॥ १

---

1. क-ख-ग-घ—अङ्गराजस्य युक्तांश्च दत्त्वा राजपरिच्छदान् ।
2. क-ख-ग-घ—रङ्गं [अधिकः पाठः]

तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः ।
कर्णोऽभिषेकार्द्रशिराः शिरसा तमवन्दत ॥ २

ततः पादाववच्छाद्य पटान्तेन ससंभ्रमम् ।
पुत्रेति परिपूर्णार्थम् अब्रवीद्रथसारथिम् ॥ ३

परिष्वज्य च तस्याङ्गं मूर्धानममरद्युतेः ।
अङ्गराज्याभिषेकार्द्रम् अश्रुभिः पर्यषिञ्चत ॥ ४

तं दृष्ट्वा सूतपुत्रोऽयम् इति निश्चित्य पाण्डवः ।
भीमसेनस्तदा वाक्यं प्रहसन्निदमब्रवीत् ॥ ५

भीमः—

न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।
कुलस्य सदृशः कर्ण प्रतोदोऽयं प्रगृह्यताम् ॥ ६

अङ्गराज्यं च नार्हस्त्वम् उपभोक्तुं नराधम ।
[1]श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ॥ ७

वैशम्पायनः—

एवमुक्तस्ततः कर्णः किंचित् प्रस्फुरिताधरः ।
गगनस्थं विनिश्वस्य दिवाकरमुदैक्षत ॥ ८

---

1. च—खल्विदानीं मया ज्ञातः सूतोदरसमुद्भवः ।
अङ्गराज्यं न पर्याप्तं भवतः कर्ण केवलम् ॥
त्रैलोक्यस्य भवान् प्राप्तः त्वत्समो नास्ति भूमिपः ।
गच्छ पार्थ न योद्धव्यं शुना सह कदा चन ॥
साकं शुना विवदतो ध्रुवं भवति लाघवम् ॥ [अधिकः पाठः]

ततो दुर्योधनः कोपात् उत्पपात महाबलः ।
भ्रातृपप्लवनात् तस्मान्मदोत्कट इव द्विपः ॥ ९
सोऽब्रवीद्भीमकर्माणं भीमसेन[1]मिदं वचः ॥ ९॥

दुर्योधनः—

वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ।
क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना ॥ १०॥
[2]शूराणां च नदीनां च प्रभवो दुर्विभावनः ।
सलिलादुत्थितो वह्निर् येन दग्धं चराचरम् ॥ ११॥
दधीचस्यास्थिभिर्वज्रं कृतं दानवसूदनम् ॥ १२
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि ।
[3]श्रूयते भगवान् देवः सर्वगुह्यमयो गुहः ॥ १३

1. क-ख-ग—मवस्थितम् ।
2. घ—क्षतत्राणात् क्षत्रियस्य क्षत्रत्वं परिकीर्तितम् ॥

भीमः—

कोन्वयं क्षत्रियः कर्णः सूतजः क्षत्रियो नु किम् ।
ब्राह्मण्यां क्षत्रियाज्जातो रथकार इति स्मृतः ॥
नावा नदीसन्तरणं रथकारथ्यमेव च ।
निकृष्टजाते स्सूतस्य अभिषेकः कथं भवेत् ॥
आदिप्रभृति यत्क्षत्रं तद्रामेण विनाशितम् ।
क्षत्रियाया द्विजश्रेष्ठैः क्षत्रमुत्पादितं पुनः ॥
सूतस्य सूतजातेस्तु कथं क्षत्रत्वमुद्भवौ ।
शुनः पुच्छो यदा यूपस् तदाऽसौ राजतामियात् ॥

दुर्योधनः—

[अधिकः पाठः]

3. घ—शरकाननसम्भूतः किं नासौ पूजितोऽभवत् । [अधिकः पाठः]

[1]क्षत्रियासु च ये जाता ब्राह्मणास्तव विश्रुताः ।
[2]आचार्यः कलशाज्जातो शरस्तम्बाद् गुरुः कृपः ॥ १४
भवतां च यथा जन्म तदप्यागमितं नरैः ॥ १४॥
सकुण्डलं सकवचं दिव्यलक्षणलक्षितम् ।
कथमादित्यसङ्काशं सूतोऽमुं जनयिष्यति ॥ १५॥
एवं क्षत्रगुणैर्युक्तं शूरं समितिशोभनम् ।
कथमादित्यसङ्काशं मृगी व्याघ्रं प्रसूयते ॥ १६॥
पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः ।
स्वबाहुबलवीर्येण मया चाज्ञानुवर्तिना ॥ १७॥
यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम् ।
रथमारुह्य पद्भ्यां वा विनामयतु कार्मुकम् ॥ १८॥

वैशम्पायनः—

[3]ततस्सर्वस्य रङ्गस्य हाहाकारो महानभूत् ।
साधुवादानुसंबद्धस् सूर्यश्चास्तमुपागमत् ॥ १९॥
ततो दुर्योधनः कर्णम् आलम्ब्याग्रकरे नृपः ।

---

1. क-ख-ग—क्षत्रिया ब्राह्मणेभ्यश्च भाविता इति विश्रुताः ।
2. क-ख-ग—जातानाहुः क्षत्रियासु ब्राह्मणैः क्षत्रसंक्षये ।
3. घ—श्रुत्वैतद्भीमसेनस्य पार्थस्य च महात्मनः । [अधिकः पाठः]
हृदि कोपस्समभवनि धर्मराजोऽब्रवीदिदम् ॥
धर्मराजः—
राज्यस्य कर्ता गाङ्गेयो धृतराष्ट्रः प्रतापवान् ।
तस्मिंस्तस्मिन् स्थिते चैव दत्तं राज्यमनर्हते ॥
राजा भवेत् सूतसुतः राज्ये कस्मिन सुयोधन ।
मातापित्रोः पूर्वमेव किं त्वं जातो वदाधम ॥

दीपिकाभिः कृतालोकस् तस्माद्रङ्गाद्विनिर्ययौ ॥ २०॥
पाण्डवाश्च सहद्रोणाः सकृपा भरतर्षभाः ।
भीष्मेण सहितास्सर्वे ययुस्स्वं स्वं निवेशनम् ॥ २१॥
अर्जुनेति जनः कश्चित् कश्चित् कर्णेति भारत ।
कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा ॥ २२॥
कुन्त्यांश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम् ।
पुत्रमङ्गेश्वरं स्नेहाच् छन्ना प्रीतिरवर्धत ॥ २३॥
दुर्योधनस्यापि तथा कर्णमासाद्य पार्थिव ।
भयमर्जुनसंजातं क्षिप्रमन्तरधीयत ॥ २४॥

स चापि धीरः कृतशस्त्रविश्रमः
परेण साम्नाऽभ्यवदत् सुयोधनम् ।
युधिष्ठिरस्याप्यभवत् सदा मतिर्
न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ॥ २५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
॥ ७ ॥ संभवपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[अस्मिन्नध्याये २५॥ श्लोकाः]

---

पूर्वतोऽनुवृत्तम्—
शृण्वर्जुन वचो मह्यं भीमसेन भवाञ्छृणु ।
स्थिते भीष्मे किमस्माकं धृतराष्ट्रे स्थिते सति ॥
वैशम्पायनः—
ततः सर्वस्य सैन्यस्य हा — [अधिकः पाठः]

## ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥

गुरुदक्षिणात्वेन जीवतो द्रुपदस्य ग्रहणे द्रोणेनाज्ञापिते तदर्थं तेन सह सर्वशिष्याणां पाञ्चालपुरगमनम् ॥ १ ॥ द्रुपदग्रहणाय पाण्डववर्जं गतानां कौरवाणां तेन पराजयः ॥ २ ॥ तदनन्तरं गतेषु अर्जुनेन द्रुपदग्रहणम् ॥ ३ ॥ जीवग्राहं गृहीत्वा भीमार्जुनाभ्यां समर्पितेन द्रुपदेन द्रोणस्य संवादः ॥ ४ ॥ द्रोणेनार्धराज्यापहारेण मुक्तस्य द्रुपदस्य पुत्रोत्पादनार्थं प्रयत्नः ॥ ५ ॥

---

[1]वैशम्पायनः—

पाण्डवान् धार्तराष्ट्रांश्च कृतास्त्रान् प्रसमीक्ष्य तु ।

---

1. घ—जनमेजयः—

श्रुतावान् वैरनिर्बन्धः किमर्थं कर्णपार्थयोः ।
कौ जातौ पूर्वमेतौ तु के ते दुर्योधनादयः ॥
पाण्डवाश्चैव के पूर्वं वद मे द्विजसत्तम ॥

वैशंपायनः—

शृणु राजन् पुरावृत्तम् आदौ देवयुगे पुरा ।
परस्य ब्रह्मणो जातौ सच्चिदानन्दरूपिणः ॥
मायाप्रकृतिसंयोगाज् जगत्सृष्ट्यर्थमेव हि ।
कल्पेषु ब्रह्मणः कल्पे मेघवाहनसंज्ञिके ॥
कथितं वामनेनेदं नारदाय महात्मने ।
ईश्वरः परमेष्ठी च जातौ पञ्चमुखावुभौ ॥
? तावावा शिदहङ्कारः शिवो ब्रह्माणमब्रवीत् ।
को भवान् पञ्चवदनोः मम प्रतिनिधिः किमु ॥

ब्रह्मा—

अहमेवास्य जगतः सृष्ट्यादेः कारणं महत् ।
स्रष्टा पालयिता हर्ता जगतोऽस्याहमेव च ॥

वैशम्पायनः—

त्वं कः पञ्चाननो ब्रूहि विधिनेत्थं प्रकोपितः ।
ईश्वरोऽथ रुषाऽभ्येत्य ब्रह्मणो मध्यमं शिरः ॥
कनिष्ठाङ्गुलिजेनैव नखेन समकृन्तयत् ।
तच्छिरो ब्रह्मणः कृत्तं संसक्तमभवत् करे ॥
तदाप्रभृति लोकेषु कपालीत्युच्यते बुधैः ।
ब्रह्मणस्तच्छिरोदेशात् सहजं कवचं दधत् ॥
कुण्डले सहजे चैव खड्गं चर्म च भारत ।
हिरण्यकवची नाम्ना कश्चित्प्रादुरभून्महान् ॥
संवदन् किं करोमीति परमेष्ठिनमब्रवीत् ।
सोभिद्रुताद्धरं हन्तुं सोऽप्यधावद्धरिं जवात् ॥
कौ युवामागतावत्र मत्समीपं भिया रुषा ।
किमर्थं भवतोर्युद्धमहं वा करवाणि किम् ॥
एनं जहि हरे रौद्रं मां हन्तुं समुपागतम् ।
इत्युक्त्वा हरये भर्गः पूर्ववृत्तान्तमुक्तवान् ॥
हरिर्हरेणैवमुक्तो हरिराह पुनर्हरम् ।
ममेदं दक्षिणांसं त्वं त्रिशूलेन तु द्रुतम् ॥
एवमुक्तस्त्रिशूलेन हरेरंसं जघान ह ।
त्रिभ्यो व्रणेभ्यो रक्तं तत्तिस्रो धारा बभूविरे ॥
ऊर्ध्वस्रोतोऽभवज्ज्योतिः मध्यमात्पुरुषोऽजनि ।
अधस्स्रोताच्छाकजातं सर्वप्राणभृतां हितम् ॥
सहस्रकवची नाम्ना विष्णुरक्तोद्भवो नरः ।
कोदण्डं च दधद् बाणां स्तस्माद्दीर्घप्रमाणतः ॥
किं करोमीति ते विष्णो वदन्तं केशवोऽब्रवीत् ।
रुद्र द्रौहिणमेनं त्वं जहि मेऽनुग्रहाद्बलात् ॥
हरिणाऽभिहितस्यास्य तस्य चैवोभयोरभूत् ।
दिव्यं वर्षशतं पूर्णं युद्धमासीन्नृपोत्तम ॥
जयेच्छोरेकाहमिव दिवारात्रं निरन्तरम् ॥
दिव्ये वर्षशतेऽतीते रोषेण महता ऽन्वितः ॥

गुर्वर्थं दक्षिणां काले प्राप्तेऽमन्यत वै गुरुः ॥ १
कृतास्त्रांश्च ततश्शिष्यांश् चोदयामास वै गुरुः ।
अस्त्रशिक्षामनुज्ञातान् गङ्गाद्वारमुपागतान् ॥ २
भारद्वाजस्ततस्तांस्तु सर्वानेवाभ्यभाषत ॥ २॥
इच्छामि दत्तां सहितैर् मह्यं परमदक्षिणाम् ॥ ३
एवमुक्तास्ततस्ते वै शिष्या द्रोणमुपागमन् ।
भगवन् किं प्रयच्छाम आज्ञापयतु नो गुरुः ॥ ४
ततश्शिष्यान् समाहूय आचार्यस्समचोदयत् ।
द्रोणस्सर्वानशेषेण दक्षिणार्थे महीपते ॥ ५

द्रोणः—

पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि ।
पर्यानयत भद्रं वः सा स्यात् परमदक्षिणा ॥ ६

---

पूर्वतोऽनुवृत्तम्—

बलेन विष्णोराविष्टो नरो जग्राह पादयोः ।
भ्रामयित्वा शतगुणमुत्क्षिक्षेप रिपौ रुषा ॥
रविस्तं प्रतिजग्राह सर्वलोकहिताय च ।
नरश्च प्रेषितस्तेन हरिणा वज्रिणं गतः ॥
हिरण्यकवची भानौ सहस्रकवची हरौ ।
तावेव राजंस्त्रेतायां वालिसुग्रीवसंज्ञकौ ॥
रामाभिधाने च हरौ पुनस्तावेव भूतले ।
कर्णार्जुनाभिधेयौ च हरौ कृष्णे यदोः कुले ॥
एवं कर्णार्जुनौ राजंस्त्रिजन्मकृतशात्रवौ ।
शतं दुर्योधनादीनामविवेकशतं विदुः ॥
विवेकपञ्चमं पार्थां गुह्यमेतन्मयोदितम् ।
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ [अधिकः पाठः]

वैशंपायनः—

तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः ।
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ॥ ७
[1]ततोऽभिजग्मुः पाञ्चालं क्रोशन्तः कौरवर्षभाः ।
[2]दुर्योधनश्च कर्णश्च युयुत्सुश्च महाबलः ॥ ८
दुःशासनो विकर्णश्च जलसन्धस्सुलोचनः ॥ ८॥
एते चान्ये च बहवः कुमारा बहुविक्रमाः ।
अहंपूर्वमहंपूर्वम् इत्येवं क्षत्रियर्षभः ॥ ९॥
[3]ततो वररथारूढाः कुमारास्सादिभिस्सह ।
प्रविश्य नगरं सर्वे राजमार्गमुपाययुः ॥ १०॥
[4]तस्मिन् काले तु पाञ्चालः श्रुत्वा दृष्ट्वा महद्बलम् ।
भ्रातृभिस्सहितो राजंस् त्वरया निर्ययौ गृहात् ॥ ११॥

---

1. घ—युष्मासु के पूर्वमेव शीघ्रं मेऽभीष्टदक्षिणाम् ।
के मे प्रियतमाश्शिष्याः केभ्यस्तुष्टो भवाम्यहम् ॥
इत्युक्ते गुरुणा राजा कर्णो दुर्योधनस्तदा ॥ [अधिक. पाठः]
2. घ--दुःशासनो युयुत्सुश्च विकर्णश्च महारथः ।
दुर्मुखो दुस्सहश्चैव जलसन्धस्सुलोचनः ॥
3. घ—स्वपराज्ञातसत्त्वाश्च स्वाज्ञातबलपौरुषाः । [अधिकः पाठः]
4. घ—कुतस्त्योऽयं महाघोष इति पृष्टे नृपे जगुः ।
कौरवा योद्धुमायान्ति भवता कारणं विना ॥
राधेयप्रमुखा वीरा धार्तराष्ट्रा इति प्रभो ॥
इति कञ्चुकिनस्सर्वे वेत्रहस्ताः पृथक्पृथक् ।
शीघ्रं निर्याहि राजेन्द्र भिन्दन्ति च पुरं महत् ॥
[अधिकः पाठः]

ततस्तु कृतसन्नाहा यज्ञसेनसहोदराः ।
शरवर्षाणि मुञ्चन्तः प्रणेदुस्सर्वतोदिशम् ॥ १२॥
ततो रथेन शुभ्रेण समासाद्य तु कौरवान् ।
यज्ञसेनश्शरान् घोरान् ववर्ष युधि दुर्जयः ॥ १३॥
[1]पूर्वमेव तु संमन्त्र्य पार्थो द्रोणमथाऽब्रवीत् ॥ १४
दर्पोत्सेकः कुमाराणाम् आचार्य द्विजसत्तम ।
[2]एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् ॥ १५
एतैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ॥ १५॥
एवमुक्त्वा तु कौन्तेयो भ्रातृभिस्सहितोऽनघः ।
अर्धक्रोशे तु नगराद् अतिष्ठद्बहिरेव सः ॥ १६॥
द्रुपदः कौरवान् दृष्ट्वा प्रधावत समन्ततः ।
शरजालेन महता मोहयन् कौरवीं चमूम् ॥ १७॥
तमुद्यन्तं रथेनैकम् आशुकारिणमाहवे ।
अनेकमिव सन्त्रासान्मेनिरे सर्वकौरवाः ॥ १८॥
द्रुपदस्य शरा घोरा विचेरुस्सर्वतोदिशम् ॥ १९॥

1. घ—ते पूर्वमेव संमन्त्र्य पाण्डवा जनमेजय ।
मतं यौधिष्ठिरं ज्ञात्वा पार्थो द्रोणमथाब्रवीत् ॥ [अधिकः पाठः]
2. घ—बलावलेपः सुमहान् अविवेकपरस्तदा ।
यद्येभिर्विजये प्राप्ते हर्षो नः परमो भवेत् ॥
यद्येभिस्सह योत्स्याम अस्माकं च जयो यदि ।
जयकीर्तेर्भाजनंस्युः कर्णदुर्योधनादयः ॥ [अधिकः पाठः]

[1]ततश्शङ्खाश्च भेर्यश्च मृदङ्गाश्च सहस्रशः ।
प्रावाद्यन्त महाराज पाञ्चालानां निवेशने ॥ २०
[2]सिंहनादश्च संजज्ञे पाञ्चालानां महात्मनाम् ।
धनुर्ज्यातलशब्दश्च संस्पृशद् गगनं महत् ॥ २१
दुश्शासनो विकर्णश्च सुबाहुर्दीर्घलोचनः ।
दुर्योधनश्च संक्रुद्धश् शरवर्षैरवाकिरन् ॥ २२
सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः ।
व्यधमत्तान्यनीकानि तत्क्षणादेव भारत ॥ २३
दुर्योधनं विकर्णं च कर्णं चापि महाबलम् ।
नानानृपसुतान् वीरान् सैन्यानि विविधानि च ॥ २४
अलातचक्रवत्सर्वाश् चरन् बाणैरतर्पयत् ॥ २४॥
दुश्शासनं च दशभिर् विकर्णं विंशकैश्शरैः ।
शकुनिं विंशकैस्तीक्ष्णैर् दशभिर्मर्मभेदिभिः ॥ २५॥
कर्णदुर्योधनौ चोभौ शरैस्सर्वाङ्गसन्धिषु ।
अष्टाविंशतिभिस्सर्वैः पृथक् पृथगरिन्दमः ॥ २६॥
सुबाहुं पञ्चभिर्विद्ध्वा तथाऽन्यान् विविधैश्शरैः ।
विव्याथ सहसा भूयो ननाद बलवत्तरम् ॥ २७॥

1. क-ख-ग—शुश्रुवुस्सिंहनादांश्च पाण्डवास्सुमहाबलाः । [अधिकः पाठः]
2. घ—प्राणांस्तेषां विच्छिन्दन्तो यमदूता इवाशुगाः । [अधिकः पाठः]

विनद्य कोपात् पाञ्चालस् सर्वशस्त्रभृतां वरः ।
धनूंषि रथयन्त्रं च हयाञ्छत्रध्वजानपि ॥ २८॥
चकर्त सर्वपाञ्चालाः प्रणेदुस्सिंहस्सर्पवत् ॥ २९
ततस्तु नागरास्सर्वे मुसलैर्यष्टिभिस्तदा ।
अभ्यवर्षन्त कौरव्यान् वर्षमाणा घना इव ॥ ३०
सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा ॥ ३०॥
श्रुत्वा तु तुमुलं शब्दं नागराणां महारथाः ।
द्रवन्ति स्म नदन्ति स्म क्रोशतः पाण्डवान् प्रति ॥ ३१॥
पाञ्चालशरभिन्नाङ्गो भयमासाद्य वै वृष ।
कर्णो रथादवप्लुत्य पलायनपरोऽभवत्[1] ॥ ३२॥
[2]पाण्डवास्तु स्वनं श्रुत्वा आर्तानां रोमहर्षणम् ।
[3]अभिवाद्य ततो द्रोणं रथानारुह्य पाण्डवाः ॥ ३३॥

---

1. घ—पार्थार्जुन महाबाहो पाह्यस्मान्द्रुपदाहतान् ।
पौरैरपि हतान् राजन् धर्मपुत्र तवानुजान् ॥
लगुडैः शर्पिदण्डैश्च लोष्ठपाषाणमुष्टिभिः ।
पृष्ठे च ताडितास्सर्वे शरशक्तियष्टितोमरैः ॥
छिन्ना भिन्नतनुत्राणास्सर्वे मर्मसु ताडिताः ।
काम्पिल्यै निर्ययुर्भीताः क्रोशन्तः पाण्डवान् प्रति ॥
कर्णदुर्योधनौ पूर्वं नगरात्तौ विनिर्गतौ ।
सर्वेषु निर्गतेष्वेषु दृष्ट्वा तान् कुरुनन्दनान् ॥ [अधिकः पाठः]

2. क-ख—न पाण्डुपुत्रास्त्र द्रोणमेक एव वनं ययौ । [अधिकः पाठः]

3. घ—घोरमार्तस्वरं राजन् भीमोऽभूत्प्रीतिमान्भृशम् ।
अर्धराज्यं पुनर्देहि सूतपुत्राय कौरव ।
साहसस्यास्य कर्णस्य भीमः कौरवमब्रवीत् ॥ [अधिकः पाठः]

युधिष्ठिरं निवार्याशु मा युद्धमिति पाण्डव ।
माद्रेयौ चक्ररक्षौ तु फल्गुनस्तु तदाऽकरोत् ॥ ३४॥
सेनाग्रगो भीमसेनस् तदाऽभूद् गदया सह ।
तदा शङ्खध्वनिं कृत्वा भ्रातृभिस्सहितोऽनघः ॥ ३५॥
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ३६
पाञ्चालानां ततस्सेनाम् उद्धूतार्णवनिस्स्वनाम् ।
[1]भीमसेनो महाबाहुर् दण्डपाणिरिवान्तकः ॥ ३७
प्रविवेश महासेनां मकरस्सागरं यथा ॥ ३७॥
[2]स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः ॥ ३८
सुयुद्धकुशलः पार्थो बाहुवीर्येण चातुलः ।
अहनत्कुञ्जरानीकं गदया कालरूपधृक् ॥ ३९

---

1. घ—स्थितामभिमुखं पार्थो युगान्तज्वलनोपमः ।
[अधिकः पाठः]

2. घ—अद्रीणामिव सङ्घातं ज्वलदोषधिदीपितम् ।
विद्युत्स्तनितगम्भीरं मेघबृन्दमिवाम्बरे ॥
पाञ्चालानां गजानीकं पोथयन् गदया बली ।
कुर्वन् भीमो महामार्गं ययावग्रेऽल्पलीलया ॥
तेन मार्गेण पार्थोऽपि कम्पयन्नरिणां बलम् ।
पूरयन् रथघोषेण निघ्नञ् शत्रुबलं शरैः ॥
विस्मापयन्ननीकानि ह्लादयन् सुहृदां मनः ।
पूरयञ्छरजालेन दिशो दश ययौ रणम् ॥
[अधिकः पाठः]

[1]ते गजा गिरिसङ्काशाः क्षरन्तो रुधिरं बहु ।
[2]भीमसेनस्य गदया भिन्नमस्तकपिण्डकाः ॥ ४०
पतन्ति द्विरदा भूमौ वज्रघातादिवाचलाः ॥ ४०॥
[3]गजानश्वान् रथांश्चैव पातयामास पाण्डवः ॥ ४१

---

1. घ—दर्शयन् हस्तकुशलं पाञ्चालान् व्यथमच्छरैः ।
अनिघ्नत् कांश्चन नरान् द्रावयन् भीषयञ्छरैः ॥
रणाजिरे चरन् पार्थः क्रीडन्निव महारथैः ।
यत्र यत्र रणे पार्थो विचचार शरान् किरन् ॥
तत्र तत्र द्रवन्ति स्म पाञ्चालानां महारथाः ।
विचरन्तं वने घोरे सिंहं दृष्ट्वेव वारणाः ॥
पदातिसङ्घाः पार्थेन शरैः पृष्ठेषु ताडिताः ।
प्राद्रवन्तो विरेजुस्ते पर्णानीवाभवं स्तदा ॥
भीमोऽपि गदया मत्तान् क्ष्वेलितास्फोटितस्वनैः ।
महतां सिंहनादेन गजान् विद्रावयद्बली ॥ [अधिक· पाठः]
2. घ—आस्येन पुष्कराग्रेण पलायन्त दिशो दश । [अधिकः पाठः]
3 घ—अश्वाश्च मर्दिता योधैस्समारूढा धनुर्धरैः ।
कण्ठघण्टाध्वनत्कारा निर्ययुः फूत्कारवायवः ॥
वेगरज्ज्वायतानेकवर्णवालप्रकीर्णकाः ।
भयसंत्रस्तसारोहा कशाघातप्रघातिताः ॥
पार्थज्यातलघोषेण भीमभीमरवेण च ।
बाणपातै र्गदाघातैर् द्रवन्तो रेजिरे हयाः ॥
शरत्काले श्वेतपक्षा हंसानामिव पङ्क्तयः ।
सदश्वा सारथियुता युक्तध्वजपताकिनः ॥
नानाचर्मपरीधाना घण्टाकिङ्किणिमालिनः ।
सुवर्णरत्नमालादि सर्वप्रहरणान्विताः ॥
दंशितारूढरथिनः सव्यसाचि शरार्दिताः ॥
भीतयन्तप्रतोदाग्रपृथुविद्रुतवाजिनः ।
रथिनां च रथास्सर्वे भेजिरे ते दिशो दश ॥

पदातीन् नागरांश्चैव नावधीदर्जुनाग्रजः ।
गोपाल इव दण्डेन यथा पशुगणान् वने ॥ ४२
चालयन् रथनागाश्वान् संचचाल वृकोदरः ॥ ४२॥
भरद्वाजप्रियं कर्तुम् उद्यतः फल्गुनस्तदा ।
पार्षतं शरजालेन क्षिप्रं प्रच्छाद्य पाण्डवः ॥ ४३॥
हयौघांश्च गजौघांश्च रथौघांश्च समन्ततः ।
पातयन् समरे राजन् युगान्ताग्निरिव ज्वलन् ॥ ४४॥
ततस्ते हन्यमाना वै पाञ्चालास्सृञ्जयास्तथा ।
शरैर्नानाविधैस्तूर्णं पार्थं प्रच्छाद्य सर्वशः ॥ ४५॥
सिंहनादरवान् कृत्वा समयुध्यन्त पाण्डवम् ॥ ४६
तद्युद्धमभवद्धोरं सुमहाद्भुतदर्शनम् ।
सिंहनादस्वनं श्रुत्वा नामृष्यत धनंजयः ॥ ४७
ततः किरीटी सहसा पाञ्चालं समभिद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ४८
शीघ्रमभ्यस्यतो बाणान् संदधानस्य चानिशम् ।
नान्तरं ददृशे किंचित् कौन्तेयस्य [1]तरस्विनः ॥ ४९

---

पूर्वतोऽनुवृत्तम्—

गजानश्वान् रथांश्चैव द्रावयामास पाण्डवः ।
पदातीन् नागरांश्चैव नावधीदर्जुनाग्रजः ॥
अर्जुनो नावधीच्चैव भीषयामास केवलम् । [अधिकः पाठः]

1. क-ख-घ—यशस्विनः

न दिशो नान्तरिक्षं च तदा नैव च मेदिनी ।
अदृश्यत महाराज [1]तत्र किंच न संयुगे ॥ ५०
[2]बाणान्धकारे बलिना कृते गाण्डीवधन्वना ।
पाञ्चालानां कुरूणां च साधु साध्विति निस्वनः ॥ ५१
तत्र तूर्यनिनादश्च शङ्खानां च महास्वनः ।
सिंहनादश्च संजज्ञे साट्टहासेन मिश्रितः ॥ ५२
ततः पाञ्चालराजस्तु तथा सत्यजिता सह ।
त्वरमाणोऽभिदुद्राव महेन्द्रं शम्बरो यथा ॥ ५३
महता शरवर्षेण पार्थः पाञ्चालमावृणोत् ॥ ५३॥
ततो हलहलाशब्द आसीत् पाञ्चालके बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ ५४॥
[3]दृष्ट्वा पार्थं तदायान्तं सत्यजित् सत्यविक्रमः ।
[4]पाञ्चालं वै परिप्रेप्सुर् धनञ्जयमभिद्रवत् ॥ ५५॥
ततस्त्वर्जुनपाञ्चालौ युद्धाय समुपागतौ ।
व्यक्षोभयेतां तौ सैन्यम् इन्द्रवैरोचनाविव ॥ ५६॥

1. क-ख-ग—बाणभूतमिवाभवत् ।
2. क-ख-ग—नादृश्यत तदा राजंस्तत्र किंचन संयुगे । [अधिकः पाठः]
3. घ—असौ पार्थहरिर्बद्धुं गृध्नु द्रुपदहस्तिनम् [अधिकः पाठः]
4. घ—दुष्प्रापार्थं जिघृक्षन्तं पाञ्चालनृपतिं रणे ।
रथमाश्रित्य वेगेन गृहीतशरकार्मुकः ।
प्रवदंस्तिष्ठतिष्ठेति धनञ्जयमभिद्रवत् ॥ [अधिकः पाठः]

ततस्सत्यजितं पार्थो दशभिर्मर्मभेदिभिः ।
विद्ध्वाथ बलवद्राजंस् तदद्भुतमिवाभवत् ॥ ५७॥
ततश्शरशतैः पार्थं पाञ्चालश्शीघ्रमार्दयत् ॥ ५८
पार्थस्तु शरवर्षेण च्छाद्यमानो महारथः ।
वेगं चक्रे महावेगो धनुर्ज्यामवमृज्य च ॥ ५९
ततस्सत्यजितश्चापं छित्वा राजानमभ्ययात् ॥ ५९॥
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं सरथं पार्थं विद्ध्याथ सत्वरम् ॥ ६०॥
स तं न ममृषे पार्थः पाञ्चालेनार्दितो मृधे ॥ ६१
ततस्तस्य विनाशार्थं सत्वरं व्यसृजच्छरान् ।
हयान् ध्वजं धनुर्मुष्टिम् उभौ तौ पार्ष्णिसारथी ॥ ६२
[1]स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ।
हयेषु विनिकृत्तेषु विमुखोऽभवदाहवे ॥ ६३
स सत्यजितमालोक्य तथा विमुखमाहवे ।
वेगेन महता राजन्नभ्यधावत पार्षतम् ॥ ६४
तदा चक्रे महद्युद्धमर्जुनो जयतां वरः ।
तस्य पार्थो ध्वजं चित्रं धनुश्चोर्व्यामपातयत् ॥ ६५
पञ्चभिस्तस्य विद्ध्वाथ हयान् सूतं च सायकैः ॥ ६५॥

1. घ—छित्वा निहत्य यन्तारं द्रावयामास भूपतिम् [अधिकः पाठः]

तत उत्सृज्य तच्चापम् आददानश्शरावरम् ।
खड्गमुद्यम्य कौन्तेयस् सिंहनादमथाकरोत् ॥ ६६॥
[1]पाञ्चालस्य रथस्यैषाम् आप्लुत्य सहसा बली ।
पाञ्चालरथमास्थाय अवित्रस्तो धनञ्जयः ॥ ६७॥
विक्षोभ्याम्भोनिधिं तार्क्ष्यस् तं नागमिव सोऽग्रहीत् ॥ ६८
[2]ततस्तु सर्वपाञ्चाला विद्रवन्ति दिशो दश ॥ ६८॥
दर्शयन् सर्वसैन्यानां बाह्वोर्बलमथात्मनः ।
[3]सिंहनादस्वनं कृत्वा निर्जगाम धनञ्जयः ॥ ६९॥

---

1. घ—उत्प्लुत्य स्वरथोपस्थात् पाञ्चालस्य रथैपिकाम् । [अधिकः पाठः]

2. घ—अधरे ऽङ्कुलमादाय कुर्वन् किलकिलारवम् ।
प्रसार्य वामहस्तेन सशरं दक्षिणं करम् ॥
गृहीत्वाऽस्य समाक्षिप्य तं नागमिव सोऽग्रहीत् ।
गृहीतं द्रुपदं दृष्ट्वा पाञ्चाला भयविह्वलाः ।
हस्तैश्चटचटां कृत्वा प्राक्रोशन् भयपीडिताः ॥ [अधिकः पाठः]

3. घ—पश्यन्तश्चासकृत्पश्चादाह्वयन्तः परस्परम् ।
दर्शयन् सर्वसैन्यानां बाह्वोर्बलमथात्मनः ॥
सिंहवद्विनदन् भीममायुध्यस्व वदन्मुदा ।
इतः परं न भेतव्यं युष्माभिरिति सान्त्वयन् ॥
भीतांश्च द्रवतो दिक्षु निर्जगाम पुराद्बहिः ।
द्रुपदस्य तदा ग्रस्तः पार्थेनामिततेजसा ॥
विस्मयेन च दैन्येन समाविष्टो बभूव ह ।
उत्साहं पौरुषं वीर्यं धैर्यं गाम्भीर्यमेव च ॥
सत्यं बलं च शौर्यं च धार्ष्ट्यं बुद्धिविनिश्चयम् ।
दृष्टिं मुष्टिं च सन्धानं हस्तलाघवमेव च ॥

आयान्तमर्जुनं दृष्ट्वा कुमारास्सहितास्तदा ।
ममृदुस्तस्य नगरं द्रुपदस्य महात्मनः ॥ ७०॥

अर्जुनः—

संबन्धी कुरुवीराणां द्रुपदो राजसत्तमः ।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ॥ ७१॥

[1]वैशंम्पायनः—

भीमसेनस्तदा राजन्नर्जुनेन निवारितः ।
अतृप्तो युद्धधर्मेषु न्यवर्तत महारथः ॥ ७२॥
[2]ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि ।
[3]उपजह्रुस्सहामात्यं द्रोणाय भरतर्षभाः ॥ ७३॥
[4]भग्नदर्पं हृतधनं तथा वशमुपागतम् ।

---

पूर्वतोऽनुवृत्तम्—

सौष्ठवं युद्धकौशल्यं दूरपातित्वमेव च ।
एतदादिगुणग्रामं दृष्ट्वा विस्मयमागमत् ॥
पूर्वोक्तं स्मरतो वाच्यं द्रोणेन दृढमन्युना ।
दृष्ट्वा लब्ध प्रतीकारं कृतिमात्मनि भूपतिः ।
दैन्यं जगाम मनसा स्मरन् पूर्वोक्तमात्मनः ॥
आयान्तमर्जुनं [अधिकः पाठः]

1 घ—तद्युद्धाद्विनिवर्तस्व वृथा त्वं नावधीर्जनम् ।
वैरं न द्रुपदे नोऽस्ति जीवदानं प्रदीयताम् ॥ [अधिकः पाठः]

2. ग—नागच्छत्तस्य नगरीं काम्पिल्यां कुरुनन्दन । [अधिकः पाठः]

3. घ—तिर्यक्कटाक्षैः पश्यन्तः कर्णदुर्योधनौ तदा ।
? वामहस्तैस्त्वयिप्रांश्च विकृषाणः परस्परम् ॥ [अधिकः पाठः]

4. घ—विक्रम्य वामेन बद्ध्वा बलीन्द्रमिव वज्रिणे । [अधिकः पाठः]

स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥ ७४॥

द्रोणः—

प्रमृज्य तरसा राष्ट्रं पुरं ते मृदितं मया ।
प्राप्य जीवन् रिपुवशं सखिपूर्वं किमिष्यते ॥ ७५॥

वैशंपायनः—

एवमुक्त्वा प्रहस्यैनं निश्चित्य पुनरब्रवीत् ॥ ७६

द्रोणः—

मा भैः प्राणभयाद्राजन् क्षमिणो ब्राह्मणा वयम् ॥ ७६॥
आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह ।
तेन संवर्धितो हर्षस् त्वया मे क्षत्रियर्षभ ॥ ७७॥
प्रार्थयेऽहं त्वया सख्यं पुनरेव नरेश्वर ।
वरं ददामि ते राजन् राज्यस्यार्धमवाप्नुहि ॥ ७८॥
अराजा किल नो राज्ञस् सखा भवितुमर्हति ।
अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ७९॥
[1]राजाऽसि दक्षिणे कूले भागीरथ्याऽहमुत्तरे ।
सखायं मां विजानीहि पाञ्चाल यदि मन्यसे ॥ ८०॥

---

1. घ—येनाहृतं यस्य राज्यं दुर्बलस्य बलीयसा ।
दुर्बलस्य न तद्राज्यं बलिनो राज्यमुच्यते ॥
राजा राज्ञस्सखा लोके इत्युक्तं हि त्वया पुरा ।
राजाऽहमभवं तस्मात् त्वं च राजा भवाभिभो ॥[अधिकः पाठः]

द्रुपदः—

अनाश्चर्यमिदं ब्रह्मन् विक्रान्तेषु महात्मसु ।
प्रीये त्वयाहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम् ॥ ८१॥

वैशम्पायनः—

एवमुक्तस्तु तं द्रोणो मोक्षयामास भारत ।
सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् ॥ ८२॥

आसन्दीमथ गङ्गायास् तीरे जनपदायुताम् ।
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ ८३॥

दक्षिणांश्चैव पाञ्चालान् यावच्चर्मण्वतीं नदीम् ।
अहिच्छत्रं च विषयं भारद्वाजोऽभ्यपद्यत ॥ ८४॥

एवं राज्यमहिछत्रं पुरा बहुधनान्वितम् ॥
युधा निर्जित्य पार्थेन द्रोणाय प्रतिपादितम् ॥ ८५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

॥ ७ ॥ संभवपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[अस्मिन्नध्याये ८५॥ श्लोकाः]

---

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

द्रुपदेन द्रोणविजयाय पुत्रोत्पादनार्थं उपयाजगमनम् ॥ १ ॥ उपयाजेन याजोपसर्पण कथनम् ॥ २ ॥ याजेन द्रुपदस्य वैतानाग्नौ धृष्टद्युम्न पाञ्चल्योरुत्पादनम् ॥ ३ ॥

---

वैशम्पायनः—

द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।
क्षात्रेण च बलेनास्य नाऽशशंसे पराजयम् ॥ १
हीनं विदित्वा चात्मानं ब्राह्मणेन बलेन च ।
द्रुपदस्त्वमर्षणाद्राजन् कर्मसिद्ध्यै द्विजोत्तमान् ॥ २
[1]अन्विच्छन् परिचक्राम ब्राह्मणावसथान् बहून् ॥ २॥
[2]नास्ति श्रेष्ठं ममापत्यं धिग्बन्धूनिति च ब्रुवन् ॥ ३
निश्वासपरमो ह्यासीद् द्रोणप्रतिचिकीर्षया ॥ ३॥
न सन्ति मम मित्राणि द्रोणेऽस्मिन्नास्ति वीर्यवान् ।
[3]पुत्रजन्म परीप्सन् वै पृथिवीमन्वयादिमाम् ॥ ४॥

---

1. घ—कथमुत्पत्स्यते मह्यं द्रोणहन्ता सुतो बली ।
अर्जुनाय प्रदातु मे कन्या चाप्रतिमा भुवि ॥
चिन्तयन्निति भूपालो दिवारात्रं च निश्वसन् ।
द्रुपदोऽमर्षणाद्राजा कर्मसिद्धिं द्विजोत्तमान् ॥ [अधिकः पाठः]

2. घ—अमात्यो नास्ति मे श्रेष्ठः बान्धवाश्चाप्रसंमताः ॥ [अधिकः पाठः]

3. घ—न सन्ति बलिनः पुत्रास्सङ्ग्रामे विजिगीषवः ।
इति चिन्ताकुलो राजा निश्श्वासपरमोऽभवत् ।
असुखश्च विनिद्रश्च द्रोणाप्रियचिकीर्षया ॥ [अधिकः पाठः]

[1]प्रभावशिक्षाविनयाद् द्रोणस्यास्य बलेन च।
कर्तुं प्रयतमानो ऽपि न शशाक पराजयम् ॥ ५॥
अभितस्सोऽथ कल्माषीं गङ्गातीरे परिभ्रमन्।
ब्राह्मणावसथं पुण्यम् आससाद महीपतिः ॥ ६॥
तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः।
[2]तदैव तौ महाभागौ सोऽपश्यत्संशितव्रतौ ॥ ७॥
याजोपयाजौ ब्रह्मर्षी श्राम्यन्तौ पृषतात्मजः ॥ ८
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ।
अरण्ये युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ॥ ९
स उपामन्त्रयामास सर्वकामैरतन्द्रितः।
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ॥ १०
प्रपेदे छन्दयन् कामैर् उपयाजं धृतव्रतम् ॥ १०॥
गुरुशुश्रूषणे युक्तः प्रियकृत् सर्वकामदः ॥ ११
पाद्येनासनदानेन तथा ऽर्घ्येण फलैश्च तम्।
अर्चयित्वा यथान्यायम् उपयाजोऽब्रवीत्ततः ॥ १२

उपयाजः—

केन कार्यविशेषेण त्वमस्मानभिकाङ्क्षसे।
कुतश्चायं समुद्योगस् तद् ब्रवीतु भवानिति ॥ १३

---

1. व—पृथ्वीमन्वचरत् सर्वां द्रोणहन्तृपरीप्सया। [अधिकः पाठः]
2. व—एवं परिभ्रमन् देशान् आश्रमांश्च पृथक्पृथक्।
हिमवत्पादपर्यन्ते महाभागौ तपस्विनौ ॥ [अधिकः पाठः]

वैशंपायनः—

स बुद्ध्वा प्रीतिसंयुक्तम् ऋषीणामुत्तमं तदा ।
उवाच छन्दयन् कामैर् द्रुपदस्स तपस्विनम् ॥ १४

द्रुपदः—

येन मे कर्मणा ब्रह्मन् पुत्रस्स्याद्द्रोणमृत्यवे ।
[1]उपयाज चरस्वैतत् प्रदास्याम्यर्बुदं गवाम् ॥ १५

वैशंपायनः—

एवमुक्तस्तु तेनर्षिः प्रत्युवाच पुनश्च तम् ॥ १५॥

उपयाजः—

नाहं फलार्थी द्रुपद योऽर्थी स्यात्तत्र गम्यताम् ॥ १६

वैशम्पायनः—

प्रत्याख्यातस्तु तेनैवं स वै सज्जनसंनिधौ ।
आराधयिष्यन्द्रुपदस् स तं पर्यचरत्ततः ॥ १७
ततस्संवत्सरस्यान्ते द्रुपदं द्विजसत्तमः ।
उपयाजोऽब्रवीद्वाक्यं काले मधुरया गिरा ॥ १८

उपयाजः—

ज्येष्ठो भ्राता [2]न मेऽत्याक्षीत् विचिन्वन् वननिर्झरे ॥ १८॥
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ।

---

1. क—याऽर्जुनस्य भवेद्भार्या या भवेद्वरवर्णिनी । [अधिकः पाठः]
2. क-ख-ग-घ—ममागृह्णाद् विचरन्वै महावने ।

तदपश्यमहं भ्रातुर् असांप्रतमनुव्रजन् ॥ १९॥
विमर्शनं फलादाने नायं कुर्यात् कथं चन ।
यो नापश्यत्फलं दृष्ट्वा दोषांस्तस्याऽऽनुबन्धिकान् ॥ २०॥
विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेत् ॥ २१
संहिताध्ययनस्यान्ते पञ्चयज्ञान्निरूप्य च ।
भैक्षमुञ्छेन [1]संभिन्नं भुञ्जानस्तु तदा ततः ॥ २२
कीर्तयत्येव राजर्षे भोजनस्य रसं पुनः ॥ २२॥
संहिताध्ययनं कुर्वन् वने गुरुकुले वसन् ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते स्म सततं तदा ॥ २३॥
कीर्तयन् गुणमन्नानाम् अथ प्रीतो मुहुर्मुहुः ॥ २४
एवं फलार्थिनस्तस्मान्मन्येऽहं तर्कचक्षुषा ॥ २४॥
तं वै गच्छेह नृपते स त्वां संयाजयिष्यति ॥ २५

वैशम्पायनः—

जुगुप्समानो नृपतिः फलानां कलुषां गतिम् ।
उपयाजवचश्श्रुत्वा द्रुपदस्सर्वधर्मवित् ॥ २६
भृशं संपूज्य पूजार्हम् ऋषिं याजमुवाच ह ॥ २६॥

द्रुपदः—

गोऽयुतानि ददाम्यष्टौ याज याजय मां विभो ।

1. क-ख-ग-घ—सहितं

[1]द्रोणवैरान्तरे तप्तं विषण्णं शरणागतम् ॥ २७॥

ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत् ।
तस्माद्द्रोणभयार्तं मां भवांस्त्रातुमिहार्हति ॥ २८॥

भारद्वाजाग्निना दग्धं संह्लादयितुमर्हसि ।
[2]स हि ब्रह्मविदां श्रेष्ठश् शस्त्रास्त्रेष्वसमो भुवि ॥ २९॥

ततो द्रोणस्तथाऽजैषीत् स हि विग्रहकारणात् ।
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदर्हणः ॥ ३०॥

[3]भारताचार्यमुख्यस्य भारद्वाजस्य धीमतः ।
द्रोणस्य शरजालानि रिपुदेहहराणि च ॥ ३१॥

षडरत्नि धनुश्चास्य खड्गमप्रतिमं महत् ।
स हि ब्राह्मणवेगेन क्षत्रवेगमसंशयम् ॥ ३२॥

प्रतिहत्य चरत्येव भारद्वाजो महामनाः ॥ ३३

---

1. क-ख-ग—द्रोणवैराभितप्तं मां त्वं हि त्रातुमिहार्हसि ।
त्वं हि ब्रह्मविदां श्रेष्ठः क्षत्रान्ते चाप्यनुत्तमः ॥
[अधिकः पाठः]

2. क-ख—येन मे कर्मणा ब्रह्मन पुत्रस्याद्दोणमृत्यवे ।
अर्जुनस्य भवेद्भार्या या भवेद्वरवर्णिनी ।
उपयाजारभस्वैतत् प्रदास्याम्यर्बुदं गवाम् ॥
एवमुक्तस्तु तेनर्षिः प्रत्युवाच पुनश्च तम् ।
भरद्वाजाग्निना दग्धं संह्लादयितुमर्हसि ॥ [अधिकः पाठः]

3. ख— ब्राह्मं तेजो हरेत्तस्य मन्त्राहुतिहुतं यथा ।
न जयेद् क्षत्रियस्तं वै पृथिव्यां कश्चिदग्रणीः ॥[अधिकः पाठः]

कार्तवीर्यसमो ह्येष खट्वाङ्गप्रतिमोऽपि वा ॥ ३३॥
क्षत्रो[1]च्छेदपरायत्तं जामदग्न्यमिवोद्यतम् ।
सहितं क्षत्रवेगेन ब्राह्मवेगेन सांप्रतम् ॥ ३४॥
उपपन्नं हि मन्येऽहं भारद्वाजं यशस्विनम् ॥ ३५
नैषवस्तं पराभूवन् न च प्रासा न चासयः ।
ब्राह्मं तस्य हरेत् तेजो मन्त्राहुतिहुतं यथा ॥ ३६
तस्य ह्यस्त्रबलं घोरम् अप्रसह्यं परैर्भुवि ।
[2]शत्रून् समेत्य जयति क्षत्रं ब्रह्मपुरस्कृतम् ॥ ३७
ब्रह्मक्षत्रे च सहिते ब्रह्मतेजो विशिष्यते ॥ ३७॥
सोऽहं क्षत्रबलाद्दीनो ब्रह्मतेजः प्रपेदिवान् ॥ ३८
द्रोणाद्विशिष्टमासाद्य भवन्तं वेदवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ॥ ३९
द्रोणमृत्युर्यथा मेऽद्य पुत्रो जायेत वीर्यवान् ।
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् ॥ ४०

वैशंपायनः—

तथेत्युक्त्वा तु तं याजो याज्यार्थं वाक्यमब्रवीत् ॥ ४०॥

याजः—

मा भैस्त्वं संप्रदातास्मि कर्मणा भवतस्सुतम् ।

---

1. क-ख-ग—च्छेदाय विहितो जामदग्न्य इवास्थितः ।
2. क-ख-ग—ब्राह्ममुच्चारयंस्तेजो हुताहुतिरिवानलः । [अधिकः पाठः]

क्षिप्रमुत्तिष्ठ चाव्यग्रस् संभारांश्चोपकल्पय ॥ ४१॥

वैशम्पायनः—

एवमुक्त्वा प्रतिज्ञाय कर्म चास्याददे मुनिः ॥ ४२

ब्राह्मणो द्विपदां श्रेष्ठो यथाविधि यथाक्रमम् ॥ ४२॥

याजो द्रोणविनाशाय याजयामास तं नृपम् ॥ ४३

गुर्वर्थे याजयत्कर्म याजस्यापि समीपगः ॥ ४३॥

ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।

आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ॥ ४४॥

उपयाजः—

इह पुत्रो महावीर्यो महातेजा महाबलः ।

इष्यते यद्विधो राजन् भविता स तथाविधः ॥ ४५॥

वैशम्पायनः—

भारद्वाजस्य हन्तारं सोऽभिसन्धाय भूमिपः ।

आजह्रेऽयं तथा यज्ञं द्रुपदः कर्मसिद्धये ॥ ४६॥

ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि ।

कौकिलीं नाम तां तस्य चक्रे वै पुत्रगर्धिनः ॥ ४७॥

सौत्रामणी तं तु पत्नी ततः कालेऽभ्ययात्तदा ।

याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा ॥ ४८॥

याजः—

प्रैहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।

कुमारश्च कुमारी च पितृवंशविवृद्धये ॥ ४९॥

पृषती—

[1]नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च ।
न पत्नी तेऽस्मि सूत्यर्थं तिष्ठ याज मम प्रिये ॥ ५०॥

याजः—

याजेनाश्रपितं हव्यम् उपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात् पृषति प्रेहि तिष्ठ वा ॥ ५१॥

वैशम्पायनः—

एवमुक्ते तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात् कुमारो देवसंमितः ॥ ५२॥
ज्वालावर्णो घोरवर्णः किरीटी वर्म धारयन् ।
वीरस्सखड्गस्सशरो धनुष्मान् विनदन् मुहुः ॥ ५३॥
सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा ॥ ५४
जातमात्रे कुमारे च वाक्किलान्तर्हिताऽब्रवीत् ॥ ५४॥
एष शिष्यश्च मृत्युश्च भारद्वाजस्य धीमतः ।
भयापहो राजपुत्रः पाञ्चालानां यशस्करः ॥ ५५॥
राज्ञश्शोकापहो जात एष द्रोणवधाय हि ॥ ५६
इत्यवोचन्महद्भूतम् अदृश्यं खेचरं तदा ॥ ५६॥
द्वितीयायां च होत्रायां हुते हविषि मन्त्रतः ।

---

1. घ—न क्षालितं मुखं पुण्यान् गन्धान् पिब पिबामि ह ।

कुमारी चापि पाञ्चाली वेदिमध्यात् समुत्थिता ॥ ५७॥
प्रत्याख्याते पृषत्या च याजके भरतर्षभ ।
पुनः कुमारी पाञ्चाली सुभगा वेदिमध्यगा ॥ ५८॥
अन्तर्वेद्यां समुद्भूता कन्या सा सुमनोहरा ॥ ५९
[1]श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ॥ ६०
नीलोत्पलसमो गन्धो यस्याः केशात् प्रवायाति ॥ ६०॥
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणाम् ईप्सिता देववर्णिनी ॥ ६१॥
तां सुजातां गुरुश्रोणीं वागुवाचाशरीरिणी ॥ ६२
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रं निनीषति ।
सुरकार्यमियं काले करिष्यति सुमध्यमा ॥ ६३
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ॥ ६३॥
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुर्सिंहसङ्घवत् ।
न चैनान् हर्षसंपूर्णान् इयं सेहे वसुन्धरा ॥ ६४॥
तथा तु मिथुनं जज्ञे द्रुपदस्य महात्मनः ।
कुमारश्च कुमारी च मनोज्ञौ च नरर्षभ ॥ ६५॥
श्रिया परमया युक्ता क्षात्रेण वपुषा तथा ।
तौ दृष्ट्वा पृषती याजं प्रपेदे सा सुतार्थिनी ॥ ६६॥

---

1. क-ख-ग—सुभगा दर्शनीयाङ्गी कन्या सुभ्रूर्मनोहरा ।[अधिकः पाठः]

न मां विनाऽन्यां जननीं जानीयेतामिमाविति ।
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ॥ ६७॥
तयोस्तु नामनी चक्रुर् द्विजास्संपूर्णमानसाः ॥ ६८
[1]धृष्टत्वादप्रधृष्यत्वात् सर्वमन्यद्भवेदपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ६९
कृष्णेत्येवांभवत् कृष्णा राजन्नेषा च पार्षती ।
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ७०
वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्ततः ॥ ७०॥
[2]धृष्टद्युम्नं तु पाञ्चाल्यम् आनीय द्रुपदात्मजम् ।
उपाकरोदस्त्रहेतोर् भारद्वाजः प्रतापवान् ॥ ७१॥
अमोक्षणीयं दैवं हि एवं मत्वा महामतिः ।
यथावत् कृतवान् द्रोण आत्मकीर्त्यर्थरक्षणात् ॥ ७२॥
सर्वास्त्राणि स तु क्षिप्रम् आप्तवान् दृष्टमात्रया ॥ ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ ७ ॥ संभवपर्वणि सप्तसप्ततितमोऽध्यायः[4] ॥ ७७ ॥
[अस्मिन्नध्याये ७३ श्लोकाः]

---

1. क-ग—धृष्णुत्वादप्रधृष्यत्वा द्धर्माद्दुस्संभवादपि ।
2. च—धृष्टद्युम्नन्तु पाञ्चाल्यम् आत्मनो मृत्युमादरात् ।
3. च—सर्वशस्त्रास्त्रकौशल्यं नैपुण्यं धनुषाप्तवान्
4. क-ख-ग-घ—पञ्चसप्ततितमोऽध्यायः ॥

## ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

द्रुपदोत्पत्तिः ॥ १ ॥

जनमेजयः—

द्रुपदस्यापि विप्रर्षे श्रोतुमिच्छामि संभवम् ।
कथं चापि समुत्पन्नः कथमस्त्राण्यवाप्तवान् ॥ १

एतदिच्छामि भगवंस् त्वत्तश्श्रोतुं द्विजोत्तम ।
कौतूहलं जन्मसु मे कथ्यमानेष्वतीव हि ॥ २

वैशम्पायनः—

राजा बभूव पाञ्चालः पुत्रार्थी पुत्रकारणात् ।
वनं गतो महाराज तपस्तेपे सुदारुणम् ॥ ३

[1]आराधयन् प्रयत्नेन तस्यापत्यस्य कारणात् ॥ ३॥

तस्य संतप्यमानस्य वने मृगगणायुते ।
[2]कालस्तु सुमहान् राजन् प्रत्यगात् सुतकारणात् ॥ ४॥

[3]स तु राजा महावीरस् तपस्तीव्रं समाददे ।
कंचित्कालं वायुभक्षो निराहारस्तथैव च ॥ ५॥

1. घ—अपुत्रः पुत्रकामश्च वनं गत्वा महत्तपः ।
प्रतेपे पुत्रवं राजा गङ्गाकूले तपोवने ॥ [अधिकः पाठः]

2. घ—अतीयान्सुमहान्काल स्तस्य राजन् महात्मनः ।

3. घ—यज्ञसेनो महाराज स तीव्रं तप आदधे ।

[1]तस्य त्वेवं महाबाहोर् वर्तमानस्य भारत ।
कालस्तत्र महाराज व्यत्ययान्नृपसत्तम ॥ ६॥
ततो नातिचिरात्काले वसन्ते कामदीपने ।
फुल्लाशोकवने चैव प्राणिनां सुमनोरमे ॥ ७॥
नद्यास्तीरमथो गत्वा गङ्गायाः पद्मलोचनः ।
[2]नियमस्थश्च राजाऽऽसीत् तथा भरतसत्तम ॥ ८॥

---

1. घ—तस्यैवं वर्तमानस्य तपस्युग्रे महीपते ।
दशवर्षसहस्रान्ते तद्वने मम भूम्नृप ॥
वसन्त स्सुखदः कालः स तु कामप्रदीपनः ।
फुल्लाशोकवनोद्देशः प्राणिनां सुमनोरमः ॥ [पाठान्तरम्]
2. घ—स पार्श्वतो महाघोरे नियमे तप आस्थितः ॥
तस्मिन् वसन्ते संप्राप्ते वनं तन्मनुजेश्वर ।
अप्सरा मेनका नाम संप्राप्ता तत्तपोवनम् ।
कुसुमानि विचिन्वन्ती राज्ञो दर्शनमागमत्॥
न ददर्श तदा राजन् स्वान्तर्धानगतं नृपम् ।
पुष्पाण्येव विचिन्वाना शिञ्जद्वलयपाणिना ॥
सूक्ष्माम्बरपरीधानां विशालश्रोणिमण्डलाम् ।
मुष्टिसंमितमध्यान्तरां ऊर्ध्वामृज्वायतोदराम् ॥
पीनोन्नतकुचद्वन्द्वां निष्कहारादिशोभिताम् ।
मदनागारदोर्मूलां दृष्ट्वा कामशरार्दितः ॥
राज्ञस्तस्य प्रचस्कन्द तद्गुह्याङ्गप्रदर्शनात् ।
लज्जाभारानतो राजा पद्भ्यां भूमावमर्दयत् ॥
मर्दितस्तस्य तद्रेतः पादाभ्यामुत्थितो नृप ।
मा मां हिंसीर्भवांस्तात सुतस्तेऽहं त्वदुद्भवः ॥
इत्थं वदन्नेव तदा प्रादुर्भूतो मनोहरः ।
उदितादित्यसङ्काशः पूर्णचन्द्रनिभाननः ॥

ततो नातिचिरात्कालाद् वनं तन्मनुजेश्वर ।
संप्राप्ता सहसा राजन् मेनकेति परिश्रुता ॥ ९॥
नद्यास्तीरे चरन्ती वै क्रीडन्ती च पुनः पुनः ।
पुष्पद्रुमान् प्रभञ्जन्ती राज्ञो दर्शनमागमत् ॥ १०॥
न ददर्श तु सा राजंस् तत्र स्थानगतं नृपम् ।
दृष्ट्वा चाप्सरसं तां तु शुक्रं राज्ञोऽपतद्भुवि ॥ ११॥
तच्च राजा तु राजेन्द्र लज्जया नृपतिस्स्वयम् ।
पद्भ्यामाक्रमतायुष्मंस् ततस्तु द्रुपदोऽभवत् ॥ १२॥
ततस्तु तपसा तस्य राजर्षेर्भावितात्मनः ।
पुत्रस्समभव[1]च्चार्द्रात् पादात्तस्यान्तरेण तु ॥ १३॥
ते तस्य ऋषयस्सर्वे समागम्य तपोधनाः ।
नाम चक्रुर्हि विद्वांसो द्रुपदोऽस्त्विति भूमिप ॥ १४॥
स तस्यैवाश्रमे राजन् भरद्वाजस्य भारत ।
ववृधे च सुखं तत्र कामैस्सर्वैर्नृपोत्तम ॥ १५॥
पाञ्चालोऽपि हि राजेन्द्र स्वराज्यं गतवान् प्रभुः ।

---

पूर्वतोऽनुवृत्तम्—
तपस्यतस्ते पुत्रार्थं पुत्रोऽहमभिवादये ।
एवं तस्यसुतो जज्ञे पादयोः स्वस्य रेतसा ॥
आर्द्रयोर्मर्दनाद्राजं स्तेन स द्रुपदोऽभवत् ।
समागत्याथ ऋषयस्तस्य चक्रे तपोधनाः ॥
नाम चक्रुर्हि विद्वांसः [अधिकः पाठः]

1. क-ख-ग—चास्य पादयोरन्तरे तु सः ।

[1]भरद्वाजस्य शिष्यार्थं सुतं दत्वा महात्मनः ॥ १६॥
स कुमारस्ततो राजन् द्रोणेन सहितो वने।
वेदांश्चाधिजगे सङ्गान् धनुर्वेदांश्च भारत ॥ १७॥
परया स मुदा युक्तो विचचार वने सुखम् ॥ १८
तस्यैवं वर्तमानस्य वने वनचरैस्सह ।
कालान्नातिचिराद्राजन् पिता स्वर्गमुपेयिवान् ॥ १९
स समागम्य पाञ्चालैः पाञ्चालेष्वभिषेचितः ।
प्राप्तश्च राज्यं राजेन्द्र सुहृदां प्रीतिवर्धनः ॥ २०
राज्यं ररक्ष धर्मेण यथा चेन्द्रस्त्रिविष्टपम् ॥ २०॥
एतन्मया ते राजेन्द्र यथावत्परिकीर्तितम् ।
द्रुपदस्य जन्म राजर्षेर् धृष्टद्युम्नस्य चैव हि ॥ २१॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि त्रय स्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
॥ ७ ॥ संभवपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

1. क-ख-ग—पौत्रोऽसौ पृषतस्येति पार्षतस्तेन चाभवत् ॥
वैशंपायनः—
एवं स द्रुपदो जज्ञे पाञ्चालस्य महात्मनः ।
भारद्वाजस्य शिष्योऽभून्मृत्युस्तस्यैव सोऽभवत् ॥
द्रुपदेन स्वयं दत्तः शिष्यार्थं द्रोणजन्मनः ॥
धृष्टद्युम्नो महावीरः सुकुमारो गुरुप्रियः ।
द्रोणेन सहितोऽरण्ये अग्निवेश्याश्रमेऽवसत् ॥
वेदानधिजगे [अधिकः पाठः]

## ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

यौवराज्ये युधिष्ठिरस्याभिषेकः ॥ १ ॥ भीमसेनस्य बलरामाद्गदायुद्धशिक्षणम् ॥२॥ द्रोणेनार्जुनस्य ब्रह्मशिरोऽस्त्रविषये नियमकथनम् ॥३॥ भीमार्जुनदिग्विजयेन धृतराष्ट्रचिन्ता ॥ ४ ॥

वैशंपायनः—

धृतराष्ट्रस्तु राजेन्द्र यदा कौरवनन्दनः ।
युधिष्ठिरमजानाद्वै समर्थं राज्यरक्षणे ॥ १
यौवराज्याभिषेकार्थम् अमन्त्रयत मन्त्रिभिः ।
ते तु बुद्ध्वाऽन्वतप्यन्त धृतराष्ट्रात्मजास्तदा ॥ २
[1]ततस्संवत्सरस्यान्ते पाण्डुपुत्रो महायशाः ।
स्थापितो धृतराष्ट्रेण यौवराज्ये युधिष्ठिरः ॥ ३
अदीर्घेण च कालेन कुन्तीपुत्रो युधिष्ठिरः ।
पित्र्यामन्तर्दधे कीर्तिं शीलवृत्तिसमाधिभिः ॥ ४
असियुद्धे रथोद्याने बाहुयुद्धे च पाण्डवः ।
संकर्षणाच्छिक्षितवान् शश्वच्छिक्षां वृकोदरः ॥ ५

1. च—संप्राप्तसर्वविद्योऽसौ द्युमत्सेनसमो बले ।
धर्मसूनुरसौ राजा पूरुराज्येऽभिषेचितः ॥
यदि शासति साम्राज्यं तदा स्याम कथं वयम् ।
वयं के ते भविष्यामः कान्दिशीका भवामहे ॥
इति संचिन्त्यमनसा पर्यतप्यत् सुयोधनः ॥ [अधिकः पाठः]

ते तं बुध्वाऽन्वतप्यन्त धृतराष्ट्रात्मजास्तदा ।
समाप्तविद्यस्सोऽप्यासीद् द्युमत्सेनसमो बले ॥ ६
ततस्संवत्सरस्यान्ते पाण्डुपुत्रो महायशाः ।
गदाबलाभ्यां संपन्नो भ्रातॄणामचरद्वशे ॥ ७
प्रगाढदृढमुष्टौ च लाघवे चातिवेधने ।
लक्ष्यवेध्ये च मोक्षे च तोमरग्रहणेऽपि च ॥ ८
असिशक्तिगदायुद्धे बभूवाप्रतिमोऽर्जुनः ॥ ८॥
क्षुरनाराचभल्लानां विपाठानां सुतेजसाम् ।
ऋजुवक्रविशालानां प्रयोक्ता पाण्डवोऽभवत् ॥ ९॥
[1]लाघवात् सौष्ठवाच्चैव नान्यः कश्चित्तु विद्यते ।
बीभत्सुसदृशो लोक इति द्रोणोऽभ्यभाषत॥ १०॥
गजयुद्धेऽश्वयुद्धे वा रथयुद्धे च पाण्डवः ।
पारगो भुजयुद्धे च बभूवेह धनञ्जयः ॥ ११॥
स्वभावादगमच्छब्दो महीं सागरमेखलाम् ।
नास्त्यर्जुनसमः कश्चिद् इत्येवं मेनिरे जनाः ॥ १२॥
अथाब्रवीत्तदा द्रोणः फल्गुनं जनसंसदि ॥ १३
अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुस्सदा ।
अग्निवेश्य इति ख्यातस् तस्य शिष्योऽस्मि भारत ॥ १४

1. घ—ऋजुवक्रगतीनां च प्रयत्ने पाण्डवोऽभवत् ।

तीर्थात्तीर्थगतं पार्थ मया संक्रामितं त्वयि ।

तपसेदं मया प्राप्तम् अमोघमशनिप्रभम् ॥ १५

अस्त्रं ब्रह्मशिरो नाम यद्दहेत्पृथिवीमपि । १५॥

ददता चास्मि सन्दिष्टो न मनुष्येष्विदं त्वया ।

भारद्वाज प्रमोक्तव्यम् अस्त्रं संयुगमूर्धनि ॥ १६॥

यद्यदन्तार्हितं भूतं किंचिद्युद्धे त्वया सह ।

महातेजस्तदेतेन हन्याशु शस्त्रेण संयुगे ॥ १७॥

अवाप्तं तत्त्वया वीर दिव्यं नान्यस्तदर्हति ॥ १८

समयश्च रक्ष्यो बलवान् ईदृशो हि विशांपते ।

आचार्यदक्षिणां देहि ज्ञातिग्रामस्य पश्यतः ॥ १९

ददामीति प्रतिज्ञाते फल्गुनेनाब्रवीद्गुरुः ।

युद्धे हि प्रतियोद्धव्यो युध्यमानोऽप्यहं रणे ॥ २०

[1]तत्तथेति प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः ।

---

1. क-ख-ग—तत्तथेति प्रतिज्ञाते द्रोणाय कुरुपुङ्गवे ।
द्रोणो जगाद वचनं समालिङ्ग्य च फल्गुनम् ॥ १
यन्मयोक्तं त्वया पार्थ तव लोके नरः क्वचित् ।
सदृशं कारयेन्नैव स[illegible]प्रहरणे युधि ॥ २
तत्कृतं च मया सम्यग् भवत्तुल्यो न विद्यते ।
देवा युधि न शक्तास्त्वां योद्धुं दैत्यान्यजातयः ॥ ३
नाहं त्वत्तो विशिष्टोऽस्मि किं पुनर्यानवारणे ।
एकस्त्वधिको लोके यो हि वृष्णिकुलोद्भवः ॥ ४
कृष्णः कमलपत्राक्षः कंसकालीयसूदनः ।

स जेता सर्वलोकानां सर्वप्रहरणायुधः ॥ ५
नैतावताप्यहं पार्थ भवाम्यनृतवागिह ।
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम ॥ ६
तत्पदं न विजानन्ति ब्रह्मेशानादयोऽपि च ।
तन्नाभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ॥ ७
स एष कर्ता भोक्ता च संहर्ता च जगन्मयः ।
स एव भूतं भव्यं च भवच्च पुरुषर्षभ ॥ ८
नित्यस्सर्वगतः स्थाणु रचलोऽयं सनातनः ।
प्रादुर्भवति योगात्मा पालनार्थं स लीलया ॥ ९
तत्तुल्या हि न जायन्ते न जातो न भविष्यति ।
यत्पदस्य तु माहात्म्यं न मातुं भुवि शक्यते ॥ १०
स हि मातुलजोऽभूत्ते चराचरगुरुः पिता ।
को हि तं जेतुमीहेत जानन्नात्महितं नरः ॥ ११
स्यातश्च ते सखा चासौ तस्य त्वं प्राणवल्लभः ।
स्नेहमभ्यधिकं तस्य तव सख्यमवञ्चितम् ॥ १२
न तेन भवतो युद्धं भविता नर्मतोऽपि वा ।
अपि चार्थे तव पुरा शक्रेण किल चोदितः ॥ १३
गोकुले वर्धमानस्तु नन्दगोपस्य कारणात् ।
ममांशः पाण्डवो लोके पृथिव्यां पुरुषोत्तमः ॥ १४
कौन्तेयावरजः श्रीमान् अर्जुनो मम वीर्यवान् ।
भुवो भारावतरणे साहाय्यं ते करिष्यति ॥ १५
तदर्थमभयं देहि पाहि चास्मत्कृते विभो ।
इत्युक्तः पुण्डरीकाक्षस्तदा शक्रेण फल्गुन ॥ १६
तमुवाच ततश्श्रीमान् शङ्खचक्रगदाधरः ।
जानामि पाण्डवे वंशे जातं पार्थ पितृष्वसुः ॥ १७
पुत्रं परमधर्मिष्ठं सर्वशस्त्रभृतां वरम् ।
पालयामि त्वदंशं तं जीवलोके महाभुजम् ॥ १८
आवयोस्सख्यसदृशं न च लोके भविष्यति ।
यस्तद्भक्तस्स मद्भक्तो यस्तं द्वेष्टि स मामपि ॥ १९

उपसंगृह्य चरणौ युधिष्ठिरवशोऽभवत् ॥ २१

गदायुद्धेऽसियुद्धे च रथयुद्धे च भारत ।
दिव्यमानुषसंभूतान् अवापास्त्रविदां वरः ॥ २२

सर्वांस्तथाऽखिलानस्त्रान् शस्त्राणिच तथा गुरोः ।
सर्वां तामखिलां नीतिं पाताळाधिपतेस्तथा ॥ २३

उद्धवात् सकलां नीतिं भोजाद्बुद्धिमतां वरः ॥ २३॥

अस्त्रे शस्त्रे च शास्त्रे च रथनागाश्वकर्मणि ।
अवाप्य सहदेवोऽपि भ्रातॄणामचरद्वशे ॥ २४॥

द्रोणेनैवं विनीतश्च भ्रातॄणां नकुलः प्रियः ।
चित्रयोधी समाख्यातो बभूवातिरथोदितः ॥ २५॥

त्रिवर्षकृतयत्नैस्तु गान्धाराणामुपप्लवे ।
अर्जुनप्रमुखैः पार्थैः सौवीरास्समरे हताः ॥ २६॥

न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ।

---

पूर्वतोऽनुवृत्तम्—

यन्मे वित्तं तु तत्तस्य तं विनाऽहं न जीवये ।
इति पार्थ पुराशक्रम् आह सर्वेश्वरो हरिः ॥ २०
तस्मात्त्वापि सदृशस्तं विनाभ्यधिकः पुमान् ।
न चेह भविता लोके तमेकं शरणं व्रज ॥ २१
शरण्यस्सर्वदेवानां देवदेवो जनार्दनः ॥ २१॥

[अधिकः पाठः]

सोऽर्जुनेन वशं नीतो स राजा यवनाधिपः ॥ २७॥

अतीव बलसंमत्तस् त्वतिमानी कुरून् प्रति ।
कुन्तलो नाम सौवीरो दान्तः पार्थेन धीमता ॥ २८॥

दान्तवक्त्रमिति ख्यातं पुरं पार्थस्य कर्मणा ।
अमित्रं नाम सौवीरम् अर्जुनोऽमर्दयन्मृधे ॥ २९॥

भीमसेनसहायश्च हत्वा वै मरुधन्वसु ।
प्रतीच्यां समरे राजन् जिगाय भरतर्षभः ॥ ३०॥

अर्जुनस्समरे प्राच्यान् सर्वानेकरथोऽजयत् ।
तथैवैकरथो भूत्वा दाक्षिणात्यान् नराधिपान् ॥ ३१॥

धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ ३२

अतः पञ्चदशे वर्षे सर्वमेतच्चकार सः ॥ ३२॥
तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ॥ ३३

यस्सर्वान् धृतराष्ट्रस्य पुत्रान् विप्रचकार ह ।
भीमसेनो महाबाहुर् बलाद्बलवतां वरः ॥ ३४

अदुष्टभावं तं दोषैर् जगृहुर्दुष्टबुद्धयः ।
धार्तराष्ट्रास्तथा सर्वे भयाद्भीमस्य कर्मणः ॥ ३५

तान् दृष्ट्वा कर्मभिः पार्थान् सर्वानहतलक्षणान् ।
बलाद्बाहुबलात्तेभ्यो बिभियुर्दुष्टबुद्धयः ॥ ३६

ततो बलमभिख्यातं विज्ञाय दृढधन्विनाम् ।
दूषितस्सहसा भावो धृतराष्ट्रस्य पाण्डुषु ॥ ३७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

॥ ७ ॥ संभवपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

[अस्मिन्नध्याये ३७. श्लोकाः]

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

युधिष्ठिरः साम्राज्येऽभिषेक्तव्य इति पौरवार्तां श्रुत्वा व्यथितस्य दुर्योधनस्य पित्रा संवादः ॥ १ ॥

वैशम्पायनः—

प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मतिः ॥ १

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्तैर् जिघांसन्ति स्म पाण्डवान् ॥ २

पाण्डवाश्चापि तत्सर्वं प्रतिचक्रुर्यथाबलम् ।
उद्भावनमकुर्वाणा विदुरस्य मते स्थिताः ॥ ३

गुणैस्समुदितान् दृष्ट्वा जनाः पाण्डुसुतांस्तदा ।
कथयन्ति स्म ते भूयो देशे देशे सभासु च ॥ ४

प्रज्ञाचक्षुरचक्षुष्मान् धृतराष्ट्रो जनाधिपः ।
अशक्तो राज्यकरणे स कथं धारयिष्यति ॥ ५

तथा भीष्मश्शान्तनवः सत्यसन्धो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥ ६

[1]ते वयं पाण्डवज्येष्ठं तरुणं वृद्धदर्शनम् ।
[2]अभिषिञ्चाम साध्वद्य [3]सत्यकारुण्यवेदिनम् ॥ ७

पितामहं शान्तनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर् [4]नियतं वासयिष्यति ॥ ८

[5]तेषां दुर्योधनश्श्रुत्वा तानि वाक्यानि सर्वशः ।

---

1. घ—दुर्योधनस्स्वल्पबुद्धिरर्थलोभादिदूषितः ।
दुष्टैः परिवृतो नित्यं न राज्यं कर्तुमर्हति ॥ [अधिकः पाठः]

2. घ—नीतिशास्त्रार्थतत्त्वज्ञो लोकरञ्जनकर्मणि ।
बुद्धिमान् वृद्धसेवी च सम्मतस्सज्जनैस्तदा ॥
दयादाक्षिण्यसम्पन्नः सत्यवादी शमान्वितः ।
ऋजुर्वदान्यो मतिमांल्लोभक्रोधविवर्जितः ॥
धर्मात्मा धर्मविद्धर्मी धर्मज्ञः प्रियबान्धवः ।
धर्मबुद्धिर्धर्मवृत्तिः मूर्तो धर्म इवापरः ॥
प्रजारञ्जनदक्षश्च प्रजापालनतत्परः ।
एवंविधगुणाचारं सर्वप्राणिमनोहरम् ॥
अभिषिञ्चाम साम्राज्ये सत्यं करुणवेदिनम् ॥ [अधिकः पाठः]

3. क-ख-ग—सत्यं करुणवेदिनम् ।

4. क-ख-ग—मानयिष्यति मानिनम् ।

5. घ—दुर्योधनमुखान् भ्रातॄनात्मवत्परिरक्ष्यति ।
स्ववशस्थैर्महाभागै र्लोकवीरैस्सुदुर्जयैः ॥

युधिष्ठिरानुरक्तानि पर्यतप्यत दुर्मतिः ॥ ९

स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया मुह्यमानस्तु धृतराष्ट्रमुपाद्रवत् ॥ १०

ततो विरहितं दृष्ट्वा पितरं परिगृह्य च ।
पाण्डोर्वृत्तं पूर्वमुक्त्वा पश्चादिदमथाब्रवीत् ॥ ११

दुर्योधनः—

श्रुता मे जल्पतां तात पौराणां चाशिवा गिरः ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ॥ १२

सममेतच्च भीष्मस्य न स राज्यं चिकीर्षति ।
अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः ॥ १३

---

पूर्वतोऽनुवृत्तम्—

अलोलुपैश्चाक्षुद्रैश्च सत्यधर्मपरायणैः ।
त्रैलोक्यवीरैरक्षुब्धै ज्येष्ठाज्ञावशवर्तिभिः ॥
सेव्यमानो दिवारात्रं दयादर्शितविग्रहः ।
एवं चेन्महती कीर्तिः कुरुवंशस्य जायते ॥
पुरूरवसि या कीर्ति नेहुषे च त्रिलोकपे ।
या च या च परा कीर्तिः कुरौ या भरते च या ।
सा कीर्तिरधुना भूयो धर्मपुत्रेऽभिषेचिते ॥

वैशंपायनः—

तेषां दुर्योधनश्श्रुत्वा—

[1]स एष पाण्डवो राजा यदि प्राप्नोत्यसंशयम्।

---

1. घ—तथा जानपदास्सर्वे कुन्तीपुत्रं युधिष्ठिरम्।
राजानमभिषेक्ष्यन्ति पौरजानपदैस्सह ॥
नाभिषेक्ष्यति चेद्राजा धृतराष्ट्रो युधिष्ठिरम्।
राज्येऽभिषिच्याम वयं भीष्मस्यानुमते स्थिताः ॥
धृतराष्ट्रः—
एवं चेन्महती प्रीतिरतुला मे भविष्यति।
नन्दं कुलमिदं भूयः पाण्डुना समुत्थितः ॥
तेनार्जितं धनं राज्यम् अचक्षुरहमात्मज।
राज्यं सुखं च भोगं च मृगयाव्यसनातुरम् ॥
भार्याद्वययुतः पाण्डुः जगाम गहनं वनम्।
तत्रोद्भूताः पाण्डुसुताः कुन्तीमद्रात्मजात्मजाः ॥
मृतः पाण्डु र्वने धीमान् पुनरप्राप्य राष्ट्रकम्।
वने जाता वने वृद्धा अनाथाः पाण्डवास्सुत ॥
वनादानीय ऋषयो याद्व्या सह पाण्डवान्।
समर्पयित्वा भीष्माय पितृपैतामहागतम् ॥
एषां पितार्जितं राज्यम् अंशं प्राप्तं प्रयच्छत।
पार्थेभ्य इति चोक्त्वा ते ह्यर्पयित्वा पुनश्च तान् ॥
मम हस्तेषु तेषु त्वं समं वर्तस्व मामिति।
उक्त्वा ययुस्ते मुनयः पुनरागुस्स्वमाश्रमम् ॥
किं च त्वं शृणु गान्धारे राजलक्षणलक्षितः।
आचारगुणशीलश्च दयादाक्षिण्यपूरितः ॥
किं बहूक्तेन गान्धारे सर्वश्रेष्ठगुणाकरः।
कुलस्य ज्येष्ठपुत्रत्वात् पितार्जितक्रमेण च ॥
सर्वसद्गुणवृत्तत्वात् कौन्तेयो राज्यमर्हति।
किं चैकं शृणु कौरव्य कस्य राज्यं भवेदयम् ॥
तत्त्वतस्ते प्रवक्ष्यामि श्रुत्वा वार्ताश्च वर्त्मनि।
यस्याचारेण लोकोऽयं प्रीणाति सततं सुत ॥
लोकस्य वचस्सु प्रीतिः दया धर्मो धृतिः क्षमा।

सत्यं दानममानित्वं अहिंसाऽऽर्जवमेव च ॥
बुद्धिर्धृतिश्च गाम्भीर्यं स नरो राज्यमर्हति ।
धर्मात्मनि धर्मसुते एते चान्ये गुणास्स्थिताः ॥
न केवलमिदं राज्यं धर्मसूनोऽर्हति क्षितौ ।
त्रिविष्टपस्य राजत्वं धर्मपुत्रोऽर्हति ध्रुवम् ॥
इत्येवं शृणु मद्भावं धर्मपुत्रोऽभिषेक्ष्यति ।
चक्षुष्मान् त्वहं यस्मादतो नास्ति प्रियस्त मे ॥
प्राप्नोतु राज्यं कौन्तेयो भवांस्तदनुमन्यताम् ।
असूयां मा कृथाः पुत्र दृष्टिवत् त्वां स पश्यति ॥
राजेति शब्दं राज्यस्य वहत्वस्य ततस्सुत ।
राज्यं सर्वमशेषेण भुङ्क्ष्व भोगांश्च पुष्कलान् ॥
पञ्चोत्तरशतं पुत्र अन्धस्य मम नो भिदा ।
पाण्डवैस्सह पुत्रत्वम् अशेषैर्भ्रातृभिस्सह ॥
एकीभूय चिरंजीवी निर्भेदो नखमांसवत् ।
भिन्नेषु भर्तृषु स्वेषु भेदं कुर्वन्ति शात्रवाः ॥
गुल्मालतापरिवृताश्चिरं तिष्ठन्ति भूरुहः ।
एकाकी सुमहान् वृक्ष श्छिद्यते काष्ठकाङ्क्षिभिः ॥
वंशस्स्ववंशसंवीतश्चिरं तिष्ठति सस्सुखम् ।
वाय्वादिभ्रातृभिरसौ संक्लिश्यत्यसहायतः ॥
तस्मात् पार्थैस्सहैव त्वं भुङ्क्ष्व भोगाननुत्तमान् ॥

वैशम्पायनः—

इत्थं पितृवचश्श्रुत्वा सर्वलोकसुसंमतम् ।
ऐहिकामुष्मिकं सत्यं गान्धारिः पर्यतप्यत ॥
दीर्घमुष्णं विनिश्श्वस्य भङ्क्त्वा देहं रुषाऽऽकुलः ।
हस्तेन हस्तं निष्पिष्य विवृतास्यो जिजृम्भ ह ॥
रोषातिरेकादरुणया दृष्ट्याऽऽलोक्य दिशो दश ।
दन्तैर्दन्तान् सुसङ्घृष्य घोरां दुर्वाचमुद्गमन् ॥

दुर्योधनः—

एवं चेत्तव पुत्राणां का गतिः कुलवर्धन ॥

तस्य पुत्रो ध्रुवं प्राप्तस् तस्य तस्येति चा परः ॥ १४

ते वयं राजवंशेन हीनास्सह सुतैरपि ।
अ[1]वज्ञाता भविष्यामो लोकस्य जगतीपते ॥ १५

ते वयं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवामं यथा राजंस् तथा शीघ्रं समर्थ्यताम् ॥ १६

अथ त्वमपि राजेन्द्र राजवंशो भविष्यसि ।
ध्रुवं लप्स्यामहे राज्यं वयमप्यवशा जने ॥ १७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

॥ ७ ॥ संभवपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

[अस्मिन्नध्याये १७ श्लोकाः]

---

पूर्वतोऽनुवृत्तम्—

कुतोऽयमीदृशी बुद्धिः स्वपुत्रकुलनाशिनी ॥
वैपरीत्यं भवेत्किं नु तव पुत्रैर्नृपोत्तम ।
वद ते तात मेऽभीष्टं जीविष्याम कथं वयम् ॥
स एष पाण्डवो राज्यं यदि प्राप्नोत्यसंशयः ।
तत्पश्चात्तस्य पुत्रोऽभूत् तत्पुत्रश्चेति चापरः ॥
ते वयं राजवंशेन हीनास्सह सुतैरपि ॥ [अधिकः पाठः]

1. क-ख-ग-घ—वि

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

दुर्योधनस्य पित्रा संवादः ॥ १ ॥

वैशंपायनः—

धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥ १

धर्मवृत्तस्सदा पाण्डुस् सुवृत्तो मयि गौरवात् ।
[1]सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ॥ २

नात्र किंचन जानाति भोजनानि चिकीर्षति ।
निवेदयति तत्सर्वं मयि धर्मभृतां वरः ॥ ३

तस्य पुत्रो यथा पाण्डुस् तथा धर्मपरस्सदा ।
गुणवांल्लोकविख्यातो नगरे च प्रतिष्ठितः ॥ ४

[2]स तथा वर्तमानोऽसौ धर्मसूनुर्यथाऽनुजः ।
[3]राज्यमेष हि संप्राप्तः ससहायो विशेषतः ॥ ५

ते तथा सत्कृतास्तात विषये पाण्डुना नराः ।

---

1. ख—भ्राता हि पाण्डुनाऽमात्यबलं च सततं ध्रुवम् ।
धृताःपुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ [अधिकः पाठः]
2. क-ख-घ—स कथं शक्यतेऽस्माभिरपाकर्षुं नरर्षभः ।
3. क-ग-घ—भ्राता हि पाण्डुनाऽमात्यबलं च सततं धृतम् ।
धृताः पुत्राश्च पौत्रा श्च तेषामपि विशेषतः॥[अधिकः पाठः]

कथं युधिष्ठिरस्यार्थे न नो हन्युस्सबान्धवान् ॥ ६
नैते [1]विषयमिच्छेयुर् धर्म[2]त्यागे विशेषतः ।
ते वयं कौरवेयाणाम् एतेषां च महात्मनाम् ॥ ७
कथं न वाच्यतां तात गच्छेम जगतस्तथा ॥ ७॥

दुर्योधनः—

मध्यस्थस्सततं भीष्मो द्रोणपुत्रो मयि ध्रुवः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥ ८॥
कृपश्शारद्वतश्चैव यत एव वयं ततः ।
भागिनेयं ततो द्रौणिं न त्यक्ष्यति कथं चन[3] ॥ ९॥
[4]क्षत्ताऽर्थबन्धनस्त्वस्मान् पाण्डवार्थे न बाधितुम् ॥ १०
सुविस्रब्धान् पाण्डुसुतान् सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ॥ ११

---

1. क-ख-ग-घ—विषम
2. क-ख-ग-घ—नित्या
3. क-ग—क्षत्ताऽर्थबद्धस्त्वस्मासु प्रच्छन्नस्तु यतः परे ।
   घ—क्षत्ता तु बन्धुरस्मासु प्रच्छन्नस्तु यतः परे । [अधिकः पाठः]
4. क-ग—न त्वेकस्स समर्थोऽस्मान् पाण्डवार्थे प्रबाधितुम् ।
   घ—नैकस्सन् पाण्डवार्थेऽस्मान् समर्थो बाधितुं न हि ।

[1]विनिद्रावरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणा तेन नाशय ॥ १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
आदिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
॥ ७ ॥ संभवपर्वणि एकाशीतितमोऽध्यायः[2] ॥ ८१ ॥
[अस्मिन्नध्याये १२ श्लोकाः]

---

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

---

धृतराष्ट्रादीनां कणिङ्केन दुर्नीत्युपदेशः ॥१॥ जम्बुकोपाख्यानम् ॥२॥

---

वैशम्पायनः—

ततः कणिङ्कमानाय्य धृतराष्ट्रोऽब्रवीदिदम् ॥ ॥

धृतराष्ट्र —

उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूयामि वै सदा ।
तत्र मे सहपुत्रस्य यद्भवेत् क्षेमकारकम् ॥ १॥

कणिङ्क तत् त्वमाचक्ष्व करिष्यामः कथं वयम् ॥ २

वैशंपायनः—

संप्रपन्नाय तस्मै स परिपृष्टोऽर्थचिन्तया ।

---

1. क-ग—निद्राया हरणं ; ख-घ—विनिद्राकरणं
2. क-ग—सप्तसप्ततितमोऽध्यायः ॥
ख-कोशे—अष्टसप्ततितमोऽध्यायः ॥
घ-कोशे—एकोनाशीतितमोऽध्यायः ॥

उवाच वचनं तीक्ष्णं राजशास्त्रनिदर्शनात् ॥ ३

कणिङ्कः—

नित्यमुद्यतदण्डस्यान्नित्यं च कृतपौरुषः ।

न शत्रुरक्षापतितो न मोक्तव्यः कथञ्चन ॥ ४

[1]कण्टको हि दुरुच्छिन्न आस्रावं जनयेच्चिरम् ।

---

1. क-ख-ग-घ—दुर्योधनोऽथ शकुनिः कर्णो दुश्शासनस्तथा ।
कणिङ्कमुपसंगम्य मन्त्रिणं सौबलस्य च ॥
पप्रच्छ भरतश्रेष्ठ पाण्डवान् प्रति नैकधा ।
प्रवृद्धाः पाण्डवा ह्येते नित्यं तेभ्यस्त्रसाम्यहम् ॥
तत मेऽपि सपक्षस्य यद्भवेत्क्षेमकारकम् ॥
कणिङ्क तत्त्वमाचक्ष्व करिष्यामः कथं वयम् ॥

वैशम्पायनः—

संप्रपच्छाय तस्मै स परामृश्यार्थचिन्तया ।
उवाच वचनं तीक्ष्णं राजशास्त्रनिदर्शनम् ॥

कणिङ्कः—

नित्यमुद्यतदण्डश्च नित्यमुद्यतपौरुषः ।
नित्यं च ब्राह्मणाः पूज्या नृपेण हितमिच्छता ॥
सृष्टो नृपो हि विप्रस्य पालने दुष्टनिग्रहे ।
उभाभ्यां वर्धते धर्मो धर्मवृद्ध्या जितावुभौ ॥
लोकश्चायं परश्चैव तस्माद्धर्मं समाचरेत् ।
अच्छिद्रश्छिद्रदर्शी स्यात् परेषां विवरानुगः ॥
नित्यमुद्यत दण्डाद्धि नित्यमुद्विजते जनः ।
तस्मात्सर्वाणि भूतानि दण्डेनैवाभिपालयेत् ॥
कृतापराधं पुरुषं दृष्ट्वा यः क्षमते नृपः ।
तेनावमानमाप्नोति पापं चेह परत्र च ॥
यो विभूतिमवाप्योच्चै राज्ञो विकुरुते मनः ।

वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ॥ ३

[1]निरुद्विग्नो हि भवति हत्वा च रिपुमोजसा ॥ ३॥

हन्यादमित्रं दण्डेन हन्यात् पूर्वापकारिणम् ।
हन्यात् त्रीन् पञ्च सप्तेति परपक्षस्य सर्वशः ॥ ४॥

[2]कुलमेवादितश्छिन्द्यात् परपक्षस्य नित्यशः ।
ततोऽस्यानन्तरं पश्चात् छिन्द्यात् सर्वानशेषतः ॥ ५॥

छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं नु शाखास्तिष्ठेयुश् छिन्नमूले वनस्पतौ ॥ ६॥

सुविक्रान्तं सुविस्तीर्णं सुयुद्धं सुपलायनम् ।
आपदामथ कालेषु कुर्यान्नात्र विचारणा ॥ ७॥

---

पूर्वतोऽनुवृत्तम्—

समानयित्वा दत्वा च दद्याद्दीनाय लङ्घनम् ॥
ये चेद्धुरि नियुक्ता ये स्थास्यन्ति वशमात्मनः ।
राज्ञा नियुञ्ज्यात् पुरुषानाप्तान् धर्मार्थकोविदान् ॥
ये नियुक्तास्तथा केचिद्राष्ट्रं वा यदि वा पुरम् ।
ग्रामं जनपदं वापि बोधेयु र्यदि वा न वा ॥
परीक्षणार्थं विसृजेदानलाञ्छन्नरूपिणः ।
परीक्ष्य पावकं जह्याद्धनमादाय सर्वशः ॥
नास्य च्छिद्रं नरः पश्येच्छिद्रेण परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
नासम्यक्कृत्यकारी स्यादुपक्रम्य कदाचन ॥
[अधिकः पाठः]

1. घ—विषदन्तस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ [अधिकः पाठः]

2. क-ख-ग-घ—मूल

कथं नु परियास्यामो न च ज्ञायामहे वयम् ।
दातृत्वेन [1]ग्रहीष्यामो भेदतो दण्डतोऽपिवा ।। ८।।
अन्धस्स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ।
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।। ९।।
एकत्र वाऽपि वसतो नित्यं विवरदर्शितम् ।
राजन्याक्षत्रसंपन्नो नित्योद्विग्नस्ततो भवेत् ।। १०।।
अग्न्याधानेन यज्ञेन [2]काषायधरणेन च ।
लोकं प्रस्नापयित्वा च तथा लुम्पेद्यथा वृकः ।। ११।।
अङ्कुशं शौचमित्याहुर् अर्थानामुपधारणे ।
आनाम्य फलिनीं शाखां पक्वं पक्वं प्रशातयेत् ।। १२।।
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
ततः काल उपादाय भिन्द्याद्घटमिवाश्मनि ।। १३।।
[3]अमित्रस्तु न मोक्तव्यः कृपणं बह्वपि ब्रुवन् ।

---

1. क-ख-घ—गृहीताश्च नच पृच्छेम कर्हिचित् ।
2. क-ख-ग-घ—काषायाभ्यञ्जनाजिनैः ।
3. घ—उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ।
क्रुद्धोप्यक्रुद्धरूपस्स्यात् स्मितपूर्वाभिभाषिता ।।
न चैनं क्रोधसन्दीप्तं विद्यात् कश्चित् कथञ्चन ।
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।।
प्रहृत्य च कृपायेतच्छोचन्नित च रुदन्निव च ।
आश्वासये च्चैव परं सामधर्मार्थवृत्तिभिः ।।
अथ तं प्रहरेत् काले तथा विचलितं पथि ।। [अधिकः पाठः]

दुःखं तस्मिन्नकर्तव्यं विध्यादेवापकारिणम् ॥ १४॥

हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ।
तथा भेदेन दण्डेन सर्वोपायैः प्रमापयेत् ॥ १५॥

धृतराष्ट्रः—

कथं सान्त्वेन दानेन भेदैर्दण्डैरथापि च ।
अमित्रश्शक्यते हन्तुं तन्मे ब्रूहि यथातथम् ॥ १६॥

कणिङ्कः—

शृणु राजन् यथा वृत्तं वने वसति जम्बुकः ।
सखायस्तस्य व्याघ्रश्च वृको नकुलमूषिकौ ॥ १७॥

ते पश्यन्ति वने तस्मिन् बलिनं मृगयूथपम् ।
अशक्ता ग्रहणे तस्य ततो मन्त्रमकुर्वत ॥ १८॥

जम्बुकः—

असकृद्यतितो ह्येष हन्तुं व्याघ्र त्वयाऽनघ ।
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ॥ १९॥

मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ।
अथैनं भक्षितैः पादैर् मृगं व्याघ्रो हनेत्तदा ॥ २०॥
ततस्तं भक्षयिष्यामः सर्वे मुदितमानसाः ॥ २१

कणिङ्कः—

जम्बुकस्य तु ते वाक्यं तथा चक्रुस्समाहिताः ।
मूषिकाभक्षितैः पादैर् मृगं व्याघ्रोऽहनत्तदा ॥ २२

जम्बुकः—

स्नात्वाऽऽगच्छत भद्रं वो रक्षामि मृगयूथपम् ॥ २२॥

वैशम्पायनः—

शृगालवचनात्ताऽपि गतास्सर्वे नदीं ततः ।
स चिन्तयानो मनसा मांसतृप्तिं पुनः पुनः ॥ २३॥

अथागच्छत्तु पूर्वं हि स्नात्वा व्याघ्रो महाबलः ।
जम्बुकश्च भवत्तत्र तदा चिन्ताकुलो नृप ॥ २४॥

व्याघ्रः—

किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
पिशितस्याशितारोऽत्र विहरिष्यामहे सुखम् ॥ २५॥

जम्बुकः—

शृणु मे त्व महाप्राज्ञ यां वाचं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाऽद्यायं मृगो हतः ॥ २६॥

मद्बाहुबलमाश्रित्य तृप्तिर्यस्य भविष्यति ।
तस्यैवं गदतस्त्वद्य ततो भक्ष्यं न रोचये ॥ २७॥

व्याघ्रः—

यद्येवमब्रवीत् सोऽस्मान् काले चास्म्यवबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥ २८॥
खादिष्यामि च मांसानि हीत्युक्त्वा प्रस्थितो वनम् ॥ २९

कणिङ्कः—

एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥ २९॥

जम्बुकः—

शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ।
मृगमांसं न खादेयं [1]सख्यमस्माद्विधस्य तत् ॥ ३०॥
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥ ३१

कणिङ्कः—

तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्राद्रवद्भयात् ।
ततस्तस्मात्तदा तत्र आजगाम वृको नृप ॥ ३२

जम्बुकः—

मृगराजो हि संक्रुद्धो न नस्साधु भविष्यति ।
सकलत्रस्समायाति कुरुष्व यदनन्तरम् ॥ ३३

कणिङ्कः—

एवं संचोदितस्तेन जम्बुकेन तदा वृकः ।
[2]भीतोऽवलिप्तं कृत्वाऽथ प्रयातः पिशिताशनः ॥ ३४
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ।
तमुवाच ततो राजन् नकुलं जम्बुको वने ॥ ३५

जम्बुकः—

स्वबाहुबलमाश्रित्य निर्जितास्ते समागताः ।
मम दत्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ॥ ३६

---

1. क-ख-ग—कथम
2. अ—हिते स लुप्तं क्षुत्वाऽथ प्रयाताः पिशिताशनाः ।

नकुलः—

मृगराजो वृकश्चैव बुद्धिमांश्चैव मूषिकः ।
निर्जितो वै त्वया वीर तस्माद्वीरतरो भवान् ॥ ३७
नाहमप्युत्सहे योद्धुम् इत्युक्त्वा गां विवेश ह ॥ ३७॥

कणिङ्कः—

एवं तेष्वपयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसम् इत्येवं मन्त्रनिश्चयात् ॥ ३८॥
[1]एतत्ते कथितं राजन् शृणु चाप्यपरं नृप ॥ ३९
पुत्रस्सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
अर्थे पर्यवतिष्ठेरन् [2]कर्तव्या भूमिवर्धनाः ॥ ४०
शपथेनाप्यरिं हन्यान्नदोष इति भार्गवः ।
उभौ यदि शपेयातां श्रद्धानस्तु वध्यते ॥ ४१
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ ४२
क्रुद्धोऽप्यक्रुद्धरूपस्स्यात् छुक्लः पूर्वाभिभाषिता ।
न चैनं क्रोधसंदीप्तं विद्यात् कश्चित् कथंचन ॥ ४३

---

1. क-ख-ग-घ—भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन सख्याच्चैव समौजसम् ॥
[अधिकः पाठः]

2. क-क-ग—हन्तव्या भूरिवर्धनैः

प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि [1]भारत ।
प्रहृत्य च प्रियं ब्रूयाच्च् छोचन्निव रुदन्निव ॥ ४४

आश्वासयेच्चैव परं सामदानादिवृत्तिभिः ।
अथ तं प्रहरेत् काले तथा विचलितं पथि ॥ ४५

अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।
[2]स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ॥ ४६

यस्य स्यात्तु [3]वधस्तस्य नास्त्यगारोपदीपनम् ।
अधनान् भिक्षुकं चोरान् विषकर्मसु योजयेत् ॥ ४७

प्रत्युत्थानासनाद्येन संप्रदानेन केन चित् ।
प्रतिप्रस्कन्नघाती स्यात् तीक्ष्णदंष्ट्र इवोरगः ॥ ४८

अशङ्कितेभ्यश्शङ्केत शङ्कितेभ्यश्च सर्वदा ।
अशङ्क्याद्भयमुत्पन्नम् अपि मूलान्निकृन्तति ॥ ४९

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वस्तः क्षयमाप्नोति तस्मात्सर्वं न विश्वसेत् ॥ ५०

चारास्सुविहिताः कार्या आत्मनश्च परस्य च ।
पाषण्डब्राह्मणादींश्च परराष्ट्रेषु योजयेत् ॥ ५१

---

1. क-ख-ग—भूमिप
2. क-ख-ग—अपि प्रच्छाद्यते दोषो घनैरर्क इवासितैः ।
3. क-ख-ग-घ—व धः प्राप्तस्तस्यागारोपदीपनम्

[1]उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु वेशेषु चत्वरेषु सभासु च ॥ ५२

ब्राह्मणायतने द्यूते पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥ ५३

वाचा भृशं विनी[2]तस्स्याद्धृदयेषु तथा क्षुरः ।
शुक्ष्णं पूर्वाभिभाषी स्यात् सृष्टो रौद्राय कर्मणे ॥ ५४

अञ्जलिश्शपथस्सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येतत् कर्तव्यं भूतिमिच्छता ॥ ५५

सुपुष्पितस्स्यादफलः दुरारोहः फलान्वितः ।
आमस्स्यात् पक्वसङ्काशो न च जीर्येत कस्य चित् ॥ ५६

त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च ।
अनुबन्धांस्तु सेवेत पीडास्तु परिवर्जयेत् ॥ ५७

धर्मोऽतिचरितः पीडां सह द्वाभ्यां निगच्छति ।
अर्थश्चाप्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ॥ ५८

अगर्वितात्मा युक्तश्च शान्तियुक्तो न चेच्छुकः ।

1. क-ख-ग—स्वराष्ट्रे विदितांश्चारान् परीक्षार्थे मुहुर्मुहुः ।
स्वकीयान् वीर दोषेषु रक्षार्थं विसृजेन्नृप ॥
नृपः— [अधिकः पाठः]

2. क-ख-ग-घ—तश्च हृदयेन तदा

[1]अवेक्षितात्मा शुद्धात्मा मन्त्रयेत द्विजैस्सह ॥ ५९

मृदुना केनचिद्राजन् कर्मणा दारुणेन वा ।
[2]उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ६०

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं [3]तु समारुह्य यदि जीवति पश्यति ॥ ६१

[4]अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ।

वैरिणा सन्धिमास्थाय शयीत कृतकृत्यवत् ॥ ६२
स वृक्षाग्रे यथा सुप्तः पतन्नेव विबुध्यते ॥ ६२॥

मंत्रसंवरणे यत्नस् सदा कार्योऽनसूयता ।
आकार आत्मनो रक्ष्यश् चारेणाभ्यनुपालितः ॥ ६३॥

[5]नाच्छित्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।

---

1. क-ख-ग—आशाकृताप्ययुक्तश्च सान्त्वशीलो न चोज्ज्वलः ।
[अधिकः पाठः]
2. क-ख-ग—तृतीयेन नचान्येन व्रजेन्निश्चयमापदि । [अधिकः पाठः]
3. क-ख-ग—पुनरारुह्य यदि जीवति वा न वा ।
4. घ—यस्य बुद्धिः परिभवेत् तमतीतेन सान्त्वयेत् ।
अ—यं सुबुध्या परिभवेत् तमतीतेन सान्त्वयेत् ।
ख—ऋजुबुद्धिं परिभवेत् तमतीतेन सान्त्वयेत् ।
5. क-ख-ग—न रात्रौ मन्त्रयेद्विद्वान् न च कैश्चिदुपासितः ।
प्रासादाग्रे शिलाग्रे वा विशाले विजनेऽपि वा ॥

[1]नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ ६४॥
कर्शितं [2]व्याधितं श्रान्तम् अपनीतमनायकम् ।
परिविश्वस्तमल्पं च प्रहर्तव्यं रिपोर्बलम् ॥ ६५॥
नानर्थकेऽर्थबन्धोऽस्ति कृतार्थे नास्ति सङ्गतम् ।
तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ ६६॥

---

पूर्वतोऽनुवृत्तम्—

समन्तात् तत्र पश्यद्भिस् महाप्रैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकाम् ॥
शुकान् वा शारिकां वापि बालमूकजडानपि ।
प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ॥
नीतिज्ञैर्न्यायशास्त्रज्ञैर् इतिहासेषु निष्ठितैः ।
रक्षामन्त्रस्य निस्तारं मन्त्रान्ते निश्चयेद् बुधः ॥
वीरोपवर्णितं यत्तद् धर्मार्थाभ्यामथात्मना ।
एकेन वाऽथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ॥
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णश्छिद्यते मन्त्र इति नीतिषु पठ्यते ॥
निस्सृतो नाशयेन्मन्त्रो ह्यप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च संविचार्य पुनः पुनः ॥
गुणवद्वाक्यमादद्यान्नैव कुप्येद्विचक्षणः ।
आकारं चात्मनो रक्ष्यं चारयोग्यं च सर्वदा ॥
[अधिकः पाठः]

1. क-ख-ग—प्राप्नोति महतीं लक्ष्मीं नाहत्वा मत्स्यबन्धनः ।
2. क-ख-ग—तृषितं शान्तं विपरीतं

संग्रहे [1]विग्रहे चैव यत्नः कार्योऽनसूयता ।
[2]निग्रहः कालयुक्तश्च कर्तव्यो भूतिमिच्छता ॥ ६७॥

नास्य कृत्यानि पश्येयुर् मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येयुस् सुपर्यवसितानि च ॥ ६८॥

भीतवत् संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ६९॥

दैवतोपहतं शत्रुं प्रगृह्णाति च यो नृपः ।
[3]स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ७०॥

अनागतं च बुध्येत यच्च कार्यमुपस्थितम् ।
न तु बुद्धिक्षयात्किंचिद् अतिक्रान्त[4]मवेक्ष्यते ॥ ७१॥

उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ तु सेव्या धर्मादयस्त्रयः ॥ ७२॥

[5]निश्श्रेयसाय ते ज्ञेया इह चामुत्र च स्थिताः ।
बलवत् कुरुते रूपं बाल्याच्छत्रुरुपेक्षितः ॥ ७३॥

---

1. क-ख-ग-घ—निग्रहे 2. क-ग-घ—विग्रहः
3. घ—तत्कालोपचयोद्योगे दृष्ट्वा हन्यान्न संशयः । [अधिकः पाठः]
4. क-ख-ग-घ—मपेक्षयेत् ।
5. क-ख-ग—निश्श्रेयसा हि तौ ज्ञेयाविहचामुत्र च स्थितौ ।
घ—श्रेयसे च स ते ज्ञेया इह चामुत्र चास्थिराः ॥

गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ।
अग्निं स्तोकमिवात्मानं सन्धुक्षयति पण्डितः ॥ ७४॥
स वर्धमानो ग्रसते महान्तमपि संचयम् ॥ ७५
आदावेव ददानीति प्रियं ब्रूयान्निरर्थकम् ।
आशां कालवतीं कुर्यात् कालं विघ्नेन योजयेत् ॥ ७६
विघ्नं निमित्ततो ब्रूयान्निमित्तानि च हेतुतः ॥ ७६॥
क्षुरो भूत्वा दहन्नेव निशितः कालचारतः ।
प्रच्छन्नो रोमवापी स्याद् द्विषतां चावकर्तनः ॥ ७७॥
[1]पाण्डवांश्च तथा राजन् अन्यांश्चापि गुरून् प्रति ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥ ७८॥
न हि कुर्यात् समुत्सन्नान् विनष्टा इति निश्चयम् ।
तस्मात् त्वमपि पुत्रेभ्यो रक्षाऽऽत्मानं नराधिप ॥ ७९॥
भ्रातृव्या बलवन्तस्ते पाण्डुपुत्रा नराधिप ।
ब्रवीमि तस्माद्विस्पष्टं यत्कर्तव्यमरिन्दम ॥ ८०॥

---

1. घ —आत्मलोभार्थकारी स्याद् यो नरो भुवि भूपते ।
पुत्रं वा यदि वा पौत्रं भ्रातरं भ्रातृसन्निभम् ।
गुरुं मित्रं च सुहृदं सुखेप्सुः परिवर्जयेत् ॥　[अधिकः पाठः]

वैशंपायनः—

एवमुक्त्वा संप्रतस्थे कणिङ्कस्स्वगृहं ततः ।

तदा सपुत्रो राजा च शोकार्तस्समपद्यत ॥ ८१॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ ७ ॥ संभवपर्वणि द्व्यशीतितमोऽध्यायः[1] ॥ ८२ ॥

॥ संभवपर्व समाप्तम् ॥

[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

अतःपरं जतुगृहदाहपर्व भविष्यति

तस्यायमाद्यः श्लोकः—

वैशम्पायनः—

कणिङ्कस्य मतं ज्ञात्वा कार्त्स्न्येन भरतर्षभ ।

दुर्योधनश्च कर्णश्च शकुनिस्सौबलस्तथा ॥

इति

---

1. क-कोशे-ग-कोशे च—अष्टसप्ततितमोऽध्यायः ।
ख-कोशे—एकोनाशीतितमोऽध्यायः ।
घ-कोशे—अशीतितमोऽध्यायः ।

॥ श्रीरस्तु ॥

# महाभारतस्य आदिपर्वप्रथमसम्पुटस्थानां विषयाणाम्

## अक्षरमातृकाक्रमेण सूचनम्

॥ श्रीरस्तु ॥

# ॥ अशुद्धशोधनम् ॥

यत्र यत्राचः पूर्वं हलः पूर्वं वा अनुस्वारो दृश्यते तत्र तत्रानुस्वारस्थाने पवर्गपञ्चमः (म्) तद्वर्गपञ्चमो वा इति ज्ञेयम् ॥

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| १२ | पा* | १९ | अधायिरे | अधीयिरे |
| १९ | १०४ | ७ | कुच्छ्रां | कृच्छ्रां |
| २२ | १३२ | १२ | भीष्म | भीष्मं |
| २५ | १४८ | १ | सहस्रे | सहस्रै |
| ३४ | १९० | ४ | दुःशासनं | दुश्शासनं |
| ३७ | २०८ | १६ | अस्मिलोके | अस्मिँल्लोके |
| ५२ | ७७ | ७ | जन्मोच्चैः श्रव | जन्मोच्चैश्श्रव |
| ५८ | १२९ | ४ | पुत्रार्थमजयद्राजा | पुत्रार्थमयजद्राजा |
| ५८ | १३० | ७ | वयः | वधः |
| ८० | ५० | १३ | पिबंति | पिबति |
| ८९ | ११७ | ९ | संन्निहिता | सन्निहिता |
| १०१ | पा | २१ | वक्ष्यामि | वक्ष्यासि |
| ११२ | ३ | ८ | भवत् | भवः |
| ११२ | ६॥ | १६ | विप्रर्षेर् | विप्रर्षे |

* पाठभेदभागे (Footnote)

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ११५ | पा | १८ | निभक्षणा | निभेक्षणा |
| १२० | — | १ | डुन्डुभः | डुण्डुभः |
| १२० | ३५ | ९ | तथा वीर्यो | तथावीर्यो |
| १२२ | ५४॥ | १४ | सो ऽस्तिकस्य | सोऽस्तीकस्य |
| १२५ | ९ | ६ | मूषिकेन | मूषिकेण |
| १३० | ६ | ७ | पितमह | पितामह |
| १३१ | १२ | १ | गर्भौ इत्युक्त्वा | गर्भाविस्युक्त्वा |
| १३४ | १३ | १२ | सर्वोषधीः | सर्वौषधीः |
| १४७ | वि* | १२ | क्वद्रू | कद्रू |
| १५६ | पा | १९ | पिबत् | पिबन् |
| १५९ | पा | १८ | मासा | मासाः |
| १६३ | १०॥ | ३ | सर्पान् तेन | सर्पांस्तेन |
| १८४ | ६ | ८ | तेनावकीर्णो | तेनावकीर्णा |
| १८७ | — | ६ | सप्तदशोऽध्यायः १७ | षोडशोऽध्यायः १६ |
| १८८ | ८ | ८ | पंयकालयत् | पर्यकालयत् |
| १९८ | २ | १ | शेषः | शेषस् |
| २०९ | पा | १८ | नागरजो | नागराजो |
| २१३ | ११॥ | ८ | बोणन | बाणेन |
| २२४ | ३१ | ७ | ब्राह्यणान् | ब्राह्मणान् |
| २४१ | ७ | २ | कूर्मं पराध्यों | कूर्मं पराध्यों |
| २४८ | पा | १८ | शौनक | शौनकः |

* विषयसूचिकायाम्

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| २५२ | २४॥ | २ | वयस्थश्च | वयस्स्थश्च |
| २५३ | वि | १ | परीक्षिन्मन्त्रिसंवादः | जनमेजयमन्त्रिसंवादः |
| २५८ | ३९॥ | २ | द्दष्ट्वा च | दृष्ट्वा च |
| २६० | १३ | १६ | विधिवत् | विधिवद् |
| २७२ | ३९ | १३ | शिष्या | शिष्याः |
| २७८ | १९॥ | १५ | तीव्रन्निश्वासान् | तीव्रान्निश्वासान् |
| २८२ | ११ | ४ | श्रुणु | शृणु |
| २८२ | १३ | ७ | श्रुणु | शृणु |
| २९१ | ३१ | १७ | तद्वचन | तद्वचनं |
| २९६ | ३३ | १२ | वसुन्धराम् | वसुन्धरा |
| ३३१ | पा | ८ | श्रोतस्यैव | श्रौतस्यैव |
| ३३१ | पा | ११ | ग्धर्मा | ग्धर्म |
| ३५० | ३ | १० | क्रमेणेयं | क्रमेणेमां |
| ३६३ | ६०॥ | १७ | ऽवजायत | ऽयजायत |
| ३६५ | ७४ | ८ | पुथक् | पृथक् |
| ३७१ | ४० | ४ | प्रथिव्यां | पृथिव्यां |
| ३७४ | ६८॥ | ८ | बृहत्कीर्तिर् | बृहत्कीर्तेर् |
| ३७७ | ९४॥ | ५ | राजं | राजन् |
| ३८० | पा | १५ | तेजोदुर्बल | तेजोपुर्बल |
| ३८५ | ४३॥ | १६ | परिहीनो | परिहीणो |
| ३९८ | ६८ | २ | पापां लोकांस्ते | पापाँल्लोकांस्ते |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ४१२ | १३ | ७ | विफथं | विपथं |
| ४१४ | वि | २ | शर्मिष्ट्या | शर्मिष्ठया |
| ४२३ | २८॥ | ८ | नाहुषाऽयं | नाहुषायं |
| ४२४ | ३६॥ | ९ | ब्रह्मकल्प | ब्रह्मकल्प |
| ४२४ | ३९ | १४ | पृथवी | पृथिवी |
| ४३१ | ४१ | ९ | भार्गवि | भार्गवी |
| ४३१ | — | २ | वैशम्पायनः— | शर्मिष्ठा |
| ४४२ | ५ | २ | दीना | दीनो |
| ४५६ | १८ | ३ | ह्यलक्ष्मी | ह्यलक्ष्मी |
| ४५९ | ११ | १२ | समानुरूप | समानरूप |
| ४६२ | ९ | १० | स दैव | सदैव |
| ४७२ | १ | १६ | संनिविष्टो | सन्निविष्टः |
| ४८५ | १३ | ५ | कस्येतै | कस्यैते |
| ४८९ | ४१॥ | ६ | सर्वथ | सर्वथा |
| ४८९ | ४४॥ | १९ | कोतुकादि | कौतुकादि |
| ४९१ | ५१ | ५ | लभेन्नरस्सर्व | लभेन्नरस स |
| ४९२ | ७ | १२ | वसुनाभ च | वसुनाभं च |
| ५०० | १॥ | १ | मालोकयामास | मालोडयामास |
| ५०२ | २४ | ९ | त च | तं च |
| ५०४ | ४१॥ | १२ | अथर्वभिः ऋ | अथर्वभिर्ऋ |
| ५०८ | १२॥ | ३ | भगवां भद्रे | भगवान् भद्रे |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
| --- | --- | --- | --- | --- |
| ५१२ | ४८ | १४ | कथमाक्ष्यति | कथं मोक्ष्यति |
| ५२१ | २१ | ९ | मम जायते | मम जायेत |
| ५२४ | ४५ | ९ | ऽशक्रोद् | ऽशाक्रोद् |
| ५३१ | २६ | ८ | महावल्: | महाबलः |
| ५३१ | पा | १७ | आरुराहे | आरुरोह |
| ५३८ | ८०॥ | ५ | द्वतीय | द्वितीय |
| ५४२ | ११३॥ | ४ | पिपासार्दिंतान् | पिपासार्दितान् |
| ५४८ | ४५॥ | १२ | मावमंस्था | मावमंस्थाः |
| ५५० | पा | १८ | यनि | यानि |
| ५५१ | ६९ | ९ | स्वदारांस्तुष्यभित | स्वदारांस्तुष्यन्ति |
| ५६४ | वि | ३ | तद्वंऽकथनं च | तद्वंशकथनं च |
| ५६९ | पा | २० | दंत्त्वा | दत्त्वा |
| ५७१ | ५२ | २ | मुचकथ्यं वै | मुचकथ्यो वै |
| ५७२ | ६१ | ६ | जन्ह्णोः | जह्नोः |
| ५८३ | ११॥ | ६ | वामोरुं | वामोरु |
| ५९७ | २६ | ११ | कंथचन | कथञ्चन |
| ५९९ | ४४॥ | ११ | सर्वान् जगाम | सर्वान् जगाम |
| ६१५ | ७३ | १३ | भामिनीं | भामिनीम् |
| ६१७ | ११॥ | १९ | नद्या | नद्याः |
| ६२१ | २१ | ११ | समुत्पतु | समुत्पेतु |
| ६२३ | ३५॥ | ३ | अमहाबाहुः | महाबाहुः |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ६२९ | ९१ | ११ | नाहमुद्वाहयष्ये | नाहमुद्वाहयिष्ये |
| ६३३ | १६॥ | ११ | स्रज | स्रजं |
| ६४० | ५ | १९ | निशाम्य | निशम्य |
| ६४२ | १५ | २ | औचभ्ये | औचभ्यो |
| ६४५ | ४३ | १० | पृत्राने | पुत्राने |
| ६४५ | ४४ | १३ | मैमत | ममैत |
| ६५८ | ५४ | ९ | बुद्धिं | बुद्धि |
| ६६५ | पा | १७ | इत्यूक्त्वा | इत्युक्त्वा |
| ६७३ | पा | १९ | ग—यूप | घ—यूप |
| ६७३ | पा | २० | ग—परि | घ—परि |
| ६७७ | पा | २० | इदमन्वितम् | इदमनन्वितम् |
| ६७७ | ४७ | १७ | गान्घारी | गान्धारी |
| ६८२ | पा | ८ | कुन्ति | कुन्ती |
| ६८५ | ३४॥ | ९ | शक्रोऽम्यवमन्त्रणे | शक्रोम्यवमन्त्रणे |
| ६८७ | ५॥ | १५ | भीप्मः | भीष्मः |
| ६९१ | ३६ | ४ | संतत | सततं |
| ६९७ | १५ | १८ | त्यक्तं नित्यं | त्यक्तुं नित्यं |
| ७०८ | २४ | १८ | नाते | नोत |
| ७४० | ९॥ | १५ | पुत्र | पुत्रं |
| ७४० | १० | १६ | सुहृद्व्यश्च | सुहृद्व्यश्च |
| ७४७ | ६३ | ९ | स्त्वेनम् वस्त्रेण | स्त्वेनं वस्त्रेण |

| पृष्ठम् | पङ्क्तिः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ७४८ | ७०॥ | ३ | वर्वन्ते | वर्तन्ते |
| ७४९ | वि | ११ | शुक्राद् | शुकाद् |
| ७५९ | १४॥ | ४ | बहूभिः | बहुभिः |
| ७६३ | ४ | ६ | शुक्रः | शुकः |
| ७८३ | पा | २० | सर्वांस्ताः | सर्वास्ताः |
| ७८८ | १४ | ५ | मध्यमं | मध्यमः |
| ७९० | ३२ | ८ | भुङ्क्त्वा | भुक्त्वा |
| ७९३ | पा | १८ | भक्ष्यानि | भक्ष्याणि |
| ७९३ | पा | १८ | भोज्यापूपाणि | भोज्यापूपानि |
| ७९५ | ३२॥ | ७ | संवृत्तः | संवृत्तश् |
| ७९७ | ५० | १० | वरोचितः | वने चितः |
| ७९८ | पा | १९ | [1]— | [1] घ—कोशे |
| ८०३ | पा | १२ | साक्षात् | साक्षाद् |
| ८१२ | पा | १९ | अङ्गलीयं | अङ्गुलीयं |
| ८१४ | १३ | ३ | वेत्स्यामीषिकया | वेत्स्यामीषीकया |
| ८१९ | ५० | ३ | अब्रुवं | अब्रवम् |
| ८१९ | पा | २१ | मुदीर्णनां | मुदीर्णानां |
| ८२० | पा | २३ | बुद्ध्या | बुद्ध्या |
| ८४७ | पा | १८ | सिह्म | सिंह |
| ८५५ | १ | २० | प्राणस्ख | प्राणस्ख |
| ८५७ | पा | २३ | दुयोंधनः | दुर्योधनः |

| पुटम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ८६० | १ | ८ | प्रसमीऽक्ष्यतु | प्रसमीक्ष्य तु |
| ८६० | पा | २१ | पञ्चवदनोः | पञ्चवदनो |
| ८६१ | पा | ११ | सोऽभिद्रुताद्धरं | सोऽभिद्रुतो हरं |
| ८६५ | २५॥ | १२ | विंकर्णं | विकर्णं |
| ८७२ | पा | १० | अङ्गुलं | अङ्गुलिं |
| ८७२ | पा | २३ | धाष्टर्यं | धाष्टर्यं |
| ८८० | ३०॥ | ६ | द्रोणस्तस्था | द्रोणस्तथा |
| ८८० | पा | १५ | स्याद्द्रोण | स्याद्द्रोण |
| ८८७ | पा | २१ | नैपुष्यं | नैपुण्यं |
| ८८८ | १३ | १० | च्चाद्रांत | च्चाद्रात् |
| ८८९ | १७॥ | ३ | सङ्गान् | साङ्गान् |
| ८९२ | पा | २० | पुन र्यानवा | पुनर्मानवा |
| ८९८ | १० | ३ | मुपाद्रवत् | मुपाद्रवत् |
| ८९९ | पा | ८ | सुसमुत्थितः | सुसमुत्थितम् |
| ९०० | पा | २३ | गान्धारिः | गान्धारिः |
| ९०० | पा | २५ | जिजृम्भ | जजृम्भ |
| ९०३ | ६ | १ | हस्युम्स | हन्युस्स |
| ९०४ | — | ११ | धृतराष्ट्र | धृतराष्ट्रः— |
| ९०६ | ५॥ | ६ | पक्षान् छिन्द्यात् | पक्षांश् छिन्द्यात् |
| ९१२ | ५१ | १८ | ब्राह्मणा | ब्राह्मणा |
| ९१५ | पा | १८ | मन्त्रो | मन्वो |

Printed by V. Ramaswamy Sastrulu & Sons at 'Vavilla' Press, Madras.